श्रायतां गौरीपरिवृढः ।

## प्रास्ताविकं किंचित् ।



अयि संख्यावत्प्रवरा आनन्दाश्रमप्रकाशितग्रन्थपङ्केरुहमकरन्दसंदोहसेवनगुञ्जदिन्दिन्दिराः—प्रमोदन्ता श्रीमतां चेतांसि, यच्चिरस्य खलु कालस्य संमुद्रणावस्थाया स्थितस्य सद्वृत्तिकस्याद्ययावत्काप्यनङ्कितस्य श्रीसत्याषाढसूत्रस्य दशमो ( चरमः ) भागः प्रत्नदुर्लभशास्त्रीयग्रन्थरत्नप्रकाशनैकयत्नवशंगतया संस्थया यौष्माकीणे करकमले सादरं समर्प्यत इति ।

महोदयाः सागराम्बरामण्डलमध्यवर्तिनि कस्मिन्नपि जनिभृन्मात्रे निधीयतां दृष्टिस्तर्हि स खलु सुखं संचिकाङ्क्षिषन्दुःखं च परिजिहीर्षन्नेव श्रीमद्भिः समवलोक्येत । हन्त पर किं नाम सुखं कथंकारं च तल्लभ्येतेति न पुनः कोऽपि निपुणमन्वेषिषिषति । सकलैश्वर्यात्मकमैहिकं स्वर्गलोकप्राप्तिरूपं पारलौकिकं तदुभयान्यतरज्जानिमृतिनिवर्तकं मुक्तिस्वरूपात्मकं वा किंचिदपि सुखं वर्तितां, तत्कर्हिचिदपि नूनमृते स्वधर्माचरणं न प्राप्नोतीति 'धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति' 'धर्मात्सुखं च ज्ञानं च' 'न जातु कामान्न भयान्न लोभात्०' इत्यादिश्रुतिस्मृतिसूत्रादिभिः समस्वरं जोघुष्यमाणो राद्धान्तः ।

एतावता सुखस्य पुनर्निर्विचिकित्सतया स्वधर्मसाध्यत्वे सिद्धे किंस्वरूपो धर्म इति बलवदाकाङ्क्षायां धर्मलक्षणं मीमांसितव्यं भवति । तत्र 'चोदनालक्षणोऽर्थो धर्मः' इति मीमांसकाः । 'विहितकर्मजन्यो धर्मः' इति तार्किकाः । 'यद्योगेनाऽऽत्मदर्शनम्' इति वेदान्तिनः । 'आचारः परमो धर्मः' 'इष्टप्रापको धर्मः' एवमादीनि पुरुहूणि पुनरेकदेशीनि धर्मलक्षणानि चक्षुष्पथमवजागाहति ।

एतेषु सकलेष्वपि पक्षेषु 'इष्टप्राप्त्यनिष्टपरिहारालौकिकोपायो धर्मः' इत्येव शिष्टसंमतं धर्मलक्षणं भवितुमर्हति । स च धर्मस्तु श्रुतिमूलकः । 'वेदोऽखिलो धर्ममूलम्' 'अतः स परमो धर्मो यो

वेदादधिगम्यते ' इत्यादिमनुव्यासादिस्मरणात् । सिद्धे च सकलसुखैकनिदानस्य स्वधर्मस्य श्रुतिगम्यत्वे श्रुत्यर्थस्य च नूनमेकान्ततः सुदुरूहतया धर्मरहस्यमाधिजिगमिषूणां शरीरभाजां तदवबोधः पुनरगम्यप्राय एवेत्युक्तिर्न खलु समाटीकेतात्युत्कोटिम् ।

अनन्तः किलायं श्रुतिवचसा राशिः । न चायमेकेन जन्मना कथंचिदपि साकल्येनाध्येतुं सुशकः केनापि मेधावताऽपि पुरुषेण । नतरां पुनर्मन्दधिया । भूयस्यश्च खल्वेतस्य कालगतवैषम्यात्समुच्छिन्नाः शाखाः, यद्यासां श्रुतिशाखानां चरणव्यूहादिषु नामानि श्रवणसरणिमधिरोहन्ति, नहीदानीं तासां श्रूयत एकमात्रोऽपि मन्त्रः । काधुनैताः। ततश्च पुनरेकान्ततः प्रतीयतेऽविद्यन्तापरा अपि शाखाः श्रुतीनां यासां किल विलयः समजनि ।

एतावता कतिपयानां शाखानां लुप्तत्वात्सतीनां पुनः क्रत्वर्थकर्मकलापजटाजटिलत्वाद्दुरधिगमशब्दभाण्डारसंदब्धत्वाच्चान्तरान्तरास्थितानि धर्मतत्त्वानि समाकलयितुमशक्यप्रायत्वादविपश्चिदपश्चिमानां धर्मतत्त्वावगतिर्दवीयस्येव । सत्यां च दवीयस्यां तस्यां समस्तसुखजीवातुभूतं नैजं धर्ममजानानाः खलु सर्वेऽपि पुनरसमन्तो विमूढान्तरङ्गा इत्थंकारंक्रियाविवेकविधुराः श्रेयसः प्रच्यवेरन्प्रेयसश्च ध्वंसेरन्स्वकर्तव्यतो भ्रश्येयुर्नूनमवनतिगर्तायां च निपतेयुर्हन्त महानर्थपारम्परीं वा प्राप्नुयुः। इत्थंभूताश्च ते तपस्विनो जीवाः कामलोभादिविविधतापगुम्फगुम्फितेऽतिकरालेऽस्मिन्यातायातस्वरूपे संसारपारावारे मा निमाङ्क्षुरिति सकलमुनिगणचक्रवर्ती भगवानव्याजकरुणावरुणालयोऽनायासं धर्महृदयमवबुभुत्समानानां सुखावबोधाय धर्मसूत्राणि श्रौतसूत्रगतप्रश्नद्वितयेन विरचयांबभूव श्रीसत्याषाढाचार्यः ।

एतस्मिन्खलु धर्मसूत्राख्यप्रश्नद्वये ब्रह्मचारिधर्मब्रह्मयज्ञविधिपञ्चमहायज्ञप्रशस्तिकुशलप्रश्नादिविचाराचमनविध्यभक्ष्यविचाराभक्ष्यमांसादिसुभिक्षदुर्भिक्षवर्तनप्रकारगृहस्थवानप्रस्थपरिव्राड्धर्मदण्ड्यादण्ड्यविचारनियोगदूषणदायविभागादीन्स्वधर्मजीवनौषधायमानान्सामयाचारिका-

न्धर्मान्सामीचीन्येन प्रत्यपीपदच्छ्रीहिरण्यकेश्यपराभिधः सत्याषाढमुनिपुंगवः ।

अयं पुनर्महामहिमशाली सकलार्थपारदृश्वा मुनिवरेण्यो महर्षिवेदव्यासान्तेवासिवैशम्पायनवंशसंभूतः सत्याषाढः सह्याद्रेः पूर्वभागे हरणकाशी( हिरण्यकेशी )निम्नगाकूलेऽजनिष्ट । सुचिरं च तपस्यन्भक्तकामपूरणामरपादपायमानाच्छ्रीगिरिवरनान्दिनीजानेः समासादितसमीहितवरोऽधिगतदिव्यचक्षुः सप्तविंशतिप्रश्नात्मक सूत्रं प्राणैषीदिति श्रीमद्द्वैपायनप्रणीतस्कन्दोप*पुराणात्प्रतीयते ।

---

* स्कन्दोपपुराणान्तर्गतहिरण्यकेशीक्षेत्रमाहात्म्ये स्कन्द उवाच–हरणकाशीति विख्यात तीर्थं त्रैलोक्यविश्रुतम् स्मरणादप्यशेषाघसघविध्वंसनक्षमम् । सह्याद्रेः पूर्वभागेऽस्मिन्वैशम्पायनसंभवः । सत्याषाढो महाप्राज्ञो मुनिरासीन्महायशाः । तस्य भार्या सुशीलेति पतिव्रतपरायणा । तस्य पुत्रो महाप्राज्ञो सुमतिर्नाम विश्रुतः । तस्याऽऽश्रममनुप्राप्त. पराशरतनूद्भवः । तं व्यासं पूजयित्वाऽथ सत्याषाढो महामुनिः । सत्याषाढ उवाच—देवाना को नु पूज्यः स्यात्त्रयाणा मुनिसत्तम । भुक्तिर्मुक्तिश्च कस्माद्वा स्यादनादिश्च को भवेत् । अनन्तश्चापि को विप्र देवानामपि दैवतम् । यज्ञैः क इज्यते देवः को देवेष्वनुगीयते । एव मे संशयं छेत्तुं वद व्यास महामुने । व्यास उवाच—चतुर्विधपुमर्थाना प्रमाणं शब्द उच्यते । तत्रापि वैदिकः शब्दः प्रमाणं परमं मतः । वेदा. प्रमाण सर्वत्र साकारेषु पृथक्पृथक् । [ अ ]विकारं च यत्त्वेकं तत्तेभ्यः परमं मतम् । सत्याषाढ उवाच—नानेन निर्णयः कश्चिन्मयाऽत्र विदितो भवेत् । व्यास उवाच—यद्यप्येषा न भेदोऽस्ति देवाना तु परस्परम् । तथाऽपि सर्वसिद्धिः स्याच्छिवाद्देवा( व ) सुखात्मनः । प्रपञ्चस्य निमित्तं यज्ज्योतिश्च परं( रमं ) शिवः । तमेव साधय हरं भक्त्या परमया मुने । हरणकाशीं समागत्य शिवमाराधयन्मुनिः । ततः शंकर तु ( स्तु )-ष्टाऽथ ( तुष्टोऽथ ) दिव्यचक्षुर्मुनेर्ददौ । स मुनिः कर्ममार्गं हि सत्वरम( रं चा )-करोद्भुवि । ततःप्रभृति तत्तीर्थं हिरण्यकेशीति विश्रुतम् । इति श्रीस्कन्दोपपुराणे हिरण्यकेशीमाहात्म्यम् ।

धारवाडपत्तनस्थदण्डवतीत्युपनामकसोमयाजिमहादेवदीक्षितसद्मन्यस्ति स्कन्दोपपुराणम् । तदन्तः पातीद हि० मा० ।

अथैतद्दशमभागेतरनवभागेषु यथायथं स्थितानां सवृत्तिकानां पञ्चविंशतिसंख्याकानां प्रश्नापरपर्यायाणामध्यायानां प्रसङ्गात्समासेन सारं प्रदर्श्यते—

तत्राऽऽद्यप्रश्नद्वये परिभाषापूर्वकं दर्शपूर्णमासावनुनिर्वाप्येन्द्रवैमृधकाम्यदर्शपूर्णमासप्रयोगविकारपिण्डपितृयज्ञब्रह्मत्वानि व्याख्यातानि ।

तृतीये च प्रश्नेऽधिकारः सर्वकर्मसु प्रतिनिधिनिरूपणमाधानं तदङ्गेष्टयः पुनराधेयमग्निहोत्रं सगृहस्य प्रयाणं दर्विहोमधर्मा अतिदेशप्रकारो विकृतिषु विशेषविधिश्च सोमाग्रयणेष्टिपशुबन्धानामनुष्ठानेऽमावास्यापौर्णमासीकालावाग्रयणेष्टिश्च ।

चतुर्थपञ्चमयोर्निरूढपशुबन्धस्तद्विकृतिविशेषविधिश्चातुर्मास्यानि च प्रतिपादितानि ।

षष्ठे प्रश्ने च याजमानसामान्यविधिपूर्वकं दर्शपूर्णमासयोर्याजमानं होमोपस्थानं प्रवासोपस्थानं पुनः प्रवासादागतस्योपस्थानविधिराग्रयणेष्टिनिरूढपशुचातुर्मास्येषु याजमानं चातुर्मास्येष्वान्तरालिकानि व्रतानि च कथितानि ।

ततः सप्तमाष्टमनवमेषु ज्योतिष्टोमस्तद्विकार उक्थ्यषोडश्यतिरात्राप्तोर्यामाश्च पश्वेकादशिनी तत्पशुषु तन्त्रावृत्त्याद्यनुष्ठेया धर्मविशेषाश्च निरूपिताः ।

दशमे चाग्निष्टोमयाजमानहोतृविनियोगो ज्योतिष्टोमब्रह्मत्वमुक्तम् ।

एकादशद्वादशत्रयोदशेषु चाग्निचयनम् । वाजपेयराजसूयौ, चरकसौत्रामणी चाभिहिता ।

चतुर्दशपञ्चदशषोडशेष्वश्वमेधपुरुषमेधौ सर्वमेधश्च । विध्यपराधे प्रायश्चित्तानि । द्वादशाहोऽहीनसत्ररूपो महाव्रतं गवामयनं च व्याहृतम् ।

सप्तदशाष्टादशयोरेकाहाहीनाः । सत्राणि संवत्सरान्तानि चोक्तवान्मुनिः ।

एकोनविंशविंशयोर्गृह्यकर्मप्रतिपादकयोः प्रश्नयोरुपनयनसमावर्त-

मधुपर्काः । समावृत्तस्य काम्यविषयो दारगुप्तिपण्यसिद्धिक्रोधविनयनसंवादाभिजयननैमित्तिककर्माशुभशकुनप्रायश्चित्ताशुभस्वप्नदर्शननिमित्तकहोमाद्भुतप्रायश्चित्तानि । विवाहविवाहहोमवधूप्रवेशगृहप्रवेशस्थालीपाकचतुर्थीकर्माणि । गर्भाधानौपासनहोमपुनःसंधानानि । प्रसङ्गात्प्रवासाविधि. । गृहस्थस्य गृहकरणम् । वास्तुशमनं गृहप्रवेशश्च सीमन्तोन्नयनादिनामकरणान्ताः संस्काराः । प्रवासादागतस्य विधिः । अन्नप्राशनचूडाकर्मगोदानकर्माणि । श्वग्रहप्रायश्चित्तशूलगवकर्मबौडयविहारक्षेत्रपत्यस्थालीपाकाः । मासिकमाघ्यावर्षाष्टकाश्राद्धानि । पूर्वेद्युःश्राद्धादिश्रवणाकर्मान्तानि । आग्रहायणी । उपाकरणमुत्सर्जनं चैवमादयो विषयाः प्रदर्शिताः ।

एकविंशद्वाविंशत्रयोविंशेषु याजुषहौत्रप्रवरनिर्णयौ । काम्येष्टिपशुबन्धाः । कौकिलीसौत्रामणीसवाः काठकचयनानि च व्याहृतानि ।

चतुर्विंशपञ्चविंशयोः प्रवर्ग्यः । शुल्बे विहारयोगाश्च व्याहृताः ।
षड्विंशसप्तविंशस्थसामयाचारिकान्विषयान्प्रागवोचाम ।

भारद्वाजीययोः पितृमेधीयाष्टाविंशैकोनत्रिंशयोः प्रश्नयोः सत्याषाढमुनिपरिगृहीतयोश्च मृतस्य कर्मणो विधानं मृतस्याऽऽहिताग्नेः स्थापनदहनप्रकारः शवाग्नौ हवनमस्थिसंचयनमित्यादयो बहवः खलु विषयाः प्रत्यपादिषत मुनिवरेण ।

अत्र केचन संदिहीरन् ' ननु भोः श्रौतार्थप्रतिपादकान्प्रश्नान्कात्स्न्येनानभिधायैवान्तरा किमित्याचार्यो गृह्यप्रश्नद्वयं व्यररचत् । अष्टादशप्रश्नगतसहस्रसंवत्सरान्तसत्रकथनोत्तरकाल एवाव्यवहितत्वेन याजुषहौत्रप्रवरनिर्णीतिकाम्येष्टिपशुबन्धकौकिलीसौत्रामणीसवकाठकचयनप्रवर्ग्यादिविषयान् कुतो न सूत्रयामास ' इति । सत्यम् । ब्रूमः । ' उपनयनं व्याख्यास्यामः ' इति हि तावद्गृह्याद्यप्रश्नीयादिमं सूत्रम् । उपनयनं पुनः श्रौतम् । ' उपनयनस्य विद्यार्थस्य श्रुतितः संस्कारः ' इति धर्मेषु वचनात्तस्य श्रौतमध्ये विधानं श्रौतत्वप्रख्यापनार्थं कार्यभ्रंशे च श्रौती प्रायश्चित्तिर्यथा स्यादित्येतदर्थं च ।

नन्वथापि केचित्संशयीरन् ‘ किमहो श्रौतत्वादुपनयनमात्रस्य तावच्छ्रौतमध्ये प्रकल्पनं सांगत्यं भजेत, कथंकार पुनर्व्रतोपाकरणविसर्गस्नानविवाहादीनां तदानन्तर्येणैव विधान कल्पयांबभूव मुनिः ’ इति । उपनयनोत्तर पारम्पर्यप्राप्तसकलस्मार्तप्रयोगाणां बुद्ध्युपारूढत्वात्तत्त्यागस्य च सुतरामनौचित्यात्, श्रौतवत्स्मार्तस्यापि पुनरेकान्ततः समादरणीयताख्यापनार्थत्वाच्च नूनं श्रौतमध्ये स्मार्तप्रकल्पनं सविशेषं पोषयति सौत्रीं रचनाचातुरीं खलु सत्याषाढीयाम् । न वयं तत्र वैसंगत्यकणिकामप्युत्पश्यामस्तराम् ।

एतस्य पुनः सत्याषाढीयसूत्रस्य श्रीमहादेवदीक्षितभट्टगोपीनाथमातृदत्ताचार्यवाञ्छेश्वरसुधीप्रभृतीना बहुलाः खलु वृत्तयो विद्योतन्ते । परं यथा यथा मुद्रणकाले येषां येषा वृत्तिकृतां येषु येषु च प्रश्नेषु यावतीं वृत्तिं समासादितवत्यानन्दाश्रमसंस्था तावतीं वृत्तिमाश्लिष्ट खलु तत्तद्भागगतेषु तेषु तेषु प्रश्नेषु । तथा हि—

तत्राऽऽदिमषडध्याय्यां गुम्फिता वैजयन्तीनाम्नी वृत्तिः श्रीदीक्षितमहादेवेन परमेशितुर्यज्ञतनोः कण्ठे सादरं न्यधायि । सूत्रकारहृद्गतार्थाविष्करणपटीयसीयं वैजयन्ती, श्रौतीयार्थप्रणयिपुंगवानां विचक्षणमूर्धन्यानां हृदयंगमसौगन्ध्यपटलेन प्रजनयेत्खलु यत्सत्य परां कोटिमारूढममन्दमानन्दथुम् । नैतत्परोक्षं शेमुषीमताम् । कत्यः पुनरयं वृत्तिकृत्कतमस्मिन्वाऽनेहसि कतमस्मिन्वाऽन्ववायेऽजनि नैतदन्तरङ्गैर्बहिरङ्गैर्वा साधनैः किल पारयामो वयं निर्विचिकित्समध्यवसितुम्, परमयं पण्डिततल्लजः सूत्रप्रणेतृवंशोद्भूतः कौशिकगोत्रीयो महाराष्ट्रीय इत्येतत्तावन्निश्चप्रचम् । उदलेखि चासावेव स्वीयव्याख्योपक्रमीय एकस्मिन्पद्ये सत्याषाढमुनिमुपक्रम्य—

‘ सोऽयं मदीयमनघं कुशिकस्य वंश—
मात्मावतारजनुषाऽलमलंकरिष्णुः ’ ॥ इति ।

तत्र प्रश्नषट्कं पूर्वव्याख्यातृभिर्व्याख्यातम् । अथाग्निष्टोमादिकर्मप्रतिपादकं सप्तमप्रश्नादिकं सूत्रमव्याख्यातत्वादिदानीं व्याख्यायते । तत्रा-

ऽऽदौ तावद्याज्ञिकानां संप्रदायबोधार्थं श्रौतपरिभाषाः स्मार्तगार्ह्यपदार्थाश्च संक्षेपेण प्रदर्श्यन्ते ' । इति शालिवाहनशाकीयसप्तदशशतकोत्तरार्धे सत्ताभाजः स्वप्रणीतज्योत्स्नाख्यव्याख्योपोद्घाते भट्टगोपीनाथस्य समुल्लेखेनायं पुनर्महादेवदीक्षितमहाभागः षोडश्यां पञ्चदश्यां वा शालिवाहनीयायां शताब्द्यामासाचक्र इति नस्तर्कः । आद्यप्रश्नषट्कोत्तरं सप्तमादिषु प्रश्नेषु महादेवीयवैजयन्त्यदर्शनात्प्रागुक्ता गोपीनाथीयोक्तिः पुनरेकान्ततो महादेवमेव संबध्नाति । एकविंशप्रश्नीयप्राज्यभागान्तं याजुषहौत्रसूत्रं चैतेन वैजयन्तीकृता महादेवेन व्याख्यायि । तामपि व्याख्यां प्राकाशयदष्टमे भाग आनन्दाश्रमसंस्था । गृह्यप्रश्नद्वयमधिकृत्य श्रीवाराणसीस्थवैशंपायनोपनामकस्य सुगृहीतनामधेयस्य महेशभट्टस्य ' महेशभट्टी' नामकप्रबन्धवत्, ' प्रयोगवैजयन्ती ' इत्याख्यः स्मार्तषोडशप्रयोगात्मकः प्रबन्धोऽनेनैव खलु दीक्षितमहादेवेन प्राणायीति समवगाहते श्रवणसरणिं, संभाव्यते च ' वैजयन्ती 'इति नामसादृश्यात्तादृग्विधत्वमपि । परं ' महादेव ' इत्यभिधानजुषां पुनरनेकेषां ग्रन्थकृतां सद्भावादयमेव वैजयन्तीकृत्स्मार्तप्रयोगीयवैजयन्तीप्रणेतेति नाहि नाम वयं निश्चेतुं धृष्णुमः केवलनामसादृश्यात् । यद्वक्तव्यं वैजयन्तीकृन्महादेवीयं तदुक्तं खल्वस्माभिर्यावदशक्नुम व्याहर्तुम् । अथेदानीमन्यस्मिन्वृत्तिकृति समभिलषामः कर्णिका व्यापारयितुमात्मीयाम् ।

महामहिमशाली श्रीमान्भट्टगोपीनाथ पुनरेतस्य सूत्रस्य द्वैतीयीकोवृत्तिकृत् । अनेन किल सप्तमाध्यायतो दशमाध्यायावसाना चतुरध्यायी हृदयंगमया ज्योत्स्नानामवृत्त्या समलमकारि । ज्योत्स्नाशब्दो हि ' ज्योत्स्नातमिस्रा० इति सूत्रेण ज्योतिरस्त्यस्या इति व्युत्पत्त्या मत्वर्थे निपातितश्चन्द्रिकावाची । चन्द्रिका हि यथाऽन्धतमसस्थितं पदार्थजातं प्रदर्शयति तथैवेयमपि वृत्तिः सुदुरूहश्रौतार्थकदम्बं सविशेषं विशदयतीति संचकास्त्येवास्याः खलु वृत्तेरन्वर्थता दधानं ज्योत्स्नेति सुमङ्गलं नामधेयम् । वृत्तेश्चास्याः पुनर्ज्योत्स्नाया ह्ययं विशेषः खलु, कस्कोऽपि वा भवत्वेना परिशीलयिता न पुनर्जिज्ञास्यमानेऽर्थे

यत्सत्यं संदेहदोलामधिरोहेत्। सरला सुगमा चास्य श्रीमतो भट्टगोपीनाथस्य विविधविषयोहापोहभासुरा पक्षोपपक्षविमर्शक्षमाऽकुतोभया प्रतिपादनचातुरी श्रौतप्रक्रियाहृदयविदां चेतोकूपारे प्रमोदतरङ्गान्प्रनर्तयेदित्यत्र न खलु स्तोकोऽपि शङ्कावसरः। महानुभावस्यास्य पुनर्ज्योत्स्नावृत्तिप्रणेतुः प्रमोदाधायकं चरितं नहि नामाप्रियं जायेत। नैतावदपि तु प्ररोचेतैव सदयहृदयेभ्यो विद्वदग्रेसरमहाशयेभ्यो नूनं सद्गुणैकपक्षपातिभ्य इति निर्विचिकित्सालेशं बाढं मन्वाना वयं समीहामह आनन्दाश्रमप्रणयिभ्यः सादरमुपहारीकर्तुम्।

सुप्रथितैवास्ति स्वस्तिकरी समस्तक्षेत्रमौलिमणीयमानाऽनणीयोवैभवाधरीकृतसुरनगरी भगवतश्चन्द्रिरचूडस्य श्रीविश्वनाथस्य राजधानी वाराणसी नाम पुरी। या हि खलु रिङ्गदुत्तुङ्गतरङ्गानिस्तुलसौन्दर्यशालिन्या पातकत्रितयोज्जासनपटीयस्या भगवत्या भागीरथ्या समलंक्रियतेतमाम्। तस्या पुनर्भक्तत्राणधृतव्रतायां श्रीमदन्नपूर्णाम्बासमधिष्ठितायां पुरि, नातिप्राचीनं निवसति स्म किल मातृकुलमिव श्रीद्वादशभुजाविद्यागणपत्युपासनादेव्याः, क्रीडागारमिव सरस्वत्याः, पतिकुलमिव वेदविद्यायाः, प्रणयमन्दिरमिव श्रौतयाज्ञिकप्रक्रियायाः, विलासाङ्गणमिव स्वधर्मनिष्ठाया एवंविधनैकगुणगणशालि श्रीमत्, ओककुलम्। तस्मिंश्च पुनरोककुले लोकोत्तराध्वर्यवविधानचुञ्चुः श्रीमदग्निष्टोमसाहस्राग्नियुक्तवाजपेय—सर्वतोमुख—द्विसाहस्रयुक्तपौण्डरीकयाजी कोऽपि प्रभावी पुरुषो गणेश इत्यभिधा मण्डयमान उदगात्। स एव पुनरस्य ज्योत्स्नाकृतो भट्टगोपीनाथस्य जनिता। प्रायः १६५५ तमे शालिवाहननृपतेः शके श्रीवाराणस्या नैजेन जनुषाऽलमकार्षीत्, ओककुलं प्रमोदयांचकार चाऽऽत्मीयौ मातरपितरौ श्रीगोपीनाथः। बाल्ये पुनरतिमात्रमासीच्चापलं श्रीमतो गोपीनाथस्य। कैशोरीं किल समनुभवति गोपीनाथेऽवस्थितिं हन्त नूनमकाण्ड एव सौजन्यमन्दाकिनी तज्जननी समापयामास पुनरैहिकीं संसारयात्राम्। अहो कथं नु नाम 'प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः' इति कविकुलगुरुकालिदासीयवचसा वितथेन भूयेत। बलीयसी खलु सर्व-

कषा भगवती भवितव्यता । आस्तां तावत् । गच्छता गणरात्रेण यूनैव पुनर्गणेशेन द्वितीयोद्वाहि द्वितीया निसर्गचतुरचेताश्चपलोऽयं बहुलोकोत्तरगुणगणपटिम्ना तत्रत्यतत्सामयिकविदुषां बोभवीति स्म प्रीतिपात्रम् ।

गच्छता कालेन गृहेऽध्ययनकालेऽन्तरायबाहुल्यं तन्मूलिकामायुषो हानिं च समनुभूय पितृचरणानुमोदित एव स्वालयतोऽन्यत्र श्रीत्रिपुरान्तकनगर्यामेव न्युष्य समध्यगीष्ट व्याकरणन्यायमीमांसादि शास्त्रकदम्बम् । नवनवोन्मेषशालिनी शास्त्रहृदयसमाकलनपटीयसी चास्य शेमुषी पञ्चषैरेव पुनर्हायनैरजीगणत्सकलशास्त्ररहस्यम् । अचिरादेव च

‘ वार्ता च कौतुकवती विमला च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत्त्रयं प्रसरति स्वयमेव भूमौ ॥

इति तत्त्वानुसारतः पण्डितप्रकाण्डस्य भट्टगोपीनाथस्य किल सानन्दनिर्भरं नरीनृत्यते स्म पुनः सुकीर्तिलासिका सकलदिगन्तगतविद्वज्जनश्रवणपुटरङ्गमण्डपे ।

आसीच्च तादानिकेऽनेहसि श्रीभृशबल( भोसले )वंशराजधानीभूते सप्ततार( सातारा )पत्तने महाराष्ट्रस्वाराज्यलक्ष्मीविलासस्य सुगृहीतनामधेयस्य श्रीशिवाजीमेदिनीवल्लभस्य स्नुषा श्रीराजाराममहिषी श्रीमती ताराबाईति । न खलु न विदितं पुरावृत्तप्रणयिनां यदासीत्किल तदाऽस्याः ‘ आईसाहेब ’ इति नाम्नाऽपि प्रथा । तयाऽपि पुनः समाघ्रायि कर्णोपकर्णिकया विचक्षणपुङ्गवस्य श्रीगोपीनाथपुण्डरीकस्य खलु लोकोत्तरो विसृमरो यशःपरिमलः । कतिपयदिवसापगमे सबहुमानपुरःसरं श्रीपेशवेकुलललामेन श्रीबाजीरायात्मजेन ‘ नाना साहेब ’ इत्यपरनामधेयेन बाळाजिमहाशयेन श्रीताराबाईवचनादाकारि किल श्रीगोपीनाथो बालेन्दुमौलिराजधानीतः शालिवाहनीये १६७२ तमेऽब्दे । समस्थापि च निजसविधे महाराष्ट्रभूभालतिलकायमानायां निजराजधान्यां पुण्यनगर्याम् । अहो दिष्ट्या खल्वेतत् , यत्सरस्वती

कमलया संगतेति । समुपात्तराजाश्रयाण्येव पुनर्विद्वद्रत्नानि विराजन्तेतमाम् । सुप्रथितैव च भूतार्थैव किल काऽप्यभियुक्तोक्तिः—

'विनाऽऽश्रयं न शोभन्ते पण्डिता वनिता लताः' इति ।

श्रीमति बाजीरायतनूजनुषि श्रीनानासाहेबमहानुभावे प्रशासति किल रत्नगर्भामण्डलं राजधानीभूतस्य तादिकस्य श्रीपुण्यपत्तनस्य पुनः सौभाग्यसानुसमाधित्यकासंप्राप्तस्य किं नु नाम वर्णयितव्या लोकोत्तरा वैभवी । यदेतत्पुण्यपुरं नाम सरित्पतिरय श्रोत्रियमौक्तिकाना हिमाचलोऽयं पण्डितरत्नाना निवासोऽयं सकलविद्यानां समाश्रयोऽयं समस्तकलाना खनिरयं ज्ञानस्य शेवधिरयं चातुर्यस्य कासारोऽयं पाण्डित्यस्य निकषोऽयं विदुषां सुरपादपोऽयं याचकानां चिन्तामणिरयं वदान्याना कन्दरोऽयं मन्त्रस्य किं पल्लवितेन नतरा नाम पुनरेतादृशं विषयं वयमुत्पश्यामो यः किल तादानिके काले नाऽऽसीत्पुण्यपुरे । एतादृशगुणशालिनि नगरेऽस्मिन्यत्सत्यं श्रीमद्गोपीनाथीयागमनं नाम तप्ते सैलाचूर्णसुगन्धिते सकुंकुमे गोपयसि खण्डशर्करापातः । ततः किलाष्टनवैः संवत्सरैः प्रत्यक्षीकृत्य श्रीभट्टगोपीनाथीयामनन्यसाधारणीमार्हन्ती १६८१ तमायां शालिवाहनीयायां शरदि श्रीमन्नानासाहेबभूपालसंमत्यैव श्रीमती राज्ञी स्थूललक्ष्या ताराबाई दक्षिण्यायास्मै भट्टगोपीनाथाय विराज( बाई )क्षेत्रतो नातिदवीयस्यन्तरे वर्ति[नं] 'एस्कर' नामकं ग्राममग्रहारी चकार । अहोऽपूर्वः खलु विद्वज्जनपक्षपातः, अहो महीयसी दानप्रियता, अहो लोकातिशायिनी समयोचितकारिता सुगृहीतनामधेयायाः श्रीताराबाईदेव्याः पण्डितप्रकाण्डसंग्रहैकपटीयसः श्रीबाळाजीभुजश्च । आसीत्किल स ग्रामस्त्रिसमावधि वाग्दत्त एव पुनरस्य श्रीगोपीनाथस्याभ्याशे । परं १६८४ तमे शालिवाहनीये हायने सुदूरदर्शिना श्रीमता श्रीपेशवेकुलाम्बराम्बरमणिना श्रीबाळाजीतनुजेन क्षमाधवेन श्रीमाधवेन स्वीकृत्य किल व्यावहारिकीं परिपाटीं सनदाख्यपत्रिकयाऽऽसञ्जितः । ततः पुनरेकयैव शरदाऽवरवर्णसंकुले तदेस्करसंवसथे मनागिवाप्रियतामभिव्यञ्जयता श्रीगोपीनाथेनाऽऽवेदितः श्रीमान्माधवरायः परिवृत्तिसहिष्णुतामुररीकृत्य १६८५ तमे शालिवाहनाब्दे 'साकुर्डी' नामग्रामं भट्टनाम्नि पर्यवीवृतत् । सोऽपि पुनः साकुर्डीग्रामः किल वचनुवितीर्णे

एव पुनरवर्तिष्ट पञ्चदशाब्दावधिकस्तदुपकण्ठे। ततः १७०१ तमे शालिपत्रीये वर्षे श्रीमता सवाईमाधवरायराजेन सनदाख्यया वितरणपत्रिकया वंशपारम्पर्या विद्वदग्रेसराय श्रीगोपीनाथाय प्रादायि। अद्यावधि हि समुपजोषं नाम निर्विश्यते प्रायस्त्रयोदशशतकरभारात्मकः खलु स ग्रामः श्रीगोपीनाथतः पञ्चमेन श्रीधुण्डिराजप्रणप्त्रा श्रीगोपालपौत्रेण श्रीधुण्डिराजशर्मणा शोभनकर्मणा परमधर्मणा श्रीलक्ष्मणात्मजेन। अहो वदान्यतमा यत्सत्यं श्रीपेशवेकुलसंभूताः पुना राजानः। न नूनममन्यन्ताऽऽत्मानं धन्यतमं केवलसाकुर्डीग्रामदानेन, अपि च १६९१ तमेऽब्दे श्रीबल्लालचित्तचकोरचन्द्रिरेण श्रीमाधवेन राज्ञा संवर्धिष्णुनैव पूर्वजानां दातृत्वव्रत समलङ्करिष्णुनैव सुपात्रवितरणेन राजलक्ष्मीं निराकरिष्णुनैव प्रतिभटमत्तयवनस्वचित्तारुन्तुदरणकण्डूमतिमात्रं प्रभाविष्णुना श्रीरमाजानिना प्रतिसंवत्सर दित्सितव्यया निजकोशस्थानां राजतमुद्राणां पञ्चदशशत्या पुनश्च समसभाजि स पण्डितवरः। तदाप्रभृति १७९७ तमशालिवाहनीयाब्दपर्यन्तं प्रागुक्तां पञ्चदशशतीं प्रतिवत्सरं समुपाभुक्षत निष्प्रतिबन्धं श्रीगोपीनाथवश्याः, ततः किल नातिद्राघीयसाऽनेहसा प्रतिवार्षिकी सार्धसहस्ररूपकप्राप्तिः कुण्ठिता, ग्रामः पुनरवर्तिष्ट।

एवमनवद्यविद्यासमासादितग्रामादिलक्ष्मीकः स्वधर्माचरणचणः पार्वणशर्वरीशचन्द्रिकायितसुनिर्मलतरयशःपटल आहिताग्निः श्रीगोपीनाथभट्टः १७०५ तमाब्दीयफाल्गुने मासि हन्त सहसैव किलाऽऽकारितः कठोरान्तरङ्गेण कृतान्तहतकेन। अहह भो अकारणनिर्घृणता खलु परेतभर्तुः। अवितथं पुनरिदमभिधीयतेऽभियुक्तैः—'को नु नाम न स्पृहयति सद्वस्तुने' इति। आस्तां तावत्।

अनेन पुनर्ज्योत्स्नाकृता भट्टगोपीनाथेनापरेऽपि केचन ग्रन्था निरमायिषत पर तेषु संस्कारररत्नमालानामप्रबन्धो यत्सत्यं सर्वाङ्गहृदयंगमो विराजतेतमाम्। स्मार्तयाज्ञिकीयसकलेष्वपि प्रबन्धेषु नूनमयं [illegible]बन्धश्चक्रवर्तिपदं सलीलमिव संपादयेदित्यत्र नहि नहि किलाणीयानपि [illegible]निदर्नां शङ्कावसरः। गृह्यप्रश्नद्वयीयं श्रीसत्याषाढमुनिहृदयं संजि[illegible], स्मार्तप्रयोगोपयोगिनः समूक्ष्मानेक[illegible] [illegible]दृक्षु[illegible] [illegible]

जिगमिषुभिः, सहजतयाऽन्तराऽन्तरा प्रोद्भूताञ्ज्योतिःशास्त्रीयवचनस्तोमान्समाविकलयिषुभिः, यं कमपि विषयं प्रतिपाद्यत्वेनाधिकृत्य तत्र सभाव्यमानसंशयव्रातनिराकरणपुरःसर प्रतिपादनशैलीं निरीचिक्षिषुभिः प्रागेव च संस्काररत्नमालाख्यो गोपीनाथप्रणीतप्रबन्धः शरणीकरणीयः। न खलु पुनः कोऽपि विमनायेत किमपि जिज्ञासितं तत्र नालभतेति। प्रबन्धश्चायं १६८७ तमे शालिवाहनवत्सरे पार्थिवनाम्नि शुक्ले श्रावणमासि विघ्नपतिथौ सोमे समाप्तिमयासीदिति ग्रन्थकृदुक्त्यैव प्रतीयते। संस्काररत्नमालासमाप्त्यनन्तरमेव किल ज्योत्स्नावृत्तिः पुनः प्रणेतुमारब्धेत्यप्यनुमीयते। अन्यथा हि संस्काररत्नमालासमाप्तिसमयमिव ज्योत्स्नासमापनकालमपि निरदेक्ष्यद्वृत्तिकृत्। इदमप्यत्रैकमवश्यमवगन्तव्यं यत्किल ज्योत्स्नावृत्तिसमाप्तिकालानुल्लेखेन, सकलस्यापि पुनः सत्याषाढीयसूत्रस्य व्याख्याने नूनमासीद्बलीयसी समीप्सा श्रीगोपीनाथीया हन्त हन्त परमाकालिकपञ्चत्वसद्भावेन न खलु पुनरघटिष्ट तथाविधम्। अतिरोहितमेवैतत्, यन्मानवेनान्यदेवाभिलष्यते नूनमतिमात्रमन्यदेव च विभाव्यते भगवत्या नियत्येत्यलं विषादेन।

प्रियमहाभागा आनन्दाश्रमसुहृदः, उपहृतं खल्वस्माभिः × श्रीगोपीनाथभट्टदीक्षितीयं यावच्छक्यं वृत्तं श्रीमद्भ्यः। महीयसो विदुषोऽस्य लोकातिशायिप्रतिभाशालित्वस्य भूयस्यः खल्वाख्यायिकाः पुनरासैविद्वद्भिर्व्याहृताः, श्रीगोपीनाथप्रणप्तृपुत्रेण श्रीधुण्डिराजदीक्षितमहाशयेनापि च परम्परया श्रवणकर्मीकृता अर्थादवितथीभूता इति चास्मभ्यं कथितास्तदीया गाथाः शोश्रूय्यन्तेऽस्माभिः। परं विस्तरभिया नोल्लिख्यन्ते।

तार्णीयीकः पुनरस्य सत्याषाढीयसूत्रस्य व्याख्याता श्रीमातृदत्ता·

× इदं पुनः श्रीभट्टगोपीनाथीयं वृत्तं संप्रति पुण्यपत्तननिवासिभ्यस्तदीयपौत्रपौत्रेभ्यः फर्ग्युसन्कॉलेजाख्यसंस्थीयप्रोफेसरबिरुदालंकृतेभ्यो धुण्डिराजदीक्षितमहाशयेभ्यो महीयोभिः प्रयत्नैः संपाद्य यथाश्रुतमेव समुदलेखि। न खलु तत्र सशयावसर.। शकाङ्काविषये यदि मनाक्प्रमाद्येत तर्हि क्षमन्तां पुरावृत्तकोविदः, निवेदयन्तु च भूतार्थम्।

चार्यः । एतेन खलु गृह्यसूत्रमयी, एकोनविंशविंशप्रश्नद्वयी व्याख्यायि संमुद्रिता चाऽऽनन्दाश्रमसंस्थयाऽष्टमे भागे । नितान्तं सरला सरसा सुगमा चास्य श्रीमातृदत्ताचार्यस्य व्याख्यानकौशली । यत्किमपि वा प्रतिपाद्यं भवतु तदेतत्प्रतिपाद्यमानं यदा विविधवचनजातं समुपन्यस्य समर्थ्यते तदाऽऽलिखितमिव भवत्यन्तःकरणजवनिकायामिति नैतदपरिचितमिङ्गितज्ञानां शेमुषीमताम् । भूयिष्ठं चोपकुर्वतीं वैदुष्यभङ्गीमङ्गीकुर्वन्तः पुनरमन्दमानन्दं विन्देरन्परिशीलयितार इत्यत्र न संदिह्मो वयम् ।

यद्यप्यानन्दाश्रमसंस्थया स्मार्तप्रश्नद्वयस्यैव मातृदत्ताचार्यीया वृत्तिः समासादि तावन्मात्र्येव च पुनराङ्कि तथाऽपि व्याख्याया उपक्रमे मङ्गलाचरणाभावात्, अपि च ‘ यज्ञं व्याख्यास्याम इति प्रतिज्ञाय दर्शपूर्णमासादयः सहस्रसंवत्सरान्ता ये श्रौता यज्ञा वैतानिकास्ते व्याख्याताः । स्मार्ता इदानीमष्टकादय एकाग्नौ कर्तव्या वक्तव्यास्तेषामुपनयनं प्रधानम्’ इति मातृदत्तस्य स्मार्तसूत्रस्य व्याख्यानोपक्रमग्रन्थेन, तथा च—

मातृदत्तप्रयोगस्तु नैतत्सूत्रार्थसंमतः ।
आपस्तम्बानुसारी हि तत्र तत्र प्रकाश्यते ॥

इति श्रीवाञ्छेश्वरसुधीविरचितहिरण्यकेशिसूत्रव्याख्यानोपक्रमीयपद्यस्थेनोल्लेखेन, अन्यच्च “ अन्वारम्भणीया तु चतुर्दश्यां कार्या, इति हिरण्यकेशिवृत्तौ मातृदत्तीये ” इति विकृतीष्टिमधिकृत्य प्रथमपरिच्छेदीयनिर्णयसिन्धौ पण्डितप्रकाण्डेन श्रीमता भट्टकमलाकरेण समुद्धृतायाः पङ्क्तेः स्मार्तसूत्रव्याख्यानेऽसद्भावात्सकलमपि सत्याषाढीयं सूत्रं श्रीमातृदत्ताचार्यो व्याख्यदिति संशीतिविधुरं प्रतीमः । स्यादप्यलं क्वचित् ।

कत्योऽयं पुनर्महाभागः श्रीमातृदत्ताचार्यः कतमस्मिंश्च समये भारतीं भूमिं भूषयामासेति न वयं पारयामो नूनं प्रतिपादयितुम् । परमेतन्नानृतं यत्, परमरमणीयश्लोकस्य श्रीमतो भट्टकमलाकरस्य निर्ण-

यसिन्धुकृतः प्राक्तनोऽयं श्रीमातृदत्त इति । 'अन्वारम्भणीया तु चतुर्दश्या कार्या, इति हिरण्यकेशिवृत्तौ मातृदत्तीये' इत्यादिना श्रीकमलाकरभट्टीयोल्लेखेन श्रीमातृदत्तस्य भट्टकमलाकरतः प्राग्भवत्वं निर्विचिकित्समेव सिध्यति । निर्णयसिन्धुग्रन्थावसाने तद्ग्रन्थसमाप्तिसमयं*

वसुऋतुऋतुभूमिते शकेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे ।
तपसि शिवतिथौ समापितोऽयं रघुपतिपादसरोरुहेऽर्पितश्च ॥

इति पद्येन श्रीकमलाकरः प्राचकाशत् । अयमत्र सारः—विक्रमीयः 'वसुऋतुऋतुभू' शब्दवाच्यः १६६८ तमः संवत्सरो नाम शालिवाहनीयः १५३३ तमो वत्सरः । तस्मात्षष्टिमब्दान्व्यवकलय्य कमलाकरीयं जन्मसमयं प्रायिकत्वेन यदि वयमनुमायाम तर्हि १४७३ तमे शालिवाहनीयेऽब्दे कमलाकरजननावसर इति पर्यवस्यति । यावत्ततः प्राक्तनो मातृदत्ताचार्य इति निष्पन्नीपदीति स्म । अन्ये चानेन प्रणीता ग्रन्था नो नो नूनं श्रुतिपथ उपारुक्षन् । रुद्रभाष्यं, हिरण्यकेशिश्रौतप्रयोगः, इति ग्रन्थद्वयं व्यरचत्पुनरयमाचार्य इति कश्चिदुल्लिलेख न तत्परं बाढं विश्वसिमो वयम् ।

प्रियमहाभागा निवेदितोऽस्माभिः श्रीमद्भ्यो मातृदत्ताचार्यः । उपदर्शिताश्च युक्तयः । इतः परं श्रीवाञ्छेश्वरसुधियं परिचाययितुं श्रीमतः समभिलष्यत्यास्माकीना किल लेखनी ।

तुरीयः पुनरस्य सूत्रस्य वृत्तिकृच्छ्रीमान् पण्डितोत्तंसो वाञ्छेश्वर-

---

* 'वसुऋतुऋतु०' इत्यत्र 'वसुऋतुक्रतु०' इति भिन्नभिन्नस्थाने भिन्नभिन्नकाले च मुद्रितेषु पुस्तकेषु पाठो नयनपथातिथिर्भवति । क्रतवः पञ्च । ऋतवश्च पुनः षट् । शतेनान्तरं विपरिवर्तेत । नातिप्राचीने ग्रन्थसमाप्तिसमये पुनरियदन्तरं बाढं न खलु सहिष्णुतासहम् । बहुत्र लिखितेषु मुद्रितेषु च पुस्तकेषु 'वसुऋतुऋतु' इति पाठस्यैव दर्शनात् , क्रतुशब्दघटितपद्यस्वीकरणे छन्दोभङ्गदुष्टया, १५६८ तमे विक्रमसंवति तस्मिन्नेव पद्येऽग्रिमरौद्रादिकालवर्णनस्यासङ्गत्वाच्च क्रतुपदसंवलितपाठो नतरां संजाघटीति । 'ऋक्र' इत्यक्षरयोर्लिपिसादृश्यबाहुल्येन संभाव्या तत्र भ्रान्तिः ।

सुधीः । आदितः षोडशप्रश्नान्ता, चतुर्विंशप्रश्ने सप्तमपटलान्ता च सुधियोऽस्य वृत्तिर्महीयसा प्रयत्नेनाऽऽनन्दाश्रमसंस्थया समुपार्जि । नवमे भागे च पुनरस्य चतुर्विंशप्रश्नीया वृत्तिर्मुद्रापिताऽपि । प्राक्तनानां प्रश्नानां, तन्मुद्रणावस्थातः प्रागनुपलब्धेः पुनरन्येषां वृत्तिकृतां वृत्तीनां समुपस्थितिसत्तया च न खलु तादानिके काले वाञ्छेश्वरीया षोडशप्रश्नानां वृत्तिरवसरमलभिष्ट । श्रीवाञ्छेश्वरस्य पुनरियं वृत्तिरपि नूनमेकान्ततो महादेवगोपीनाथदीक्षितयोर्वैजयन्तीज्योत्स्नावृत्त्योरिवातिमात्रं सौष्ठवसौभाग्यमावहति । वृत्तावेतस्या हि समुच्छलन्तीव पुरुहूणि पुनः प्रमाणानि श्रौतस्मार्तादीनि । एतस्या वृत्तेः परिशीलनं नाम नौकासमाश्रयणमेव सूत्रसागरस्य परं पारं गन्तुं, विपिनमिव बहुश्रुतत्वस्य, वशीकरणमिव श्रौतेतिकर्तव्यतायाः, सोपानाधिरोहणमिव ज्ञानसौधस्य । अहो पाण्डित्यं, अहो वैदुष्यं, अहो प्रतिभा खलु श्रीमतो विद्वद्वरिष्ठाग्रेसरस्य वाञ्छेश्वरसुधियः । सर्वथा हृदयंगमा चेयं वृत्तिः श्रौतरसिकाना क्षेमंकरा निष्यादित्यत्र न पुनः स्तोकोऽपि संदेहः ।

संप्रति पुनः श्रीवाञ्छेश्वरस्य पौर्विकं किमपि कुलवृत्तादिकमुपहर्तुमिच्छामः । प्रायेण किल प्राचीनाः केऽपि कवयो भाष्यप्रणेतारो वृत्तिकृतो वाऽऽस्माकं स्वकीयस्थानकालवंशोपनामादिकथनमपि निजश्लाघामिव चेतसि कुर्वाणाः पुनरेकान्ततस्तूष्णीकामासेवन्ते स्म । ततश्च यत्सत्यं क्लिश्यन्तितमां तदीयचरितजिज्ञासाप्रणयिनां चेतांसि । अहो चित्रीयते, प्रमोमुद्यते चान्तरङ्गं खल्वस्माकं श्रीमता वाञ्छेश्वरेण नाङ्गीकृतमेतदात्मचरितमञ्जूषोद्घाटने पुनरौदासीन्यव्रतम् । न पुनः केवलं मञ्जूषैवोदघाटि, तद्गतानि किल महार्घवन्ति रत्नान्यपि दर्शयितुं नाभायि । अयं हि पुनर्वृत्तिकृत्प्रवरः श्रीमान्वाञ्छेश्वरो नैजं कुलवृत्तादिचरितं स्वयमेव सामीचीन्येन सत्याषाढसूत्रीयाद्यप्रश्नव्याख्यानोपोद्घाते प्रसङ्गतः समवर्णयत्कतिचिद्भिः पद्यैः । यदि पुनस्तान्येव पद्यानि विलेखितुं प्रवर्तेमहि तर्हि प्रभीषयते खलु विस्तरोऽस्मान् । अतो हि नाम तत्पद्यगतसारेण श्रीमन्तं वाञ्छेश्वर प्रबोधयितु किल समीहामहे ।

सुविदितमेवास्ति खलु दाक्षिणात्ये भारतभूमिभागे श्रीमति कवेरजसरित्तीरे प्रथितैश्वर्यं तञ्जापुरं नामानुत्तमं राजस्थानम् । तत्र स्वप्रतापमार्तण्डनिर्जितारातिसंघसंतमसा निजकीर्तिराकाजैवातृकचन्द्रिकाधवलिमविशदीकृतदिङ्मण्डलाः श्रीभोसलीयान्ववायजा आसाचक्रिरे राजानः । तदमात्यकुलोत्पन्नस्य श्रीवाञ्छानाथस्य माहिषशतकप्रणेतुः कवेः प्रणप्ता माध्वार्यनप्ता श्रीनरसिंहपुत्रः कुम्भकोणनिवासी होशनिकर्णाटजातीयः श्रीमदीश्वरशास्त्रि–श्रीनिवासाचार्य–अहोबलपण्डितपुंगवानामन्तेवासी शरभ( सर्फोजी )महाराजनिकटवर्ती च श्रीवाञ्छेश्वरः प्रागुक्तः । एतत्कृतसूत्रवृत्तेर्नाम तु महालिङ्गेति । एतेन पुनर्महाविदुषाऽऽचार्यस्वामिवर्यैः पाठनपीठे नियुक्तेन, षड्दर्शनीरहस्यं पुनरध्यापनकर्मतामनायि । अलमकार्षीच्चायं तञ्जापुर( तंजावर )-संस्थाने, पेशवेशासनकाले पुण्ये पुटभेदने, श्रीमहीशूर( म्हैसूर )-राजधान्यां श्रीमुंमडिकृष्णराजवडियरससदि च १७३० तमे शालिवाहनीयेऽब्दे धर्माधिकारिपदम् । स विद्वान् किलैकदा श्रीमत्काशीक्षेत्रयियासया प्रतिष्ठमानः श्रीकृष्णातीरनिवासिभिः पट्टवर्धनवंशस्थैः प्रभुभिः समगमत । अनेहसि च तादृके तेषां श्रीमतां पट्टवर्धनप्रभूणां सुनीतिमन्तः सुधर्माणः, कपिगोत्रावतंसायमानलिमयेकुलसरस्वत्कौस्तुभायितानन्तात्मजसखारामप्रभृतयोऽमात्या अवित्सन्त । ‘ जोगः ’ इत्याख्योऽपि तदमात्यमण्डलान्तर्गतः कोऽपि शुभंयुश्च पुरुषोऽवर्तिष्ट । श्रीमन्तौ लिमयेजोगौ तु श्रीहिरण्यकेशिसत्याषाढसूत्रिणौ श्रौतस्मार्तपरायणौ । लोकंपृणयशसश्चास्यासाधारणीं विद्वत्तां विज्ञाय श्रीमद्भ्यां लिमयेजोगाभ्यां सप्रश्रयं सूत्रवृत्तिप्रणयनार्थं संप्रार्थितो विद्वदग्रणीः श्रीवाञ्छेश्वरपण्डितो वस्वग्न्यद्रिक्षिति( १७३८ )मितशके श्रीमच्छालिवाहनीये श्रीसत्याषाढीयं सूत्रं व्याख्यातुं समुपाक्रमीत् । समापयच्च सकलस्यापि सूत्रस्य महालिङ्गाख्या वृत्तिम् । प्रथममारभ्य षोडशाध्यायाश्चतुर्विंशश्चाध्यायः, संहत्य सप्तदशाध्यायाः सन्त्येव खलु पुनरानन्दाश्रमीयसंग्रहे । तदितरे नोपलब्धाः । अनेन पुनर्महाविदुषा भाट्टचिन्तामणिः ( भाट्टदीपिकाव्याख्या ), बौधायनसूत्र( सोम )-व्याख्या, दत्तकचिन्तामणिः, श्राद्धचिन्तामणिः, काकतालीयवादार्थः,

वेदान्तसूत्रार्थचिन्तामणिः, मलमासनिर्णयः माहिषशतकव्याख्या, एवमादयो ग्रन्था निरमाप्सिषत। एतस्य पुनः श्रीमतो वाञ्छेश्वरस्याव-स्थितिसमयस्तस्यैव वचनैः स्फुटो भवति—

'सरसकमनीयवचनः शरभमहाराजनिकटवर्ती च' इति।
'वस्वग्न्यद्रिक्षिति (१७३८) मितशके वाञ्छेश्वरः सुधीः।
हिरण्यकेशिना सूत्रं व्याख्यातुमुपचक्रमे' इति च तद्वचनद्वयम्।

शरभ(सरफोजी)राजस्य महीमण्डलशासनकालः १७२० तमव-त्सरमारभ्य १७५४ तमवत्सरं यावत्। अत एव च श्रीशालिवाहन-स्याष्टादश्यां शताब्द्यामेतस्यावस्थितिकाल इति विस्पष्टमेवैतत्। = माहिषशतककर्ता श्रीवाञ्छानाथः पुनरेतस्यैव प्रपितामहः।

'माहिषं शतकं येन कृतं विद्वन्मनोहरम्।
तस्य नप्ता + माधवार्यपौत्रः श्रीनरसिंहतः।
लब्धजन्माऽधीतशास्त्रः श्रीमान्वाञ्छेश्वरः सुधीः॥

इति तदीयेनैव वचसा विशदी भवति। तेन च प्रतीयते पारम्पर्य-प्राप्तमेव पुनरेतस्य वैदुष्यम्। वृत्तिकृदयं श्रीवाञ्छेश्वरसुधीर्न किल केवलं तञ्जोरमण्डल एव कृतावासः किंतु कुम्भकोणे श्रीकाशीक्षेत्रे पुण्यपत्तने महीशूरसंस्थानेऽपि विहितवान्वासमिति प्रतीयते।

---

= माहिषशतकप्रणेता श्रीवाञ्छानाथ. (बलकवि.) नागपुरीयभोसलवंशाश्रित इति श्रीकरवीरराजगुरु. श्रीनिवासपण्डितः (रावजीमहाराज.) स्वकृतमाहिषशतकव्याख्यानोपक्रमे प्रत्यपादयत्, परं तदुपरितनविवेचनेन पुरावृत्तज्ञानाभावमूलकमिति बोद्धव्यम्।

+ अत्र नप्तृपदं 'न पतन्ति पितरो येन' इति केवलयौगिकव्युत्पत्त्या प्रणप्तृ(पणतु)पर मन्तव्यम्। द्राविडेषु तथैव व्यवहारात्। संदृश्यते च पुनरन्यत्रापि तादृश. प्रयोगः—

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम्।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम्॥ इति।

विवाहसंस्कारे कन्यादानसमये यत्र दाक्षिणात्या 'अमुकशर्मणः प्रपौत्राय' इत्युच्चारयन्ति तत्र द्रविडदेशीया. सम्प्रति 'अमुकशर्मणो नप्त्रे' इति व्याहरन्ति

अथैतस्य सूत्रस्य पञ्चमः पुनर्व्याख्याकृच्छ्रीमहादेवदीक्षितः। अनेन खलु षड्विंशसप्तविंशधर्मसूत्राख्यप्रश्नद्वितयं व्याख्यातम्। एतस्य पुनर्व्याख्याया 'उज्ज्वला' इति नामधेयम्। असौ हि वैजयन्तीकृतो दीक्षितमहादेवाद्भिन्न एव। गमयति खल्विममर्थं तदीया व्याख्यानसरणिरुज्ज्वलेति पुनरपरं च वृत्तिनाम। अन्यथा हि कथं नु नामैक एव व्याख्याकृत्स्वीयवृत्तेः परिवर्तयेन्नामधेयं, कथंकारं च पुनराद्यप्रश्नषट्कं व्याख्याय तदूर्ध्वगतानेकोनविंशतिप्रश्नानुज्झित्वाऽन्तिममेव द्वयं व्याख्यायात्। ततश्च प्रतीमोऽयं पुनर्भिन्न एव पूर्वस्मान्महादेवदीक्षितादिति।

अस्यापि पुनरुज्ज्वलानामवृत्तिः सर्वाङ्गमनोज्ञा। एतां खल्ववलोकमाना सतोतुषीति नश्चेत.। अत्र हि सुगममिति समुपन्यस्य प्रायः सूत्रस्थं नैकमपि पदं परित्यक्तम्। तेन च खलूज्ज्वलेयं बालबोधिनी संवृत्ता। अयं पुनरुज्ज्वलारचयिता महादेवः कदा कं वा जनपदं कतमं कुलं वाऽवतंसयांचकारेति दृढबद्धपरिकरा अपि वयं हन्त लेशतोऽपि निर्णेतुं नाशक्नुम। १७४१ तमे शालिवाहनीयेऽब्दे निजं हिरण्यकेश्याह्निकापरपर्यायमाचारभूषणं समापयितुः 'ओक' इत्युपाह्वत्र्यम्बकपण्डितस्याऽऽचारभूषणे महादेवकृतोज्ज्वलाया बहुश उल्लेखत स्त्र्यम्बकतः प्राचीनत्वं पुनरेकान्तोऽस्योज्ज्वलाविधातुः स्फुटी भवति। एतेन प्रणीताः पुनरन्ये ग्रन्था नास्माकं श्रवणसरणिमाययुः।

षष्ठो व्याख्याकृत्तु दण्डवतीत्युपनाकस्त्रिकाण्डमण्डनाचार्यबिरुदालंकृतः श्रीमहादेवदीक्षितः। एतेन खलु सत्याषाढीयसूत्रस्यैकादशप्रश्नमारभ्याष्टादशप्रश्नान्ता अष्टौ प्रश्नाः, एकविंशद्वाविंशत्रयोविंशा इति त्रयः प्रश्नाः, पञ्चविंशः प्रश्नश्च चन्द्रिकाख्यव्याख्यया संकलिताः। पितृमेधीयं पुनरष्टाविंशैकोनत्रिंशप्रश्नयुगुलं वैजयन्त्याख्यव्याख्यया च सनाथितम्। साम्प्रतिकः पुनरयं दण्डवतीत्युपाह्वमहादेवदीक्षितमहाशयः कर्नाटकीयधारवाडपत्तने हारीतवंशभूषणायमानं समविच्छिन्नैकसोमपीथिपुरुषकुलसमुद्भूतं तैत्तिरीयापस्तम्बशाखिनं सोमयाजिनं निजपितरं शिवदीक्षिताभिधेयं शालिवाहनीये १८०६ तारणनाम्नि संवत्सरे प्रादुर्भूय कृतार्थयांचकार। ततः कृतोपनयनः श्रीदीक्षितमहाभागः श्रीनिद्वदुरङ्गपूरोपनामकमहादेवशास्त्रिवराभ्याशे विहितवेदाध्ययनः

परिकलितश्रौतस्मार्तयाज्ञिकविषयश्च विद्वद्रत्नन्यायचूडामणिपदवीभूषितानां सोमयाजिनामग्निहोत्रीत्युपाभिख्यश्रीतमण्णाचार्याणां समीपे शास्त्राध्ययनं विहितवान् । ततश्च महाशयेनैतेनाऽऽपस्तम्बसूत्रभाष्यं विरच्य पुनरितरेषां च सूत्राणां वृत्तीर्निर्माय श्री १०८ शिवगङ्गामठाधीश्वरजगद्गुरुशंकराचार्यस्वामिचरणारविन्दयुगुले स्वकीयग्रन्थाः समुपाहारिषत । श्रीस्वामिचरणाश्च समीक्ष्य तान्सकलानपि ग्रन्थान्विज्ञाय च पुनरस्य महानुभावस्य श्रीमहादेवदीक्षितस्य ग्रन्थगुम्फनचातुरीमेनं ‘ त्रिकाण्डमण्डनाचार्यः ’ इति बिरुदेनावतसयाबभूवुः । महाकर्मठः पुनरयं त्रिकाण्डमण्डनाचार्योऽग्निष्टोमवाजपेयसौत्रामणमिहाग्निचयनादिभिः क्रतुभिर्भगवन्तं परमात्मानं समाराधयामास । अगुम्फीच्चायं हौत्ररत्नमालासंस्काररत्नमालाशान्तिरत्नमालादीन्प्रबन्धान् । एतस्य पुनः सुगृहीतनामधेयस्य श्रीदीक्षितमहादेवस्य कौटुम्बिकोपजीविकार्थं कुलपुरोधसमेनं कोऽपि वदान्यप्रवरः किल महामहनीयो ‘ देशपाण्डे ’ उपाभिख्यो भूरिणा भूमिवितरणेन सभाजयामास । निवसति चायं श्रीदण्डवती महादेवदीक्षितमहाशयः श्रीधारवाडपत्तने श्रौतस्मार्तकर्मैकपरायणः संप्रति ।

अयि माननीयाः समुपहृतं खल्वस्माभिः षण्णामपि वैजयन्त्यादिवृत्तिकृतां महीयसा प्रयत्नेन यावत्संकलितं वृत्त श्रीमद्भ्यः ।

अथेदानीं श्रीसत्याषाढहिरण्यकेशिसूत्रे हठादिवाऽऽधुनिकैः कैश्चिदुद्भावितान्कांश्चिदाक्षेपान्सप्रमाणं समूलकापं कषित्वा परमार्थं प्रख्यापयितुमभिलषामः । अवसरः खल्वयं श्रीसत्याषाढीयसूत्रविषये श्रुतिसरणिमारूढानां लोचनपथातिथीभूतानां वाऽऽक्षेपाणां निराकरणस्य, तद्विषयमधिकृत्य किंचित्प्रस्तोतुं प्रवृत्ताना नूनमस्माकम् ।

तत्रायमादिम आक्षेपः—

लुप्तप्रायमिदं सूत्रं दैवादासीत्कचित्कचित् ।
दक्षिणस्यां ताम्रपर्णीस्तीरेष्वेवेदमाहृतम् ॥

इति वैजयन्तीव्याख्याकृन्महादेवीयं व्याख्यानोपक्रमगतं पद्यं प्रमाणीकृत्य ‘ अपि मध्य इदं सूत्रं लुप्तमासीत्तस्माच्छाखा विच्छिन्नैव ’ इति सोत्प्रासमाक्षिपन्ति केचिदाक्षेप्तारः । न पुनः कतमस्मात्कालादारभ्य कियदवधिकं कालं यावल्लुप्तमासीत्तन्निर्दिशन्ति । पर न

जानीमो वयं तादृगर्थान्वेषणे दृढबद्धपरिकरा अपि प्रागुदीरितमहादेवीयपद्ये कस्य वा पदस्याऽऽक्षेप्तृभिः समुद्भावितोऽर्थो निष्पद्यत इति । लुप्तप्रायमिति पदस्य तादृगर्थं सभावयथ चेत्, नैतत्समञ्जसम् । 'प्रायेण लुप्तं लुप्तप्रायम्' इति हि तस्य समस्तपदस्य विग्रहः । सुप्सुपेति समासः । प्रायःशब्दोऽत्र 'प्रायो भूम्न्यन्तगमने' इत्यमरात्, 'तुल्यबाहुल्ययोरपि' इति विश्वकोशाच्च प्रोपसृष्टादयतेर्घञि प्रोपसृष्टादेतेर्वा 'एरच्' ( पा० सू० ३ । ३ । ५६ ) इत्यचि निष्पन्नो बाहुल्यवाची । यथा—प्रायेण भोज्या ब्राह्मणाः । बाहुल्येनेत्यर्थः । यथा वा साहित्यदर्पणे—

तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा ।
लिङ्गिनश्छन्नकामाद्या आसा ( वेश्यानां ) प्रायेण वल्लभाः ॥ इति ।

उक्तोदाहरणद्वये प्रायशब्द उक्तानां बाहुल्यं बोधयति न पुनरवधारणम् । एवं परःकोटिषु वाक्येषु प्रायशब्दो बाहुल्यार्थबोधक एव दरीदृश्यते न पुनरेकान्ततः सर्वथालोपात्मक । अतः प्रकृतमहादेवीयपद्यस्थलुप्तप्रायशब्दोऽपि सत्याषाढीयहिरण्यकेशिसूत्रलिखितपुस्तकानां नतु श्रौतस्मार्तयाज्ञिककर्मपारम्पर्यागतप्रचारस्य बाहुल्येन लोपं सूचयति नतरां लिखितपुस्तकानामपि सर्वात्मनाऽभावम् । एतावता लुप्तप्रायशब्दस्य परमाणुतोऽपि लुप्तार्थकत्वासम्भवात्, तादृशार्थकान्यपदस्य तस्मिन्पद्ये लेशतोऽप्यसद्भावात्, 'दैवादासीत्क्वचित्क्वचित्' इति तत्सूत्रपुस्तकसत्ताबोधकाग्रिमग्रन्थविरोधाच्च महादेवीयं लुप्तप्रायमिति पदं हेतूकृत्य केषांचित्कलुषीकृताशयानाम् 'अपि मध्ये इदं सूत्रं लुप्तमासीत्' इति साधिक्षेपं विधानं सुदूरं प्रक्षेप्तव्यम् ।

वैजयन्तीकृदुक्तस्य लुप्तप्रायमिति पद्यस्य नूनमिदमेवाऽऽकूतमव बोद्धव्यम्—यदा किल पण्डितप्रकाण्डो महादेवदीक्षितमहाभागो हिरण्यकेशिसूत्रं व्याख्यातुं प्रावर्तिष्ट तदानीं प्रायः शतकत्रितयतः प्राक्तने काले यथेदानीं मुद्रणमन्दिरादिसद्भावात्पुस्तकप्राप्तिसौलभ्यं, तथा तत्काले मुद्रणकलाद्यभावात्पुस्तकप्राप्त्यसौलभ्यात्, लिखितपुस्तकानामप्राचुर्यात्, सत्स्वपि वा केषांचिदभ्यासे लिखितपुस्तकेषु प्रणाशशङ्कयाऽतिमात्रप्रयत्नसमासादितपुस्तकानां पुनरात्यन्तिकविश्वासाद्दते वितरणाप्रवृत्तेश्च तत्सूत्रपुस्तकसंपिपादयिषया प्रयतमानोऽपि

कंचित्कालं तल्लब्धुमनीशानः सहजतयैवोदलीलिखत्, न पुनर्लोपभा-ख्याऽं लुप्तप्रायमित्यादि । नो चेत्कथं नु नाम ' दैवादासीत्क्वचित्क-चित् ' इत्यग्रिमं सूत्रपुस्तकसत्ताधायकं महादेवीयं विधानं सांगत्यं भजेत । सत्येवं लिखितपुस्तकदौर्लभ्यमात्रमाचक्षाणेन श्रीमता महा-देवेनोल्लेखितवचसो वटपिप्पलमूलन्यायेन कैश्चन महाभागैर्विपर्यस्य लुप्तप्रायशब्दार्थं प्रकल्प्य च पुनरवास्तवमर्थं विहितं ' अपि मध्य इदं सूत्रं लुप्तमासीत् ' इति विधानं कियताऽंशेनावितथभावं ढौकेत तद्विमर्शपटिष्ठाश्चतुरचेतसः सुधिय एव विभावयन्तु ।

यत्तु केनाचिदर्थविधानैकचतुरेण व्युत्पन्नकुलललामेन स्वमतोपष्ट-म्भार्थं ' दैवादासीत्कचित्काचित् ' अत्रत्यस्य क्वचित्क्वचिदिति पद-द्वयस्य ताम्रपर्णीतीरस्थग्रामपत्तनाद्यधिकरणविषये संबन्धमकृत्वैव प्रक-ल्प्य च तं सूत्रगताध्यायविषये हठादिव ' केचन केचन प्रश्नाः—अध्यायाः—मयाऽऽसादिताः ' इति महादेवीयोऽभिप्रायः प्रतिपाद्यते, तत्प्रतिपादनं त्वतिरभसोक्तत्वादत एव फल्गुतमत्वाच्च नाऽऽदर्तव्यम् । यतः—' यज्ञं व्याख्यास्यामः ' इति सूत्रव्याख्याने श्रीमान्वैजय-न्तीकृन्महादेवः सप्तविंशतिप्रश्नात्मकहिरण्यकेशिसूत्रस्य यथानुपूर्व्यं समासतः प्रश्नाङ्कनिर्देशपूर्वकं सकलप्रश्नगतविषयान्निरदिक्षत् , यदि पुनर्वृत्तिकृत्समग्रं सूत्रं नालप्स्यत, अपि नाम कथं तर्हि सर्वेषामपि प्रश्नानां विषयानाख्यातुमशक्ष्यत् । तस्मादामूलचूडं सत्याषाढहिरण्य-केशिसूत्रं श्रीमहादेवः समासादितवानित्यत्र न खलु बिन्दुमात्रोऽपि संदेहावसरः ।

अत्रेदमवधेयम्—स्ववाचकोत्तरप्रायशब्दोदितेन स्वबाहुल्येन स्व-व्यतिरिक्तार्थस्य काचित्कत्वं सूच्यते । अत्र च सूत्रशब्देन सूत्र-पुस्तकमुच्यते । तच्च लुप्तप्रायमित्युक्तौ लुप्तव्यतिरिक्तस्य- विद्यमानस्य सूत्रपुस्तकस्य काचित्कत्वं सूचितं भवति। तदेव च ' दैवादासीत्कचि-त्कचित् ' इत्यनेनाभिहितम् । तत्र क्वचिदित्येनाधिकरणतया निर्दि-ष्टोऽर्थ उत्तरार्धेन स्पष्टीकृतः । उत्तरार्धं चैवशब्दघटितत्वान्न विधा-यकं किंतु व्यवच्छेदकम् । एष एव चास्य श्लोकस्यार्थः पूर्वोत्तरार्ध-संगतिपूर्वकः संदृश्यते । प्रागुक्ताक्षेपकप्रदर्शितप्रकारेण यदि ' इदं सूत्रमित्यस्यैतत्सूत्रान्तर्गता बहवः प्रश्ना लुप्ताः ' इत्यर्थः, तथा ' दै-

वादासीत्क्वचित्क्वचिदित्यस्यैतत्सूत्रान्तर्गताः केचित्प्रश्ना विद्यन्ते' इत्यर्थः, तर्हि तद्विशदीकरणमुत्तरार्धेन न संभवति । उत्तरार्धे हि ताम्रपर्णीतीररूपो देशविशेषः प्रदर्शितो नतु प्रश्नविशेषः । अथान्यदेव तदपूर्वं किंचिदुक्तं नतु पूर्वार्धस्य विशदीकरणमिति वैयात्येन ब्रूषे चेत्, द्वयोरर्धयोर्मिथोऽसंबद्धार्थप्रतिपादकतापत्तिः । तत्रत्यैवशब्दानर्थक्यापातश्च । किंचेदं सूत्रमित्यनेन किं समग्रमेतत्सूत्रं परामृश्यतेऽथवा तत्रत्यावान्तरवाक्यव्यक्तयः । नाऽऽद्यः । क्वचिदित्यनेन निर्दिष्टानां प्र॰ानां तादृशसमग्रसूत्राधिकरणत्वासंभवात् । नान्त्यः । लुप्तप्रायमिदं सूत्रमित्यस्यैव हि, आसीदित्यत्र कर्तृतया संबन्धः । यल्लुप्तप्रायं तदेव क्वचिदासीदित्यर्थः । सूत्रपदस्य समग्रसूत्रार्थबोधकत्वाभावे याः सूत्रव्यक्तयो लुप्तास्तदन्याः काश्चिद्विद्यन्त इत्यतो लुप्तप्रायमिदं सूत्रमित्यनेन बोधितस्याऽऽसीदित्यत्र कर्तृतया संबन्धो दुर्वचः । किंचेदं सूत्रमित्यत्रेदंशब्देन सूत्रव्यक्तिविशेषस्य परामर्शो दुर्लभः । बुद्धिस्थस्य व्याचिख्यासितस्य समग्रस्यैव परामर्शो न्याय्यः । अथ यल्लुप्तं तस्य विद्यमानत्वं कथमिति विरोधस्तु नोद्भावनीयः । देशभेदेन विरोधपरिहारात् । प्रायक्वचिच्छब्दाभ्यां चैतदेव सूचितं भवति । उत्तरार्धेन चैतत्स्पष्टीकृतम् । क्वचित्पदेनास्पष्टतया निर्दिष्टो देशविशेषस्ताम्रपर्ण्यास्तीर इत्यनेन स्पष्टीकृतः । एवशब्देन व्यवच्छेद्यतया प्रदर्शितं देशान्तरं लोपस्याधिकरणमुक्तमिति । एतेन गगनमण्डले चित्ररचनाचातुरीं प्रदर्शयन्त आक्षेप्तारः परास्ताः ।

अथ तावद्धिरण्यकेशिसूत्रस्य महाप्रामाणिकधौरेयपण्डितप्रकाण्डग्रन्थकारकृतोल्लेखकालदृष्ट्या मनागिव विचारं विधातुमिच्छामः । तत्राऽऽदौ शालिवाहनस्य षोडशसप्तदशाष्टादशेषु शतकेषु हिरण्यकेशिसूत्रस्य लिखितपुस्तकानामानन्दाश्रमसंस्थायां संप्रति विद्यमानत्वात्, नातिप्राचीनायां मिताक्षराया बाळंभट्टयाख्यटीकायां बहुत्र हिरण्यकेशिसूत्रोल्लेखात्, वैजयन्तीज्योत्स्नामहालिङ्गा( वाञ्छेश्वरी )उज्ज्वलादिव्याख्याः प्रणेतॄणां श्रीमहादेवदीक्षितभट्टगोपीनाथवाञ्छेश्वरमहादेवादीनां गतशतकत्रय एव वर्तमानत्वाच्च तदानींतनी हिरण्यकेशिसूत्रसत्ता तु निर्बाधैव । शालिवाहनस्य षोडश्याः शताब्द्याः पूर्वदले पञ्चदश्याः

१ ( पृ० २१ प० ३ ) ।

शताब्द्या उत्तरदले चावस्थितिभाजा महामहनीययशसा भट्टकमलाकरेण स्वप्रणीतनिर्णयसिन्धौ मातृगोत्रजविचारादिस्थलेषु 'अथाज्ञातबन्धोः पुरोहितप्रवरेणाऽऽचार्यप्रवरेण वा ' इत्यादिसत्याषाढीयहिरण्यकेशिसूत्रविषयकोल्लेखो बहुत्र प्रादर्शि, तेन च शालिवाहनीये पञ्चदशशतके नाऽऽसीद्धिरण्यकेशिसूत्रलोप इति संसिध्यति । तथैव निर्णयसिन्धौ कमलाकरतः प्रायः शतकेन शतककल्पेन शतकाधिकेन वा कालेन प्राक्तनस्य हिरण्यकेशिसूत्रव्याख्याकृतः श्रीमातृदत्ताचार्यस्य प्रथमपरिच्छेदे विकृतीष्टिकालनिर्णय उल्लेखतश्चतुर्दश्यां तत्पूर्वस्यां वा शताब्द्या निःसंदेहोन्मेषं हिरण्यकेशिसूत्रं जागराचकारैव । तथा च १२१८ तमाद्वत्सरादारभ्य १३०८ तमं शालिवाहनीयं संवत्सरं यावत्सत्ताजुषां श्रीमाधवाचार्यापरनामधेयश्रीमद्विद्यारण्यस्वामिनामथर्वसंहिताभाष्योपोद्घाते 'यज्ञं व्याख्यास्यामः । स त्रिभिर्वेदैर्विधीयते ' इत्युल्लेखेन, तथा चान्यत्रापि ' जरां गच्छसि परिधत्स्व वासः ' ( का० १ अ० १ सू० २२ ) इत्याद्युल्लेखैश्च त्रयोदशशतकेऽपि स० हि० सूत्रसद्भावो नूनमभूदेव । ततोऽपि प्राचीनतमे समये भूयसांऽशेन द्वादशे शालिवाहनीये शतकेऽवस्थितिभाक् श्रीमदपरार्कः स्वप्रणीतायां याज्ञवल्क्यस्मृतिटीकायामपरार्काभिधायामाचाराध्याये विवाहप्रकरण एकोननवतितमे पद्ये 'यदाह सत्याषाढः—न स्वामित्वस्य भार्याया० प्रतिनिधिर्विद्यते ' इति हि० सूत्रमुल्लिलेख । तेनापि विशदी भवति द्वादशे शतके स० हि० सूत्रं पुनरेकान्ततो बोभवीति स्मैवेति । एवमपि १८७४ ख्रिस्ताब्दे ( बनारसप्रिन्टिंगप्रेस ) इत्याख्यमुद्रणमन्दिरेऽङ्कितस्य पदवाक्यप्रमाणपारावारपारीणधर्माधिकारिश्रीनन्दपण्डितविरचितदत्तकमीमांसाप्रबन्धस्य चतुस्त्रिंशे पत्रे 'नित्यानां द्व्यामुष्यायणाना० ' इत्यादिहि० सूत्रे व्याख्यातं चैतच्छबरस्वामिभिः—' द्व्यामुष्यायणप्रसङ्गेन० जातास्ते परिग्रहीतुरेव ' इति शबरस्वामिकृतस० हि० सूत्रभाष्योल्लेखतः, श्रीकुमारिलभट्टात्प्राचीनतमस्य श्रीशबरस्वामिनो दृष्टिपथेऽपि स० हि० सूत्रमासांचक्र एवेति निर्विचिकित्सम् ।

---

१ ( प्र० १ प० १ ) । २ ( प्र० १९ प० १ ) । ३ ( प्र० ३ प० १ ) ।

'नन्दाः पूर्णं भूश्च नेत्रे मनुजानां च वामतः ।
मेलने वत्सरो धाता युधिष्ठिरशकस्य वै ॥
भट्टाचार्यकुमारस्य कर्मकाण्डस्य वादिनः ।
जातः प्रादुर्भवस्तस्मिन्विज्ञेयो वत्सरे शुभे ॥

इति जिनविजयीयपद्यद्वयेन कुमारिलजन्मनः सप्तत्यधिकशतद्वययुतसहस्रद्वयात्मकः कालोऽतिचक्राम ।

'दृष्ट्वा भाष्यं हृष्टचेताः कुमारः प्रोचे वाचं देशिकं शंकरेन्द्रम् ।
लोके त्वल्पो मत्सरग्रामशाली सर्वज्ञानो नाल्पभावस्य पात्रम् ॥

इति विद्यारण्यविरचितश्रीमच्छंकरदिग्विजयस्य सप्तमसर्गस्थद्व्यशीतितमपद्येन श्रीमदाद्यशंकराचार्यकुमारिलौ समानकालिकाविति संसिद्धम् । श्रीमदाद्यशंकराचार्यचरणेभ्यः समर्पितात्सार्वभौमेन सुधन्वना भूपतिना ताम्रशासनाद्युधिष्ठिरशकीये २६६३ तमे वत्सर आसीदाद्याचार्यसमवस्थितिरिति मतेऽपि तत्समकालिकस्य श्रीकुमारिलसद्भावस्य षोडशोत्तरसप्तदशशतकाधिकः समयो व्यतीयायैव । अर्वाचीनमतेऽपि पुनरेकादशशतकेभ्यः प्रागेव श्रीकुमारिलसत्तेति विशदं भवति । शाबरभाष्योपरि श्लोकवार्तिकतन्त्रवार्तिकादिव्याख्याकृतः श्रीकुमारिलादतितमां प्राचीनस्य श्रीशबरस्वामिनः सत्याषाढसूत्रे भाष्यसद्भावात्, सार्धसहस्रद्वयादपि नूनमतिमात्रे प्राक्तने काले सिद्धे च स० हि० सूत्रसद्भावे, तत्कालिकसूत्रसत्तया च तदुत्पत्तिक्षणादारभ्य श्रीशबरस्वामिनं यावदनुमित्या हि० सूत्रसत्तासिद्धौ मध्ये तल्लोपमाचक्षाणाः परास्ताः ।

यत्तूच्यते 'चरणव्यूहे, सत्याषाढी हिरण्यकेशी' इति भिन्नं शाखा(सूत्र)द्वयं श्रूयते, अर्थात्साम्प्रतिकी शाखैव नास्ति । अतः खलु हिरण्यकेशिसूत्रं विद्यते न वेति मदीयान्संदेह इत्यादि' तदापातरमणीयम् । श्रीक्षेत्रकाशीस्थचौखम्बाग्रन्थमालायां मुद्रिते चरणव्यूहपरिशिष्टसूत्रे पुनरष्टाविंशे पृष्ठे 'तत्र खाण्डिकेयानां पञ्च भेदा भवन्ति । कालेता शाट्यायनी हैरण्यकेशी भारद्वाज्यापस्तम्बेति' एवंविधपाठसद्भावात्, तदितरलिखितपुस्तकेष्वपि भूयःसु तादृशस्यैव ग्रन्थस्य सत्तया च 'सत्याषाढी हिरण्यकेशी' इति पदद्वयपाठस्य प्रामादिकत्वात् । तथैव महीशूर(मैसूर)पत्तनेऽङ्किते बौधायनधर्मसूत्रेऽन्येषु वा

प्रभूतेषु लिखितपुस्तकेषु ' काण्वं बोधायनं त० । आपस्तम्बं सूत्रकारं त० । सत्याषाढं हिरण्यकेशिन त० । वाजसनेयं याज्ञवल्क्यं त० ' इति द्वितीयप्रश्ने पञ्चमाध्याये नित्यतर्पणप्रकरणे विशेषणघटितसत्याषाढपदनिर्देशात्, अपि च बाळंभट्टकमलाकरभट्टमाधवाचार्यादिभिः पण्डितमूर्धन्यैर्बाळंभट्टीनिर्णयसिन्ध्वथर्वसंहिताभाष्यादिषु भूयिष्ठेषु प्रबन्धेषु पुनरेकस्यैव सत्याषाढमुनिवरप्रणीतहिरण्यकेशिसूत्रस्योभयथाऽपि निर्देशात्तदेकत्वं विप्रतिपत्तिलेशविधुरं स्थिरी बभूव ।

अतीवगूढार्थमनन्यदर्शितं न्यायैश्च युक्तं रचयन्नसौ पुनः ।
हिरण्यकेशीति यथार्थनामभागभूद्वरात्तुष्टमुनीन्द्रसंमतात् ॥

अपि च—सत्यावलम्बनतया विदिताद्यसत्या-
षाढाभिधामभजदात्मपितुः सकाशात् ।
सूत्रप्रणीतिकृतविस्मयसूत्रकार-
मुख्यैर्महर्षिभिरवाप हिरण्यकेशान् ॥

इत्याद्यैर्नामद्वयहेतुं विशदयद्भिर्वैजयन्तीकृन्महादेवीयैरुल्लेखैरभिधानद्वितयनिर्दिष्टोऽपि पुनरेक एव सूत्रकार इति फलितम् । एतेन महादेवस्यैव स्वप्रतिपाद्यप्रतीपवचांसि नेगूहन्तः स्वीकुर्वन्तश्च पुनरन्यथैव संभाव्य लुप्तप्रायमिति वचनमर्धजरतीयन्यायमवलम्बमानाश्चरणव्यूहस्थं प्रामादिकपाठं क्रोडीकृत्य शाखाद्वयमिति व्याहरन्त आक्षेपका अपि निरस्ताः ।

यच्चाप्युच्यते—' तैत्तिरीयशाखाभाष्ये बोधायनापस्तम्बसूत्रयोरेव निर्देशो न पुनः सत्याषाढीयसूत्रस्य । तेन च तादानिके काले तत्सूत्रं लुप्तमेवाऽऽसीत् ' इति । नैतत्साम्प्रतम् । तैत्तिरीयशाखाभाष्यप्रणेत्रैव प्रणीते पुनरथर्वसंहिताभाष्ये बहुत्र स० हि० सूत्रोल्लेखसद्भावात् । न हि भाष्यं प्रणयता सर्वाण्यपि सूत्राणि संग्राह्याणीतीश्वरवचनं, न वा राजशासनं, नतरां वा दण्डकथनं किंतु तत्र निर्देष्टुरिच्छैव बलीयसी । अन्यथाऽथर्वसंहिताभाष्ये सत्याषाढीयहिरण्यकेशिकौशिकापस्तम्बाश्वलायनादीनामुल्लेखात्, बौधायनभारद्वाजशाङ्खायनादिसूत्राणां पुनरनिर्देशाच्चाऽऽक्षेपकमतेन तानि बौधायनादिसूत्राणि लोपभावं ढौकेरन् । तथैव ऋक्संहितादिभाष्येष्वपि भाष्यकृदनिर्दिष्टा ग्रन्था अभिधानशेषतामाटीकेरन् । तस्माद्ग्रन्थकृदनुल्लेखतो निर्दिष्टेतरग्रन्थानां पुनरदर्शनमित्यनुमानं बाढमनैकान्तिकमतिमात्रानर्थाधायकं च । एतेन

तैत्तिरीयशाखाभाष्ये स० हि० सूत्रोल्लेखासद्भावात्तत्सूत्रं लुप्तमित्यनुमाताऽस्ताङ्किका अपि प्रत्याख्याताः । ' सत्याषाढं हिरण्यकेशिनं त० ' इति प्रागुदीरितसत्याषाढमुनिवरविषयकबोधायनोल्लेखात्सत्याषाढीयसूत्रस्य बौधायनसूत्रतः प्राचीनत्वमपि वक्तुं युज्यते समकालिकत्वं वा।

यत्तु ' आपस्तम्बधर्मसूत्रस्य हिरण्यकेशिधर्मसूत्रस्य च बाहुल्येन साऽदृश्यं संदृश्यते । ततः शङ्क्यते चेतः स्वतन्त्रमिदं सूत्रं न वेति ' इत्याद्युक्तम्, तदपि न समञ्जसम् । यद्यपि भूयःसु सूत्रेषु समानत्वमवलोक्यते तर्ह्यपि कतिपयानि हिरण्यकेशिधर्मसूत्राणि नाऽऽपस्तम्बधर्मसूत्रे । न पुनरापस्तम्बीयानि कतिचन सूत्राणि हिरण्यकेशिधर्मसूत्रेऽवलोक्यन्ते । अपि चैकस्मिन्नपि सूत्रे पदविपरिवर्तनम् । तथा हि— ' अथाप्युदाहरन्ति—य आतृणत्त्यवितथेन० न द्रुह्येत्कतमच्चनाहेति ' ( २६ । १ । १८ ) तथा च ' न गायेन्न रोदेत् ' ( २६ । १ । ८३ ) इत्यादीनि हिरण्यकेशीयानि नाऽऽपस्तम्बीये धर्मसूत्रे । ' यदि स्नायाद्दण्डवत्प्लवेत् ' एवमादीनि पुनरापस्तम्बीयानि नहि हिरण्यकेशिधर्मसूत्रे । ' सप्तम आयुष्काममष्टमे ब्रह्मवर्चसकामम् ' अत्राऽऽपस्तम्बीये ' सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामम् ' इति पदविपर्यासः । यत्र च सत्याषाढीये ' पादोनम् ' ' अर्धोनम् ' तत्र पुनरापस्तम्बीये ' पादूनम् ' ' अर्धेन ' एवंजातीयकाः परःसहस्राः खलु विशेषाः साक्षात्क्रियन्ते । एतच्च वैषम्यं बाहुल्येनेति वदद्भिस्तैरप्यङ्गीकृतमेव । तस्मादुभयोरैक्यमिति न शङ्कनीयम् । कतिपयवाक्याना सादृश्याद्यदि ग्रन्थैक्यं कल्प्येत तर्हि, अग्निपुराणे षष्ट्यधिकत्रिशततमादिष्वध्यायेषु, 'कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः ' 'मोक्षोऽपवर्गोऽथाज्ञानमविद्याऽहंमतिः स्त्रियाम् ' 'पद्ये यशसि च श्लोकः शरे खड्गे च सायकः' 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ' ' जाबालः स्यादजाजीवो देवाजीवस्तु देवलः ' इत्यादीनां परःशतानाममरकोशस्थाना पद्यानां विद्यमानत्वादमराग्निपुराणयोरपि साम्यं प्रसज्येत । ऋक्तैत्तिरीयसंहितयोरपि पुनरेतादृशं साम्यं बहुत्राऽऽलोच्यते—' कृणुष्व पाजः ' ( १ । २ । १४ ) ' जीमूतस्य ' ( ४ । ६ । ६ ) ' यदक्रन्द० ' ( ४ । ६ । ७ ) 'मानो मित्रो ' ( ४ । ६ । ८ ) ' आशुः शिशानो ' ( ४ । ६ । ४ ) एवंप्रभृतयो बहवः खल्वनुवाका यथासंख्यं ( ३ । ४ । २२ ) ( ५ । १ । १९ ) ( २ । ३ । ११ ) ( २ । ३ । ७ ) ( ८ । ५ । २१ )

एवमादिषु स्थानेषु ऋक्संहितायां विद्यन्ते। मन्त्राः पुनः समानानुपूर्वीका भूयस्तमाः। तेनोभयोर्ऋक्तैत्तिरीयसंहितयोरपि तावत्यंशे किलैक्य-कल्पना समुदियात्। एतादृशानि साम्यानि तु प्रचुरेषु ग्रन्थेषु दृश्यन्ते। नैतावता ग्रन्थद्वयस्य स्वातन्त्र्यमतिशङ्कितुं युज्येत। एतेनोभयै-क्यमिति व्याहरन्तोऽपि निराकृताः।

प्रियमहाभागाः सत्याषाढीयहिरण्यकेशिसूत्रे यानाक्षेपाभासान्वय-मश्रौष्म यांश्चाद्राक्ष्म तान्सर्वानपि सप्रमाणं सविस्तरं सामञ्जस्येन प्रबलतराभिरुपपत्तिभिरतिगभीराभिश्च युक्तिभिः समूलमुन्मूल्य याव-न्मतिवैभवं निरकार्ष्म। यदीतरे केचनाऽऽक्षेपाभासा भवेयुरवशिष्टा-स्तर्हि पुनरनयैव दिशा परिहर्तव्याः प्रज्ञावद्भिः। नहि तत्रेतोऽपि वृथाऽनेहसं यापयितुं प्रवर्तामहे।

महोदयाः, इदमेकं च विज्ञापनीयमस्माकं कर्णे कुरुत, यदेतद्दशम-भागीयपुस्तके ग्रन्थपरिसमाप्त्यनन्तरं पाठभेदात्मकाशुद्धिशुद्धिपत्रकं पुटाङ्कपङ्क्त्यङ्कनिदर्शनपूर्वकं नियोजितं समीक्ष्येत श्रीमद्भिर्नहि ताः सर्वा अप्यशुद्धयः किंतु सूत्रान्तरीयाः पाठभेदाः। तत्संभवोऽपि पुनरेवं विभावनीयः—यदा किलैकादशप्रश्नमारभ्याग्रिमान् हि० सूत्रप्रश्नान-ङ्कितुं प्रावीवृताम, तदा खल्वेकस्यैव सवृत्तिकस्य पुस्तकस्योपलब्धे-रन्येषां पुनर्मूलमात्राणामपि लिखितपुस्तकानामसंनिहिततया मूलात्मक-सूत्रस्याऽऽनुपूर्वीसाम्यदर्शनासंभवाद्वृत्तिसकलयितृपरिगृहीतमूलसूत्रमेव वास्तवमिति संभावनया मूलवृत्त्योः पुनः समन्वितया च तादृशमेव वयमाङ्क्ष्महि। कतिपयदिवसानन्तरं संगृहीतेषु च केषुचिन्मूलभूत-स० हि० सूत्रपुस्तकेषु, निरीक्षितेषु च तुल्यानुपूर्वीदृष्ट्या पाठभेदैर्भूयो-भिस्तानि लिखितपुस्तकानि मुद्रितमूलेन परस्परमपि विसमवादिषुः। ततो वैदिकप्राचीनपठनपाठनपारम्पर्यं समन्विष्य लिखितपुस्तकेष्वपि पुनरनेकेषां पुस्तकानां समन्वयं सुविचार्य ते पाठभेदाः प्रादर्शिषत।

एतस्य स० हि० सूत्रस्याष्टमे भागे विंशप्रश्नसमनन्तरमेवाऽऽ-चारकाण्डसंस्कारकाण्डशान्तिकाण्डनवग्रहपूजादिविविधविषयपरिप्लुतो गृह्यशेषाख्योऽष्टपटलात्मक एकः सत्याषाढीयः प्रश्नश्च संगृहीतः। तत उपनयनादिचौलान्ताः केनापि विदुषा प्रणीताः २६० गृह्यकारिकाः

कर्तृशब्देन खड्गाभिधायिना नरको लक्ष्यते । पतत्यनेनेति पत्यम् । एवंभूतं विद्याग्रहणं नरकहेतुर्भवति । अनायुष्यं चानायुष्करं च ॥ ३ ॥

तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात् ॥ ४ ॥

अत एवावरेषु अर्वाचीनेषु कलियुगवर्तिषु योनिषु न जायन्ते मन्त्रदृशो न भवन्ति । नियमातिक्रमस्येदानीमवर्जनीयत्वात् ॥ ४ ॥

कथं तर्ह्यद्यतना अतिक्रामन्तोऽपि नियमानल्पेनैव यत्नेन चतुरो वेदान् गृह्णन्ति । युगान्तरे सम्यगनुष्ठितस्य नियतकर्मणः फलशेषेणेत्याह—

*श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनःसंभवेऽपि ॥ ५ ॥

पुनःसंभवः पुनर्जन्म ॥ ५ ॥

अत्रोदाहरणम्—

अथ यथा श्वेतकेतुः ॥ ६ ॥

श्वेतकेतुरल्पेनैव कालेन चतुरो वेदाञ्जग्राह । तथा च च्छान्दोग्यम्—श्वेतकेतुर्हाऽऽरुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति । स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयायेति । ६ ॥

एवं नियमातिक्रमे दोषमुक्त्वा तदनुष्ठाने सिद्धिमाह—

यत्किंच समाहितोऽब्रह्माऽप्याचार्यादुपयुङ्क्ते ब्रह्मवदेव तस्मिन्फलं भवति ॥ ७ ॥

अब्रह्मापि पररूपं कतन्तवत् । अपेर्वाऽकारलोपः । पिहितपिनद्धादिवत् । वेदव्यतिरिक्तमपि यत्किंचिद्विषमन्त्रादिकं समाहितो नियमवान्भूत्वाऽऽचार्यादुपयुङ्क्ते गृह्णाति तस्मिन्ब्रह्मवदेव फलं भवति ॥ ७ ॥

निग्रहानुग्रहशक्तिरप्यस्य भवतीत्याह—

अथो यत्किंच मनसा वाचा चक्षुषा वा संकल्पयन्ध्यायत्याहाभिविपश्यति वा तथैव तद्भवतीत्युपदिशन्ति ॥ ८ ॥

---

* [illegible] श्रुतर्षय उच्यन्ते । × पररूपं कतन्तवदपेर्वाऽकारलोपः । पिहितपिनद्धादि[illegible]अप्याचार्यादिति पाठ उज्ज्वलाकृतोऽग्र आसीदित्यनुमीयते । युक्तायुक्तं सद[illegible]विचारणीयम् ।

अथो अपि च यत्किच निग्रहात्मकमनुग्रहात्मक वा संकल्पयंक्षिकीर्षन्मनसा निन्दितेन शिवेन वा ध्यायतीत्थमिदमस्यास्त्विति तथैव तद्भवति। एव यत्किच संकल्पयं श्चक्षुषा घोरा(घोरे)ण मंत्रेण वाऽभिविपश्यति तथैव तद्भवतीत्युपदिशन्ति धर्मज्ञा॰ ॥८॥

अवश्यं धर्मयुक्तेनाध्येतव्यमित्युक्तम्। इदानी धर्मो लक्षणतस्त्रिधेत्याह—

**गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्तिरिति ॥ ९ ॥**

यैरनुष्ठितैर्गुरुः प्रसीदति तानि गुरुप्रसादनीयानि पादप्रक्षालनादीनि। स्वस्तीत्यविनाशनाम तत्प्राप्तिसाधन स्वस्त्ययनम्। तच्च त्रिविधम्। दृष्टार्थमदृष्टार्थमुभयार्थं चेति। दृष्टार्थं बाहुनदीतरणादिनिषेधः। अदृष्टार्थं क्षारादिनिषेधः। उभयार्थं भिक्षाचरणादीनि। अध्ययनसवृत्तिरधीतस्य वेदस्याभ्यासः ॥ ९ ॥

**अतोऽन्यानि निवर्तन्ते ब्रह्मचारिणि ॥ १० ॥**

कर्माणीति शेषः। एतेभ्योऽन्यानि कर्माणि निवर्तन्ते। ब्रह्मचारिणा न कर्तव्यानीत्यर्थः ॥ १० ॥

**स्वाध्यायधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुः सिध्यति ब्रह्मचारी ॥११॥**

स्वाध्यायधृक्। अधीतस्य स्वाध्यायस्य धारयिताऽविस्मर्ता। धर्मे रुचिर्यस्यासौ धर्मरुचि.। तपस्वी नियमेषु तपःशब्द इति तद्वान्। ऋजुरमायावी। मृदुः क्षमावान्। एवंभूतो ब्रह्मचारी सिध्यति सिद्धिं प्राप्नोति। उक्ता सिद्धि.। अथो यत्किंच मनसेत्यत्रोक्ताना पुनर्वचनमादराय। तदनुष्ठाने फलभूमाऽतिक्रमे च दोषभूमेति ॥११॥

**सदा महान्तमपररात्रमुत्थाय गुरोस्तिष्ठन्प्रातरभिवादर्यी( ये )तासावहं भो इति ॥ १२ ॥**

सदा प्रतिदिनं महान्तमपररात्रेः पश्चिमयाममुत्तिष्ठन्नुत्थाय च समीपे तिष्ठन्गुरोः प्रातरभिवादयी( ये )ताभिवादयेऽसावहं भो इति ब्रुवन्। असावित्यात्मनो नामनिर्देशः। यथाऽभिवादये यज्ञशर्माऽहं भो इति ॥ १२ ॥

**समानग्रामे च वसतामन्येषामपि वृद्धतराणा प्राक्प्रातराशात् ॥ १३ ॥**

अन्येषामपि वृद्धतराणा प्राक्प्रातराशात्प्रातर्भोजनात्प्राक्[1]मानाभिवादनमभिवादयी(ये)त ते चेत्समानग्रामे वसन्ति ॥ १३ ॥

---

१ ख॰ °दमभिवादयी°।

**प्रोष्य च समागमे ॥ १४ ॥**

यदा स्वयं प्रोष्य चाऽऽगत आचार्यादयो वा तदाऽप्यभिवादयी(ये)त। इद नैमित्तिकं पूर्वं नित्यम् ॥ १४ ॥

अथ काम्यम्—

**स्वर्गमायुश्चेप्सन् ॥ १५ ॥**

अभिवादयी(ये)तेत्येव ॥ १५ ॥

अभिवादनप्रकारं वर्णानुपूर्व्येणाऽऽह—

**दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीतोरःसमं राजन्यो मध्यसमं वैश्यो नीचैः शूद्रः ॥ १६ ॥**

ब्राह्मणोऽभिवादयमान आत्मनो दक्षिण बाहु श्रोत्रसमं प्रसार्याभिवादयी(ये)तोरःसमं राजन्यो दक्षिण बाहु प्रसार्याभिवादयी(ये)तेति गम्यते। एवमुत्तरयोरपि । मध्यसममुदरसमं वैश्यः । ऊरुसममित्यन्ये । नीचैः पादसमं शूद्रोऽभिवादयी(ये)त ॥ १६ ॥

**प्राञ्जलिः ॥ १७ ॥**

प्राञ्जलिर्यथा भवति तथाऽभिवादयी(ये)त । अञ्जलिं कृत्वेत्यर्थ.। प्रा(सा)ञ्जलिरिति तु युक्तः पाठः ॥ १७ ॥

**प्लावनं च नाम्नोऽभिवादने पूर्वेषां वर्णानाम् ॥ १८ ॥**

अभिवादनस्य यत्प्रत्यभिवादनं तत्राभिवादयितुर्नाम्नः प्लावन कर्तव्यम् । प्लुतः कर्तव्य इत्यर्थः। पूर्वेषा वर्णाना शूद्रवर्जितानाम् । प्रत्यभिवादेऽशूद्र इति पाणिनिस्मृति.। तत्र वाक्यस्य टेरनुवृत्तेः। प्रत्यभिवादवाक्यस्यान्ते नामयोगः । तस्य टेः प्लुत·। आयुष्मान्भव सौम्य ३ इति प्रयोक्तव्यम् । स्मृत्यन्तरवचनान्नाम्नश्च पश्चादकार. । तथा च मनुः—

> आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ।
> अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुत· ॥ इति ।

आयुष्मान्भव सौम्य देवदत्त३ अ इति प्रयोगः । शंभुर्विष्णुश्चक्रपाणिरित्येवमादीना नाम्ना सबुद्धौ गुणे कृते ‘ एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ’ इत्ययमपि विधिर्भवति । अन्ते अकारः । तयोर्य्वावचि संहितायामिति यकारवकारौ च भवतः । शंभा३व विष्णा३व चक्रपाणा३य इति । प्रत्यभिवादने चेति चकारस्यार्थं न पश्याम. । तस्मादनर्थक एव चकार. । अनर्था अपि निपाताः प्रयुज्यन्ते ॥ १८ ॥

उदित आदित्य आचार्येण समेत्योपसंग्रहणम् ॥ १९ ॥

उदिते त्वादित्य आचार्येणाध्ययनाय समेत्य । वक्ष्यमाणविधिनोपसंग्रहणं कुर्यात् ॥ १९ ॥

सदैवाभिवादनम् ॥ २० ॥

अन्यदा सर्वदा पूर्वोक्तप्रकारेणाभिवादनमेव । अयमनुवाद उत्तरया विवक्षया ॥ २० ॥

उपसंग्राह्य आचार्य इत्येके ॥ २१ ॥

अभिवादनप्रसङ्गे सदैवोपसंग्राह्य आचार्य इत्येके ॥ २१ ॥

किमिदमुपसंग्रहणं तदाह—

दक्षिणेन पाणिना दक्षिणं पादमधस्तादभिमृश्य सकुष्ठिकमुपसंगृह्णीयात् ॥ २२ ॥

आत्मनो दक्षिणेन पाणिनाऽऽचार्यस्य दक्षिणं पादमधस्तादभिमृश्य । अधःशब्द उपरिभावे । अधस्ताच्चोपरिष्टाच्चाभिमृश्य सकुष्ठिकं सगुल्फम् । साङ्गुष्ठमित्यन्ये । उपसंगृह्णीयात् । इदमुपसंग्रहणम् । एतत्कुर्यात् । ॥ २२ ॥

उभाभ्यामेवोभावभिपीडयत उपसंग्राह्यावित्येके ॥ २३ ॥

उभाभ्यामेव पाणिभ्यामुभावेवाऽऽचार्यस्य पादावभिपीडयतो माणवकस्योपसंग्राह्यावित्येके मन्यन्ते । अभिपीडयत इति कृत्यानां कर्तरि वेति षष्ठी । अत्र मनुः—

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

इति ॥ २३ ॥

सर्वाह्णं सुयुक्तोऽध्ययनादनन्तरोऽध्याये ॥ २४ ॥

सर्वं च तदहश्चेति सर्वाह्णम् । राजाहःसखिभ्यष्टच् । अह्नोऽह्न एतेभ्य इत्यह्नादेशः । अह्नोऽदन्तादिति णत्वम् । अत्यन्तसंयोगे द्वितीया । सर्वाह्णं तदा सुयुक्तः सुसमाहितोऽनन्यचित्तः । अध्ययनादनन्तरः । नान्तरयतीत्यनन्तरः । अध्ययनाद्यथा नाऽऽत्मानमन्तरयति यथाऽध्ययनान्न विच्छिद्यते तथा स्यात् अध्याये स्वाध्यायकाले । अध्याय इत्यनुवादः ॥ २४ ॥

तथा गुरुकर्मसु मनसा चानध्याये ॥ २५ ॥

मनसा चानध्याय इति विशेषाभिधानादनध्याय इति प्रायेण पठन्ति । तत्र नकारश्छान्दसोऽपपाठो वा । गुरुकर्मसु तथा स्यात् सुयुक्तोऽनन्तर एव स्यादनध्याये ॥ २५ ॥

आहूताध्यायी च स्यात् ॥ २६ ॥ ( ख० ५ ) ।

आचार्येणाऽऽहूतोऽधीयी । नाध्ययने स्वयं प्रवर्तयेत् ॥ २६ ॥ ( ख० ५ ) ।

**सदा निशायां गुरुꣳ संवेशयेत्तस्य पादौ प्रक्षाल्य संवाह्यानुज्ञातः संविशेत् ॥ २७ ॥**

सदा प्रत्यहं निशायामतिक्रान्ते प्रदोषे संवेशयेत् । कथम् । गुरोः पादौ प्रक्षाल्य संवाह्य च । संवाहनं पादतले हस्तेन मर्दनम् । अनुज्ञातः संविशेत् । गुरुणाऽनुज्ञातः स्वयं संविशेत् । शयीत ॥ २७ ॥

**न चैनमभिप्रसारयीत ॥ २८ ॥**

एनमाचार्यं प्रति पादौ न प्रसारयेत् ॥ २८ ॥

**न खट्वायाꣳ सतोऽभिप्रसारणमस्तीत्येके ॥ २९ ॥**

यदा तु गुरुः खट्वायां निशि शेते तदा तं प्रति पादयोः प्रसारणं न दोषायेत्येके मन्यन्ते । स्वपक्षस्तु तत्रापि दोष इति ॥ २९ ॥

**न चास्य सकाशे संविष्टो भाषेत ॥ ३० ॥**

तस्याऽऽचार्यस्य सकाशे स्वयं संविष्टः शयानो नाभिभाषेत । कार्यावेदनादावुत्थायैव भाषेत ॥ ३० ॥

**अभिभाषितस्त्वासीनः प्रतिब्रूयात् ॥ ३१ ॥**

आचार्येणाभिभाषितः आसीनस्तु प्रतिब्रूयात् । एतदाचार्ये आसीने शयाने वा ॥ ३१ ॥

**अनूत्थाय तिष्ठन्तम् ॥ ३२ ॥**

यदा त्वाचार्यस्तिष्ठन् ब्रूते तदा तमनूत्थाय प्रतिब्रूयात् ॥ ३२ ॥

**गच्छन्तमनुगच्छेद्धावन्तमनुधावेन्न सोपानद्वेष्टितशिरा अवहितपाणिर्वाऽऽसीदेत् ॥ ३३ ॥**

अनुधावेदित्यन्तं स्पष्टार्थम् । उत्तरत्रोपानत्प्रतिषेधान्न सोपानदित्यनुवादोऽध्वापन्नास्त्विति प्रतिवेदितुम् । आचार्यसमीपे न सोपानत्क आसीदेत् । अपि वा वेष्टितशिरा अवहितपाणिर्दात्रादिहस्त एवंभूतोऽपि नाऽऽसीदेत् ॥ ३३ ॥

**अध्वापन्नस्तु कर्मयुक्तो वाऽऽसीदेत् ॥ ३४ ॥**

अध्वानं प्राप्तोऽध्वापन्नः । कर्मणि दात्रादिसाध्ये प्रवृत्तः कर्मयुक्तः । एवंभूतस्तु सोपानत्कादिकोऽप्यासीदेत् ॥ ३४ ॥

न चेदुपसीदेत् ॥ ३५ ॥

न चेदाचार्यसमीप उपसीदेदुपविशेत् । यदि तूपविशेदध्वापन्नः कर्मयुक्तो वा तदो-पानत्प्रभृतीनि विहायोपविशेत् ॥ ३५ ॥

देवमिवाऽऽचार्यमुपासीताविकथयन्नविमना वाचꣳ शुश्रूष-माणोऽस्य ॥ ३६ ॥

योऽय देवं भजते स तद्भावनयाऽऽचार्यमुपासीन । अविकथयन् । व्यर्थाः कथा वि-कथाः । ता अकुर्वन् । अविमनाः । अविक्षिप्तमनाः । वाचमस्याऽऽचार्यस्य शुश्रूष-माणः ॥ ३६ ॥

अनुपस्थकृतः ॥ ३७ ॥

*उपस्थकरण प्रसिद्ध तत्कृत्वा नोपासीत ॥ ३७ ॥

अनुवाति वीतः ॥ ३८ ॥

वातेऽनुवाति वीतो विपर्ययेण इत उपासीत । प्रतिवातं तु वक्ष्यमाणेन प्रतिषिध्यते । मनुरप्याह—प्रतिवातेऽनुवाते च नाऽऽसीत गुरुणा सह । इति ॥ ३८ ॥

अप्रतिष्टब्धः पाणिना ॥ ३९ ॥

पाणिना प्रतिष्टब्धो न स्यात् । पाणितलं भूमौ कृत्वा पाण्यालम्बनो नाऽऽसीत ॥ ३९ ॥

अनपश्रितोऽन्यत्र ॥ ४० ॥

अन्यत्र कुड्याादावाश्रितो न स्यात् । कुड्याद्यपश्रितो नाऽऽसीत ॥ ४० ॥

यज्ञोपवीती द्विवस्त्रः ॥ ४१ ॥

यदा द्विवस्त्रस्तदाऽन्यतरेण वाससा यज्ञोपवीती स्यात् । अथवा सूत्रमेवोपवीतार्थ-मित्येष विधिस्तदा न भवति ॥ ४१ ॥

अधोऽनिवीतस्त्वेकवस्त्रः ॥ ४२ ॥

यदा त्वेष एकवस्त्रो भवति तदाऽनिवीतः स्यात् । न तस्य दीर्घस्याप्येकदेशेनोत्तरी-यम् ॥ ४२ ॥

---

* उपस्थ शब्द आसनाविशेषं ब्रूते । आकुञ्चितस्य सव्यजानुन उपरि दक्षिणपादप्रक्षेपं कृत्वा यत्सुखेनावस्थान तदुपस्थकरणमिति । उपस्थं कृत्वा ( तै. आ० २।११ ) इत्यत्र स्पष्टमित्यर्थ. ।

अभिमुखोऽनभिमुखम् ॥ ४३ ॥

स्वयमाचार्याभिमुख आत्मान प्रत्यनभिमुखमाचार्यमुपासीत । स्वयमाचार्यमेव पश्येत् । आचार्यस्य पुर आर्जवेनाऽऽसीत ॥ ४३ ॥

अनासन्नोऽनतिदूरे ॥ ४४ ॥

अनासन्नश्च स्यात् । अतिदूरे वा न स्यात् ॥ ४४ ॥

यावदासीनो बाहुभ्यां प्राप्नुयात् ॥ ४५ ॥

यावदन्तराल आसीन आचार्यो बाहुभ्या प्राप्तुं शक्नुयात् तावत्यासीत ॥ ४५ ॥

अप्रतिवातम् ॥ ४६ ॥

आचार्यस्य प्रतिवात नाऽऽसीत ॥ ४६ ॥

एकाध्यायी दक्षिणं बाहुं प्रत्युपसीदेत् ॥ ४७ ॥

यदैक एवाधीत आचार्यस्य दक्षिण बाहु प्रति दक्षिणपार्श्वे उपसीदेदुपविशेत् ॥४७॥

यथावकाशं बहवः ॥ ४८ ॥

बहवस्तु शिष्या यथावकाशमुपविशेयुः ॥ ४८ ॥

तिष्ठति च नान्वासीत नासनयोगविहिते ॥ ४९ ॥

आसनयोग आसनकल्पना । आसनयोगेन विहितः सभावित आसनयोगविहितः । नाऽऽसनयोगविहितो नासनयोगविहितः । आसनयोगेनासंभावित आचार्ये तिष्ठति च न स्वयमासीत ॥ ४९ ॥

आसीने च न संविशेत् ॥ ५० ॥

शयनयोगाविहित इति पूर्वानुसारेण गम्यते । शयनयोगेनासभावित आचार्ये आसीने स्वय न सविशेन्न शयीत ॥ ५० ॥

चेष्टति च चिकीर्षंस्तच्छक्तिविषये ॥ ५१ ॥

व्यत्ययेन परस्मैपदम् । आचार्ये चेष्टति स्वयमपि चिकीर्षन्स्यात् । किमविशेषेण । तच्छक्तिविषये शक्तितः शक्ते विषये । यद्याचार्येण क्रियमाणमात्मन. शक्तेर्विषयो भवति । चिकीर्षन्निति सन्प्रत्यययोगादिच्छामेव प्रदर्शयेत् । नाऽऽच्छिद्य कुर्यात् । प्रदर्शितायामिच्छा. यामाचार्यो यदनुजानीयात्तत्कुर्यात् । अशक्तविषये तु नेच्छाऽपि प्रदर्शयितव्या । चिकीर्षेदिति युक्तः पाठः ॥ ५१ ॥

न चास्य सकाशेऽन्ववस्थानिनमुपसंगृह्णीयात् ॥ ५२ ॥

आचार्यव्यतिरिक्ता गुरवोऽन्ववस्थानिन इति स्मार्तो व्यवहारः । आचार्यः श्रेष्ठो गुरूणामिति तमवेक्ष्यान्ववस्थानपदमेषामिति कृत्वाऽऽचार्यस्य सन्निधावन्ववस्थानिनं नोपसंगृह्णीयात् ॥ ५२ ॥

गोत्रेण वा कीर्तयेत् ॥ ५३ ॥

न चैनमन्ववस्थानिनं गोत्रेणाभिजनकुलादिना कीर्तयेत्स्तुवीत । भार्गवोऽयं महाकुलप्रसूत इति ॥ ५३ ॥

न चैनं प्रत्युत्तिष्ठेदनूत्तिष्ठेद्वाऽपि चेदस्य गुरुः स्यात् ॥ ५४ ॥

प्रत्युत्थानमपि स्वयं न कर्तव्यमाचार्यस्य सकाशे । यदा पुनरसावाचार्यसकाश आसित्वा गमनायोत्तिष्ठति तदाऽनूत्थानमपि न कर्तव्यम् । यद्यप्यसावाचार्यस्य मातुलादिर्गुरुः स्यात्तदाऽऽचार्यस्य प्राचार्यसन्निपात इति पूजा वक्ष्यति तेनैव न्यायेन मातुलादिष्वपि प्रसङ्ग इदमुक्तम् ॥ ५४ ॥

देशात्त्वासनाच्च संसर्पेत् ॥ ५५ ॥

किंतु देशात्त्वासनाच्च संसर्पेत् । तस्य समानार्थम् ॥ ५५ ॥

नाम्ना तदन्तेवासिनं गुरुमप्यात्मन इत्येके ॥ ५६ ॥

तस्याऽऽचार्यस्यान्तेवासिन नाम्नैव कीर्तयेद्यज्ञशर्मन्निति । यद्यप्यसावात्मनो गुरुर्भवती-त्येवमेके मन्यन्ते । स्वपक्षस्तु गुरोर्नामग्रहणं न कर्तव्यमिति ॥ ५६ ॥

यस्मिँस्त्वनाचार्यसंबन्धाद्गौरवं वृत्तिरेव तस्मिन्न-न्ववस्थानीयेऽप्याचार्यस्य ॥ ५७ ॥

यस्मिन्स्तु पुरुषे शिष्याचार्यभावमन्तरेणापि विद्याचारित्रादिना लौकिकाना गौरवं तस्मिन्नन्ववस्थानीयेऽपि आचार्ये या वृत्तिः सा कर्तव्या। अन्ववस्थानीयेऽप्यन्ववस्थानिन्येव ॥ ५७ ॥

भुक्त्वा चास्य सकाशे नानुत्थायोच्छिष्टं प्रयच्छेत् ॥ ५८ ॥

अस्याऽऽचार्यस्य भुञ्जानस्याभुञ्जानस्य वा सकाशे भुक्त्वाऽनुत्थायोत्थापनमकृत्वोच्छिष्टं न प्रयच्छेत् । आचार्याय वा पर्यवदध्यादिति यद्विहितम् ॥ ५८ ॥

आचामेद्वा ॥ ५९ ॥

आचमनमप्यनुत्थाय न कुर्यात् । ५९ ॥

**किं करवाणीत्यामन्त्र्य ॥ ६० ॥ ( ख० ६ ) ।**

आचम्य किं करवाणीति गुरुमामन्त्र्य ॥ ६० ॥ ( ख० ६ ) ।

**उत्तिष्ठेत्तूष्णीं वा ॥ ६१ ॥**

विकल्पः । आमन्त्र्येति लिङ्गादुत्थायाप्याचमनं न कुर्यात् । आचार्यसकाश एव वाऽऽचामेत् ॥ ६१ ॥

**नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्यापेयान्न प्रेक्षेत नग्नां स्त्रियम् ॥ ६२ ॥**

उत्थाय कार्यवत्तया गन्तुमिच्छन्गुरोरग्रमध्य न पर्यावर्तेत किंतु प्रदक्षिणीकृत्यापेयात् । स्त्रियं प्रेक्षमाणस्य मनसो विकारो भवति । तन्नग्नां नेक्षेत ॥ ६२ ॥

**ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत ॥ ६३ ॥**

ओषधयः फलपाकान्ताः । वनस्पतयो ये पुष्पैर्विना फलन्ति । वीरुद्वृक्षाणामप्युपलक्षणम् । तेषां पत्रपुष्पे आच्छिद्य नोपजिघ्रेत् । आच्छिद्येति वचनाद्यादृच्छिके गन्धग्रहणे न दोषः ॥ ६३ ॥

**उपानहौ छत्रं यानमिति वर्जयेत् ॥ ६४ ॥**

यानं शकटादि । इतिशब्द एवंप्रकाराणामुपलक्षणार्थः । तत्र गौतमः—वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनोपनच्छत्रकामक्रोधलोभमोहवादवादनस्नानदन्तधावनहर्षनृत्यगीतपरिवादभयानीति ॥ ६४ ॥

**नोपजिघ्रेत्स्त्रियं मुखेन ॥ ६५ ॥**

स्नातामस्नातां वा स्त्रियं बालामपि मुखेन नोपजिघ्रेत् । मुखेनेति वचनाद्यादृच्छिके गन्धग्रहणे न दोषः ॥ ६५ ॥

**न हृदयेन प्रार्थयेत ॥ ६६ ॥**

हृदयेन मनसा स्त्रियं न प्रार्थयेत् । अपीयं मे स्यादिति ॥ ६६ ॥

**नाकारणादुपस्पृशेत् ॥ ६७ ॥**

कारणं विना स्त्रियं नोपस्पृशेत् । कारणं योक्त्रसंनहनाविस्रंसनपतनधारणादि ॥ ६७ ॥

***रजस्वलो रक्तदन्सत्यवादी स्यादिति हि ब्राह्मणम् ॥ ६८ ॥**

---

* न हसेत यदि स्मयेतापिगृह्य स्मयेतेति हि ब्राह्मणम् । स्मितं न कुर्यात् । यदि तु हर्षातिरेकाद्धारयितुं न शक्नोति तदा हस्तेन मुखमपिगृह्य पिधाय स्मितं कुर्यादिति ब्राह्मणग्रन्थे स्थितम्, मित्यधिकं क्वचित् ।

रजस्वलो मलिनगात्र । रक्ता दन्ता यस्य स रक्तदन् छान्दसं दन्नादेशः । पङ्किलदन्त इत्यर्थः । एतद्व्रतमपि उत्सन्नश्लाघ इत्यनेन गतमपि पुनरुच्यते, अतिक्रमे श्रौतप्रायश्चित्तप्राप्त्यर्थम् । अनृतं चोक्त्वेति प्रायश्चित्त वक्ष्यति । सत्यवादी स्यादिति हि ब्राह्मणम् ॥ ६८ ॥

या विद्यां गुरौ कुरुते तेऽप्यस्याऽऽचार्या ये तस्यां गुरोर्वंश्याः ॥ ६९ ॥

आत्मनो गुरौ या विद्या कुरुतेऽधीते तस्या विद्याया गुरोर्ये वंश्या आचार्यास्तेऽप्यस्य माणवकस्याऽऽचार्याः । यद्यपि साक्षात्तेभ्यो न गृह्यते विद्या तथाऽपि त आचार्यवदुपचरितव्याः । तस्यामिति वचनाद्विद्यान्तरे ये वंश्यास्तेषु नायं विधिः ॥ ६९ ॥

यानन्यान्पश्यतोऽस्याऽऽचार्य उपसंगृह्णीयात् तदात्वे त उपसंग्राह्याः ॥ ७० ॥

अस्य माणवकस्य पश्यतोऽस्मिन्माणवके पश्यति यानन्यानाचार्य उपसंगृह्णीयात् ते तस्य माणवकस्याप्युपसंग्राह्याः । किं सदा नेत्याह—तदात्वे तस्यां दशायाम् । अपर आह—तदाप्रभृति उपसंग्राह्याः । तु शब्दात्समावृत्तेनापीति ॥ ७० ॥

गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबन्ध(द्ध)स्तदधीना भिक्षा ॥ ७१ ॥

यदा द्वितीयं तृतीयं वा वेदमधीयानस्य माणवकस्य गुरुसमवायो भवति गुरवः समवेता भवन्ति तदा भिक्षायामुत्पन्नायां यं गुरुमिदानीमनुबन्धो(द्धो) यतोऽधीते तदधीना भिक्षा । यच्च यावच्च लब्धं तत्तस्मै निवेदयेत् । उदुक्तश्च विनियोगः ॥ ७१ ॥

समावृत्तो मात्रे दद्यात् ॥ ७२ ॥

कृतसमावर्तनो विवाहात्प्राग्भिक्षां मात्रे दद्यात् ॥ ७२ ॥

माता भर्तारं गमयेत् ॥ ७३ ॥

माता पतिं प्रापयेत् ॥ ७३ ॥

भर्ता गुरुम् ॥ ७४ ॥

सोऽपि भर्ता गुरुं प्रापयेत् माणवकस्य गुरुम् । माणवकार्जितं द्रव्यं माणवकगुरुगामि युक्तम् ॥ ७४ ॥

गुरुर्विवाहयोजयेत् ॥ ७५ ॥

धर्मकृत्यानि विवाहादीनि तेषु चान्योजयेत् । गुरोरभावे भर्ता तदभावे माता सर्वेषामभावे समावृत्तः स्वयमेव ॥ ७५ ॥

कृत्वा विद्यां यावतीं शक्नुयाद्वेददक्षिणामाहरेद्धर्मतो यथाशक्ति ॥ ७६॥

यावतीं विद्यां कर्तुं शक्नुयाद्वेदं वेदौ वेदान्वा तावतीं कृत्वाऽधीत्य गुरवे वेददक्षिणामाहरेद्दद्याद्यथाशक्ति धर्मतो लब्धा न्यायार्जिताम् ॥ ७६ ॥

धर्मत इत्यस्यापवादः—

विषमगते त्वाचार्य उग्रतः शूद्रतो वा ॥ ७७ ॥

यदा त्वाचार्यो विषमगत आपद्गतस्तदोग्रतः शूद्रतो वा प्रतिगृह्य दक्षिणामाहरेत् । वैश्याच्छूद्रायां जात उग्रः । उग्रकर्मा वा द्विजातिः ॥ ७७ ॥

सर्वदा शूद्रत उग्रतो वाऽऽचार्यार्थस्याऽऽहरणं धर्म्यमित्येके ॥ ७८ ॥

सर्वदाऽऽपद्यनापदि चाऽऽचार्यार्थस्याऽऽचार्याय योऽर्थो देयस्तस्योग्रतः शूद्रतो वाऽऽहरणं धर्म्यं धर्मादनपेतमित्येक आचार्या मन्यन्ते । धार्म्यमिति पाठे स्वार्थे ष्यञ् ॥७८॥

दत्त्वा च नानुकथयेत ॥ ७९ ॥

आचार्यायैवमाहृत्य दत्त्वा न कीर्तयेदेवं मया दत्तमिति ॥ ७९ ॥

कृत्वा च नानुस्मरेत् ॥ ८० ॥

गुरवे प्राणसंशयादौ महान्तमुपकारं कृत्वा नानुस्मरेन्नानुचिन्तयेदहो मया तत्कृतमिति ॥ ८० ॥

आत्मप्रशंसां परगर्हामिति च वर्जयेत् ॥ ८१ ॥

इतिकरणादेवंप्रकाराणामात्मनिन्दादीनामपि प्रतिषेधः ॥ ८१ ॥

प्रेषितस्तदेव प्रतिपद्येत ॥ ८२ ॥

इदं कुर्वित्याचार्येण प्रेषितस्तदेव प्रतिपद्येत कुर्यात् । क्रियमाणमपि कर्म विहाय, यद्यपि तदाचार्यस्य भवति ॥ ८२ ॥

शास्तुश्चानागमाद्वृत्तिरन्यत्र ॥ ८३ ॥

तस्मिंश्चैव विद्याकर्मान्तमित्यस्यापवादः । यद्यस्मिन्कुले इष्टा विद्या शास्तुः शासितुराचार्यस्य सम्यङ्नाऽऽगच्छति तदा तस्यानागमादन्यत्र पुरुषान्तरेऽपि वृत्तिर्भवति । यस्य सम्यगागच्छति । येषामाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यत इत्यवोचाम ॥८३॥

अन्यत्रोपसंग्रहणादुच्छिष्टाशनात्पादप्रक्षालनादित्याचार्यवदाचार्यदारे वृत्तिः ॥ ८४ ॥

अन्यत्रेत्युभयोरिति विशेष. । आचार्यवदाचार्यदारे वृत्तिः कर्तव्या । किमविशेषेण । न । अन्यत्रोपसंग्रहणमुच्छिष्टाशनपादप्रक्षालने । इतिकरणात्पादसंवाहनादिकं वर्जयित्वा । अत्र मनुः—गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोरिति । गौतमः—तु—तद्भार्यापुत्रशिष्येषु चैव नोच्छिष्टाशन. स्नानप्रसाधनपादप्रक्षालनोन्मर्दनोपसंग्रहणानीति । दार इत्येकवचनं छान्दसम् ॥ ८४ ॥

तथा समादिष्टो(ष्टे)ऽध्यापयति ॥ ८५ ॥

आचार्येण समादिष्टो यथा नियुक्तोऽध्यापयति । तस्मिन्नाचार्यवद्वृत्तिः । अध्यापयतीति वर्तमाननिर्देशाद्यावदध्यापनमेव निदेश ॥ ८५ ॥

वृद्धतरे च सब्रह्मचारिणि ॥ ८६ ॥

अध्यापयतीति नानुवर्तते । तरनिर्देशाज्ज्ञानाद्यभ्यामाधिक्यो गृह्यते । सब्रह्मचारी सहाध्यायी । समाने ब्रह्मणि व्रतं चरति तस्मिन्नप्याचार्यवद्वृत्ति ।

आचार्यात्पादमादत्ते पादं शिष्य. स्वमेधया ।
पादं सब्रह्मचारिभ्य. पादं कालेन पच्यते ॥

इत्यध्ययने तदुपयोगसंभवात् ॥ ८६ ॥

उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः ॥ ८७ ॥

उच्छिष्टाशनवर्जमिति वचनादुपसंग्रहणं भवति एतच्च ज्ञानवयोभ्यां वृद्धे । तदर्थं वृद्धतर इत्यनुवर्तयन्ति । गौतमे तूपसंग्रहणप्रतिषेधो वृद्धतरादन्यविषय. ॥ ८७ ॥

समावृत्तस्याप्येतदेव सामयाचारिकमेतेषु ॥ ८८ ॥ (ख० ७) ।

समावृत्तस्य कृतसमावर्तनस्याप्येतदेवानन्तरोक्तम् । एतेष्वाचार्यादिषु पुत्रान्तेषु सामयाचारिकं समयाचारप्रवृत्ति. स्यात् । समादिष्टे त्वध्यापयतीति विशेष उक्त. ॥ ८८ ॥ (ख० ७) ।

यथा ब्रह्मचारिणो वृत्तम् ॥ ८९ ॥

समावृत्तस्येति वर्तते । समावृत्तस्य ब्रह्मचारिणोऽकृतविवाहस्य यथा वृत्तं वर्तनं तथा वक्ष्यामः ॥ ८९ ॥

माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोऽभ्यक्तो वेष्टितीपवेष्टितो काञ्चुक्युपानही पादुकी ॥ ९० ॥

माली माल्यवान् । आलिप्तमुखश्चन्दनादिना । मुखग्रहणमुपलक्षणम् । मुखमग्रे ब्राह्मणो लिम्पेदित्याश्वलायन. । सुगन्धिभिरामलकादिभिर्द्रव्यैरुपलिप्त संस्कृतं केशश्मश्रु यस्य

स उपलिप्तकेशश्मश्रुः । अक्तोऽञ्जनेनाक्ष्णोः । अभ्यक्तस्तैलेन । वेष्टिनी वेष्टितशिराः । कटिप्रदेशो द्वितीयेन वाससा वेष्टितो यस्य सोऽपवेष्टिनी । कञ्चुकमेव काञ्चुकम्, तद्वान्काञ्चुकी । उपानही: त्रीह्यादित्वादिनिः । पादुके दारुमये पादरक्षणे तद्वान्पादुकी ॥ ९० ॥

**उदाचारेषु चास्यैतानि न कुर्यात्कारयेत वा ॥ ९१ ॥**

अस्याऽऽचार्यादेः पुत्रान्तस्योदाचारेषु दृष्टिगोचरेषु देशेष्वेतानि न कुर्यात्कारयेद्वा ॥ ९१ ॥

**स्वैरिकर्मसु च ॥ ९२ ॥**

एतानि न कुर्यात्कारयेद्वा ॥ ९२ ॥

तत्रोदाहरणम्—

**यथा पादप्रक्षालनोत्सादनावलेखनानुलेपनानीति ॥ ९३ ॥**

पादप्रक्षालनं पादधावनम् । उत्सादनमुद्वर्तनम् । अवलेखनं कङ्कतादिना केशानां विभागेनावस्थापनम् । अनुलेपनं चन्दनादिना । इतिशब्दः प्रदर्शनार्थः । तेन स्नानभोजनमूत्रोच्चारणादिष्वपि प्रतिषेधः ॥ ९३ ॥

**तद्द्रव्याणां च न कथयेदात्मसंयोग आचार्यः ॥ ९४ ॥**

तस्य शिष्यस्य गृहस्थीभूतस्य यानि द्रव्याण्युपस्थापितानि तेषां मध्य एकेनापि द्रव्येण यथाऽऽत्मा संयुज्यते तथा न कथयेत् । आचार्यः शिष्यगृहं प्रति आगतो, यथा अहो दर्शनीयं भोजनपात्रमित्यादिना परं लिप्सा यथा गम्यते तथा न कथयेदिति ॥ ९४ ॥

**स्नातस्तु काले यथाविध्यभिहृतमाहूतोऽभ्येतो वा न प्रतिसंहरेदित्येके ॥ ९५ ॥**

अधीत्य वेदं स्नानमितीत्यनेन विधिना स्नातस्तस्मिन्काले यथाविध्यभिहृतं आबद्धस्रगादिराचार्येणाऽऽहूतः स्वयमेव वा तत्समीपमभ्येतो न प्रतिसंहरेन्न विमुञ्चेदित्येके मन्यन्ते । स्वपक्षस्तु तदपि प्रतिमुञ्चति । काले यथाविध्यभिहृतमिति वचनादपरेद्युरारभ्य प्रतिसंहरेदेव ॥ ९५ ॥

**उच्चैस्तरां नाऽऽसीत ॥ ९६ ॥**

स्वार्थे तरप् । आचार्यस्याऽऽसनादुच्चस्तरे नाऽऽसीत ॥ ९६ ॥

**तथा बहुपादे ॥ ९७ ॥**

नीचेऽप्यासने बहुपादे नाऽऽसीत तथा ॥ ९७ ॥

उर्वैतः प्रति के ॥

आसने त्वासीत । अ.। थें पीठ.दावुप इ ... ।अ.मनान्ना.ोत । तद्धि भूमौ सर्वतः प्रतिष्ठितम् ॥ ९८ ॥

**शय्यासने चाऽऽचरिते नाऽऽ ...ेत् । ९९ ॥**

आचार्येणाऽऽचरित उपभुक्ते शय्यासने ... ेत् । शयने न शयीत । आसने नाऽऽसीत । वेत्राद्धिष्वपि समानम् । ... शय्यासने चाऽध्युषिते श्रेयसा न समाचरेदिति । गत समानुत्तरस्य वैक. प.न ॥ ९९ ॥

अथ ब्रह्मचर्यविधेरेव शेषः—

**यानसध्वन्युक्तोऽन्वारो...त् ॥ १०० ॥**

यान शकटादि, आरोहेत्युक्तो गुरुणा पश्चादारोहेत् । छत्रं यानमिति वर्जयेदिति पूर्वोक्तस्य प्रतिषेधस्यापवाद । यान च गुर्वारूढमन्तव्या ॥ १०० ॥

**सभानिकपकटस्वस्तरांश्च ॥ १०१ ॥**

उक्तोऽन्वारोहेदित्येव सभा. सम जाश्चेत्यस्यापवादार्थ सभाग्रहणम । निकषो नाम कृषीवलानामुपकरणम् । कृष्टक्षेत्र समीक्रीयते येन तत् ; तच्च कस्मिंश्चिदारूढे केनचिदाकृष्यते । तत्र गुरुणाऽऽकृष्यमाणे तेनोक्त अन्वारोहेत् । न त्वनौचित्यभया- न्नाऽऽरोहेदिति । कटो वीरणनिर्मिता ह ... । तत्र गुरु ... सहासीत । उत्सवादावेष आचार.। स्वस्तरो नाम पटालकृत्या । न.स्वस्तरे संविशतीति दर्शनात् । तत्रापि गुरु- णोक्तः सन् सहासनादि कुर्यात् ॥ १०१ ॥

**नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत् ॥ १०२ ॥**

गुरुणाऽनभिभाषितो गुरु प्रति न किंचिद्ब्रूयात् प्रियादन्यत् । प्रिय तु ब्रूयात् । यथा पुत्रो जात इति ॥ १०२ ॥

**व्युपतोदव्युपजापव्यभिहासोदा ... णनामधेयग्रह- णप्रैषणानीति गुरोर्वर्जयेत् । ... ॥**

व्युपतोदोऽङ्गुल्यादिना संघट्टनं यदाभिमुख्यार्थे क्रियते । व्युपजाप कर्णयोर्मुहुर्ज- ल्पनम् । वकारश्छान्दस । अपपाठो वा । व्यभिहास आभिमुख्येन हसनम् । उदा- मन्त्रणमुच्चैः सबोधनम । ... बधिर प्रति । नामधेयग्रहण द्वादश्या(महे) विहितस्य नाम्नो ग्रहणम् । न पूज्यनाम्नो भगवदादेः । प्रैषण आज्ञापनम् । एतानि गुरोर्विषये न कर्तव्यानि । इतिकरणादेवंप्रकाराणामन्येषामपि प्रतिषेध । तथा ऽऽह मनु —

नोदाहरेत्तस्य नाम परोक्षमपि केवलम । न चैवास्य नु ... गतभाषितचेष्टितमिति ॥ १०३ ॥

आचार्यं ज्ञापयेत् ॥ १०४ ॥

आपदि व्युपतोदादिभिरर्थम ... ज्ञापयेत् । असति पुरुषान्तरे वचनेनापि बोद्धव्यो न साक्षात्प्रेषयेत् । यथा-शूलं ... मे भवति । स चाग्निना शाम्यति । न चात्र कश्चित्संनिहित. । किं करोमि मन्दभाग्य इति ॥ १०४ ॥

उत्तरे सूत्रे समावृत्तविषये—

**सह वसन्सायंप्रातरनाहूतो गुरुदर्शनार्थो गच्छेत् ॥ १०५ ॥**

एकस्मिन्ग्रामे वसन् सायंप्रातरनाहूतोऽपि गुरुदर्शनार्थो नान्यप्रयोजनो गच्छेत् ॥

**प्रोष्य च तदहरागतः ॥ १०६ ॥**

यदा ग्रामान्तरं गत. प्रत्यागच्छति तदा तदहरेवाऽऽचार्यं गच्छेत् ॥ १०६ ॥

**आचार्यप्राचार्यसंनिपाते प्राचार्यायोपसंगृह्योपसंजिघृक्षेदाचार्यम् ॥ १०७ ॥**

आचार्यस्याऽऽचार्यः प्राचार्यः । प्रपितामहवत् । यदाऽऽचार्यस्य प्राचार्यस्य च संनिपातो मेलनं भवति तदा प्राचार्याय । द्वितीयार्थे चतुर्थी । प्राचार्यं पूर्वमुपसंगृह्य स्वाचार्यमुपसंग्रहीतुमिच्छेत् । न केवलं मनसा किंतु यथाऽऽचार्यो जानाति तथाऽवेक्षेत । अन्यथाऽदृष्टार्थमुपदिष्टं स्यात् ॥ १०७ ॥

**प्रतिषेधयेदितरः ॥ १०८ ॥**

इतर आचार्यः प्रतिषेधयेत् । वत्स मोपसंग्रहीरिति ॥ १०८ ॥

**लुप्यते पूजा चास्य सकाशे ॥ १०९ ॥**

अस्यास्य आचार्यस्य संनिधौ स्वस्याऽऽचार्यस्य पूजा लुप्यते न कार्या । न केवलमुपसंग्रहणमेव ॥ १०९ ॥

उत्तरं समावृत्तविषयम्—

**मुहुश्चाचार्यकुलदर्शनार्थं गच्छेद्यथाशक्ति किंचिद्धस्त्यमादायापि दन्तप्रक्षालनानीति ॥ ११० ॥**

वीप्सालोपश्चात्र द्रष्टव्यः । मुहुर्मुहुरिति विवक्षितम् । ग्रामान्तरे वसन्नपि मुहुर्मुहुराचार्यकुलदर्शनार्थो गच्छेत् । यथाशक्ति गोरसादि किंचिद्धस्त्यमादाय । हस्ते भवमादाय । स्वयमेव गृहीत्वेत्यर्थः । अपिशब्दोऽभावेऽपि किंचिद् द्योतयति । गोरसाद्यभावे +दन्तप्रक्षालनान्यपीति । इतिशब्दोऽन्तेवासिधर्माणां समाप्तिद्योतनार्थ. ॥ ११० ॥

**तस्मिन्गुरोर्वृत्तिः ॥ १११ ॥**

तस्मिन्नन्तेवासिनि गुरोर्वृत्तिराचारो वक्ष्यते ॥ १११ ॥

---

+ मातरं पितरमाचार्यमग्निं च गृहाणि च रिक्तपाणिर्नोपगच्छेत् । इत्यधिकमन्यत्र सूत्रे ।

**पुत्रमिवैनमनुकाङ्क्षन्सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत् ॥ ११२ ॥**

एनं शिष्यं पुत्रमिवास्याभ्युदयं काङ्क्षन्नित्यनुकाङ्क्षन्सर्वेषु धर्मेषु किंचिदप्यनपच्छादयन्नविगूहन् सुयुक्तः सुष्ठु हितस्तत्परो भूत्वा विद्यां ग्राहयेत् ॥ ११२ ॥

**न चैनमध्ययनविघ्नेनाऽऽत्मकार्येष्वत्युपरुन्ध्यादनापत्सु ॥ ११३ ॥**

न चैनं शिष्यमध्ययनविघ्नेनाऽऽत्मकार्येषूपरुन्ध्यादनापत्सु । उपरोधोऽस्वतन्त्रीकरणम् । अनापत्स्विति वचनादापद्यध्ययनविघातेनाप्युपरोधे न दोषः ॥ ११३ ॥

**अन्तेवास्यनन्तेवासी भवति विनिहितात्मा गुरावनैपुण्यमापद्यमानः ॥ ११४ ॥**

आपद्यमान इत्यन्तर्भावितण्यर्थः । योऽन्तेवासी विनिहितात्मा द्वयोराचार्ययोर्विविधं निहितात्मा गुरावनैपुण्यमापादयति नानेनाय प्रदेशः सम्यगुक्त इति सोऽन्तेवासी न भवति स त्याज्य इत्यर्थः । अपर आह—योऽन्तेवासी वाङ्मनःकर्मकायैरनैपुण्यमापद्यमानो गुरोर्विसदृशं निहितात्मा भवत्यनुरूपं न शुश्रूषते सोऽन्तेवासी न भवति ॥ ११४ ॥

**आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः ॥ ११५ ॥**

आचार्योऽप्यनाचार्यो भवतीत्यर्थः । किं कुर्वन् । श्रुतात्परिहरमाणः । तेन तेन व्याजेन विद्याप्रदानमकुर्वन् ॥ ११५ ॥

**अपराधेषु चैनꣳ सततमुपालभेत ॥ ११६ ॥**

अपराधेषु कृतेष्वेनं शिष्यं सततमुपालभेत । इदमयुक्तं त्वया कृतमिति ॥ ११६ ॥

**अभित्रासोपवासोदकोपस्पर्शनान्यदर्शनमिति दण्डा यथामात्रमा निवृत्तेः ॥ ११७ ॥**

अभित्रासो भयोत्पादनम् । उपवासो भोजनलोपः । उदकोपस्पर्शनं शीतोदकेन स्नानम् । अदर्शनं यथाऽऽत्मानं न पश्यति तथा करणं गृहप्रवेशनिषेधः । सर्वत्र ण्यन्तात्प्रत्ययः । इत्येते दण्डाः शिष्यस्य यथामात्रं यथापराधं तदनुरूपं व्यस्ताः समस्ताश्चाऽऽनिवृत्तेर्यावदसौ ततोऽपराधान्निवर्तते तावदेते दण्डाः ॥ ११७ ॥

**निवृत्तं चरितं ब्रह्मचर्यमन्येभ्यो धर्मेभ्योऽनन्तरो भवेत्यतिसृजेत् ॥ ११८ ॥**

**इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (धर्मसूत्रापरपर्याये) षड्विंशप्रश्ने द्वितीयः पटलः ।**

निगमेष्वध्ययनं वर्जयेत् ॥ ४ ॥

निगमा वणिक्पथाश्चत्वारो निर्गमनमार्गा वा । नियमेन गम्यते येष्विति । तेषु सर्वप्रकारमध्ययन वर्जयेत् ॥ ४ ॥

आनडुहेन शकृत्पिण्डेनोपालिप्तेऽधीयीत ॥ ५ ॥

अनडुत्संबन्धिना शकृत्पिण्डेनोपलिप्य निगमेऽप्यधीयीत ॥ ५ ॥

श्मशाने सर्वतः शम्याप्रासात् ॥ ६ ॥

श्मशाने वाऽध्ययनं वर्जयेत्सर्वासु दिक्षु शम्याप्रासात् । पञ्चमीनिर्देशादर्वागिति गम्यते । शम्या क्षिप्ता यावति देशे पतति ततोऽर्वागिति ॥ ६ ॥

ग्रामेणाध्यवसिते क्षेत्रेण वा नानध्यायः ॥ ७ ॥

यदा श्मशानं ग्रामतया क्षेत्रतया वाऽध्यवसितं स्वीकृत भवति तदानीं नानध्यायः । अध्येतव्यमेव ॥ ७ ॥

ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत ॥ ८ ॥

तथाऽध्यवसिते गृहे श्मशानं ज्ञायतेऽयं प्रदेश इति तदा तावत्येव प्रदेशे नाधीयीत । न शम्याप्रासादर्वाक् ॥ ८ ॥

श्मशानवच्छूद्रपतितौ ॥ ९ ॥

शूद्रपतितसकाशेऽपि शम्याप्रासादर्वाङ् नाध्येयम् ॥ ९ ॥

समानागार इत्येके ॥ १० ॥

एके मन्यन्ते समान एवागारे शूद्रपतितौ वर्ज्यौ न शम्याप्रासादिति ॥ १० ॥

शूद्राया तु प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः ॥ ११ ॥

शूद्राया तु यदा परस्परं प्रेक्षणं भवति तदैवानध्यायो न समानागारे न शम्याप्रासादिति ॥ ११ ॥

तथाऽन्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने ॥१२॥

शूद्रव्यतिरिक्ताऽपि या स्त्री मैथुने वर्णव्यतिक्रान्ता नीचवर्णगामिनी तस्यामपि प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः ॥ १२ ॥

ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन्संभाषितुं ब्राह्मणेन संभाष्य

**तया संभाषेत संभाष्य तु तया ब्राह्मणेनैव संभाष्याधीयीतैवं तस्याः प्रजानिःश्रेयसम् ॥ १३ ॥**

यो वेदमध्येष्यमाणो मलवद्वाससा रजस्वलया सह सभाषितुमिच्छति स पूर्वं ब्राह्मणेन संभाष्य पश्चात्तया संभाषेत । संभाष्य च तया ब्राह्मणेनैव संभाष्याधीयीत । किमेवं सति भवति । एवं तस्या मलवद्वाससः आगामिनी या प्रजा तस्या निःश्रेयसमभ्युदयो भवति । प्रजारूपं वा निःश्रेयसं तस्या अपि भवति । प्रजानिःश्रेयसमिति वचनाद्विधवाभिः संभाषणे नैतत्कर्तव्यम् ॥ १३ ॥

**अन्तःशवम् ॥ १४ ॥**

अन्तःशवे ग्रामे नाध्येतव्यम् । एतेनान्तश्चाण्डालमिति व्याख्यातम् ॥ १४ ॥

**अन्तश्चाण्डालम् ॥ १५ ॥**

चण्डाल एव चाण्डालः । उभयत्र प्रथमा सप्तम्यर्थे । अव्ययीभावो वा विभक्त्यर्थे द्रष्टव्यः ॥ १५ ॥

**अभिनिर्हृतानां च सीम्न्यनध्यायः ॥ १६ ॥**

यदा तु शवाः सीम्न्यभिहृता भवन्ति तदा तत्रानध्यायः ॥ १६ ॥

**संदर्शने चारण्ये ॥ १७ ॥**

अरण्ये च यावति प्रदेशे शवश्चण्डालो वा दृश्यते तावत्यनध्यायः ॥ १७ ॥

**तदहरागतेषु च ग्रामं बाह्येषु ॥ १८ ॥**

बाह्या उग्रनिषादादयः परिपन्थिनः । तेषु च ग्राममागतेषु तदहरनध्यायः । तस्मिन्नहनि नाध्येतव्यम् ॥ १८ ॥

**अपि सत्सु ॥ १९ ॥**

विद्याचरित्रादिभिर्महान्तः सन्तः । तेष्वपि ग्राममागतेषु तदहरनध्यायः ॥ १९ ॥

**संधावनुस्तनिते रात्रिम् ॥ २० ॥**

संधिः संध्या । तस्मिन्संधावनुस्तनिते मेघगर्जिते सति सर्वां रात्रिं नाधीयीत ॥ २० ॥

**वर्षर्ताविदम् ॥ २१ ॥**

अन्यस्मिन्नधिकं वक्ष्यति ॥ २१ ॥

स्वप्नपर्यान्तं विद्युति ॥ २२ ॥

स्वप्नपर्यान्तम् । अन्त्यो दीर्घ उपान्त्यो ह्रस्वः । विपर्यासश्छान्दसः । अपपाठो वा । सधौ विद्युति सत्या स्वप्नपर्यन्ता रात्रिमनध्यायः । न सर्वाम् । स्वप्नपर्यन्ता रात्रिः प्रहरावशिष्टा ॥ २२ ॥

एवं सायंसंध्यायामुक्तम् । प्रातःसंध्यायामाह—

उपव्युषं यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषमहरनध्यायः ॥ २३ ॥

उषःसमीपमुपव्युषम् । तत्र विद्युति सत्यामपरेद्युः सप्रदोषमहरनध्यायः । प्रदोषादूर्ध्वमध्येयम् । यावता कालेन शम्याप्रासादवस्थिता गा कृष्णामिति वा रोहिणीमिति वा विजानीयात्तस्मिन्काल उपव्युषे वा विद्योतमान इत्यन्वयः । रोहिणी गौरवर्णा । इतिशब्दप्रयोगे द्वितीया प्रयुज्यते । तत्रान्वयप्रकारश्चिन्त्यः ॥ २३ ॥

दह्रे चापररात्रे स्तनयित्नुना ॥ २४ ॥

रात्रेस्तृतीयो भागः सर्वोऽपररात्रः । तस्य त्रेधा विभक्तस्याऽऽद्योऽंशो महारात्रः । तदन्त्यो दह्रः । तस्मिन्दह्रेऽपररात्रे स्तनयित्नुना निमित्तेन सप्रदोषमहरनध्यायः ॥२४॥

ऊर्ध्वमर्धरात्रादित्येके ॥ २५ ॥

अर्धरात्रादूर्ध्वमनन्तररात्रावधिरित्येके मन्यन्ते । स्वपक्षस्तु दह्र एवेति ॥ २५ ॥

गवां चावरोधे ॥ २६ ॥

दस्युप्रभृतिभिरवरुद्धासु गोषु तावन्तं कालमनध्यायः । अवरोधो ग्रामान्निर्गमननिरोधः ॥ २६ ॥

वध्यानां च यावता हन्यन्ते ॥ २७ ॥

वधार्हाणां चोरादीनामवरोधो यावता कालेन ते हन्यन्ते यावन्तं कालमनध्यायः ॥ २७ ॥

पृष्ठारूढः पशूनां नाधीयीत तावन्तं कालम् ॥ २८ ॥

हस्त्यश्वादीनां पशूनां पृष्ठमारूढस्तत्राऽऽसीनः सन्नाधीयीत तावन्तं कालम् ॥२८॥

अहोरात्रावमावास्यासु ॥ २९ ॥ ( ख० ९ )।

अमावास्यासु द्वावहोरात्रौ नाधीयीत । तासु च पूर्वेद्युश्चतुर्दशीषु । तथा च मनुः— अमावास्याचतुर्दश्यौ पौर्णमास्यष्टकासु चेति ॥ २९ ॥ (ख० ९ )।

चातुर्मासीषु च ॥ ३० ॥

चतुर्षु चतुर्षु मासेषु भवाश्चातुर्मास्य. । सञ्ज्ञैषा तिसृणा पौर्णमासीनाम् । यासु चातुर्मास्यानि क्रियन्ते । का. पुनस्ता. । फाल्गुन्याषाढीकार्तिक्यः । चातुर्मास्याख्ये यज्ञे तत्र भवे च सञ्ज्ञायामण् । चातुर्मासीषु च पूर्ववद्वावहोरात्रावनध्यायः । गौतमस्तु स्वशब्दे-नाऽऽह—कार्तिकी फाल्गुन्याषाढी पौर्णमासीति । पौर्णमास्यन्तरे प्रतिपत्सु च शास्त्रा-न्तरादनध्यायः । यथाऽऽहोशना—पर्वणीतिहासवर्जितानां विद्यानामनध्यायः । प्रतिपत्सु न चिन्तयेदिति । एवं चतुर्दशीवर्जने शास्त्रान्तर मूलम् । तत्र याज्ञवल्क्यः–पञ्चदश्या चतुर्दश्यामष्टम्या राहुसूतक इति ॥ ३० ॥

वैरमणे गुरुष्वष्टक्य औपाकरण इति त्र्यहाः ॥ ३१ ॥

विरमणमुत्सर्जनम् । तदेव वैरमणम् । तस्मिन्वैरमणे । प्रथमान्तपाठे सप्तम्यर्थे प्रथमा । गुरुषु श्वशुरादिषु संस्थितेष्विति प्रकरणाद्गम्यते । अष्टकैवाष्टक्यम । स्वार्थे ष्यञ् । आदौ प्राप्ता वृद्धिर्मध्ये(र्ने) कृता । उपाकरणमेवौपाकरणः । एषु निमित्तेषु त्र्यहा अध्ययन-रहिताः । तत्र गुरुमरणदिनादारभ्य त्र्यहाः । इतरेषु पूर्वेद्युरपरेद्युस्तस्मिंश्च दिने नाधीयी-त । अत्र गौतम.—तिस्रोऽष्टकास्त्रिरात्रमभितो वार्षिकमिति । उपाकरणादूर्ध्वं प्रागु-त्सर्जनाद्यदध्ययनं तद्वार्षिकम् । तदभितस्तस्याऽऽदावन्ते च यत्कर्म क्रियते तत्रापि त्रिरात्रमित्यर्थः । औशनसे च व्यक्तम्–उपाकरणे चोत्सर्जने च त्र्यहमनध्याय इति । मानवे च व्यक्तम्–उपाकर्मणि चोत्सर्गे त्रिरात्र क्षपण स्मृतमिति ॥ ३१ ॥

तथा संबन्धेषु ज्ञातिषु ॥ ३२ ॥

संनिकृष्टा ये ज्ञातयो भ्रात्रादयस्तेष्वपि मृतेषु त्र्यहमनध्यायः । ब्रह्मचारिणो विधि-रयम् । आशौचवता तु यावदाशौचमनध्याय. शास्त्रान्तरसिद्धः । तत्र मनुः–

उभयत्र दशाहानि कुलेऽस्यान्न न भुज्यते ।
दान प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥ इति ।

उभयत्र जनने मरणे च ॥ ३२ ॥

मातरि पितर्याचार्य इति द्वादशाहाः ॥ ३३ ॥

मात्रादिषु मृतेषु द्वादशाहमनध्यायः । अय विधिर्गृहस्थानामपि । केचिद्यावदाशौचं तावन्तं कालमितीच्छन्ति । नेति वयम् । अनध्यायप्रकरणात् ॥ ३३ ॥

तेषु चोदकोपस्पर्शनं तावन्तं कालम् ॥ ३४ ॥

मात्रादिष्वग्निकं तावन्तं कालमहरहः स्नानमपि कार्यं न केवलमनध्यायः ॥ ३४ ॥

अनु पश्चाद्भूता जाता अनुभाविनः । मृतापेक्षयाऽनुभाविनोऽवरवयसस्तेषां परिवापनमपि भवति । परिवापनं केशानां कृन्तनम् । कृत्यच इति प्राप्तस्य णत्वस्य णेर्विभाषेति विकल्पः । अन्ये तु शावदुःखमनुभाविनां सर्वेषां परिवापनमिच्छन्ति । अपर आह—अनुभाविन उदकार्हास्तेषां मरणे परिवापनमिति ॥ ३५ ॥

**न समावृत्ता वपेरन्नन्यत्र विहारिण इत्येके ॥ ३६ ॥**

विहारो यज्ञदीक्षा साऽस्यास्तीति विहारी । तस्मादन्ये ततोऽन्यत्र न समावृत्ता वपेरन्नित्येके मन्यन्ते । स्वपक्षस्तु वपेरन्नेवेति ॥ ३६ ॥

तत्र वपनस्यामङ्गलत्वं गुणविधिना परिहारं च वक्तुं ब्राह्मणमुदाहरति—

**तथाऽप्युदाहरन्ति रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति ॥ ३७ ॥**

रिक्तोऽन्तःशून्यो घटादिः । सोऽनपिहितः पिधानरहितो यादृशस्तादृश एष यन्मुण्डो नाम । तस्य रिक्तस्य पिधानमेतद्यच्छिखा नामेति । अनेनं चैतद्दर्शितं निषेधशास्त्रं सह शिखया वपनप्रतिषेधपरमिति ॥ ३७ ॥

कथं तर्हि सत्रेषु तु शिखाया वपनं वचनसामर्थ्यादित्याह—

**सत्रेषु तु वचनाद्वापनं शिखायाः ॥ ३८ ॥**

गतः ॥ ३८ ॥

**आचार्ये त्रीनहोरात्रानित्येके ॥ ३९ ॥**

आचार्ये संस्थिते त्रीनहोरात्रानध्ययनं वर्जयेदित्येके मन्यन्ते । स्वपक्षस्तु द्वादशाहः पूर्वोक्तः ॥ ३९ ॥

**श्रोत्रियसंस्थायामपरिवत्सरायामेकाम् ॥ ४० ॥**

श्रोत्रियं वक्ष्यति । तस्य संस्थायामपरिपूर्णवत्सरायां श्रुतायामेकां रात्रिमेकाहोरात्रमध्ययनं वर्जयेत् । अत्र संस्थाश्रवणाद्दूर्वादिष्वपि सैव निमित्तम् ॥ ४० ॥

**सब्रह्मचारिणीत्येके ॥ ४१ ॥**

एके तु सब्रह्मचारिणो मरणे एवमनन्तरोक्तमनध्यायमिच्छन्ति ॥ ४१ ॥

**श्रोत्रियाभ्यागमेऽधिजिगाँसमानोऽधीयानो वाऽनुज्ञाप्याधीयीताध्यापयेद्वा ॥ ४२ ॥**

श्रोत्रिय आगतेऽध्येतुकामोऽधीयानश्च तमनुज्ञाप्याधीयीत । अध्यापनमपि श्रोत्रिये संनिहित एवमेव ॥ ४२ ॥

गुरुसंनिधौ चाधीहि भो इत्युक्त्वाऽधीयीताध्यापयेद्वा ॥ ४३ ॥

गुरुसंनिधौ विशेषो यदधीहि भो इत्येनमनुज्ञाप्याधीयीत । स्वयमाचार्यो गुरावाचार्येऽधीहि भो इत्यनुज्ञाप्याध्यापयेत् । गुरुशिष्ययोर्गुरावुभयोरप्यधीहि भो इति ॥ ४३ ॥

उभयत उपसंग्रहणमधिजिगांसमानस्याधीत्य च ॥ ४४ ॥

उभयतोऽध्ययनस्याऽऽदावन्ते चोपसंग्रहणं कर्तव्यम् । अध्येतुकामस्याऽऽदावधीत्यान्ते ॥ ४४ ॥

अधीयानेषु वा यत्रान्यो व्यवेयादेतमेव शब्दमुत्सृज्याधीयीत ॥ ४५ ॥

बहुवचनमतन्त्रम् । अधीयानेषु वा यत्रान्यो व्यवेयादध्येतॄणामन्तरा गच्छेत्तत्राधीहि भो इत्येतमेवं शब्दमुत्सृज्योच्चार्याधीयीत । प्रत्येकमुपदेशादेकवचनम् । अधीयीरन्नित्यर्थः ॥ ४५ ॥

श्वगर्दभनादाः सलावृक्येकसृकोलूकशब्दाः सर्वे वादितशब्दा रोदनगीतसामशब्दाश्च ॥ ४६ ॥

शुनां गर्दभानां बहूनां नादः । बहुवचननिर्देशात् । सलावृकी वृकजात्यवान्तरभेदः । क्रोष्ट्रीत्यन्ये । लिङ्गस्याविवक्षितत्वात्पुंसोऽपि ग्रहणम् । इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छदित्यादिनिर्देशात् । सर्वत्राऽऽदिस्वरो दीर्घः स एवात्र विकृतः प्रयुक्तः । एकसृक इत्येकचरः सृगालः । उलूको दिवाभीतः । एषां च शब्दाः । वादितानि वादित्राणि वीणावेणुमृदङ्गादीनि । तेषां च सर्वे शब्दा रोदनशब्दा गीतशब्दाः सामशब्दाश्च । एते श्रूयमाणा अनध्यायहेतवः ॥ ४६ ॥

शाखान्तरे च साम्नामनध्यायः ॥ ४७ ॥

वेदान्तरसकाशे साम नाध्येयम् । गीतिषु सामाख्या तद्योगाद्वेदोऽपि सामोच्यते ॥ ४७ ॥

सर्वेषु च शब्दकर्मसु यावता वा संसृज्येरन् ॥ ४८ ॥

आक्रोशपरीवादेषु सर्वेषु च शब्दकर्मसु अनध्यायः । यावता वाऽध्ययनशब्देन संबन्धं गच्छेरन् ॥ ४८ ॥

छर्दयित्वा स्वप्नपर्यन्तम् ॥ ४९ ॥

वमनं कृत्वा स्वप्नान्तं यावत्तावन्नाधीयीत ॥ ४९ ॥

सर्पिर्वा प्राश्य ॥ ५० ॥

अथवा सर्पिः प्राश्याधीयीत ॥ ५० ॥

पूतीगन्धश्च ॥ ५१ ॥

पूतीगन्धो दुर्गन्धः । स चोपलभ्यमानोऽनध्यायहेतुः ॥ ५१ ॥

शुक्तं चाऽऽत्मसंयुक्तम् ॥ ५२ ॥

यत्पक्वं कालपाकेनाम्लं जातं शुक्तम् । तच्छुक्तं यावता कालेनाऽऽत्मसंयुक्तं स्वोदरस्थमजीर्णं यावद्यावत्तदनुगुण उद्गारो वा तावदनध्यायहेतुः ॥ ५२ ॥

प्रदोषे च भुक्त्वा नाधीयीत ॥ ५३ ॥

तेनाधीत्यैव भुञ्जीत ॥ ५३ ॥

प्रोदकयोश्च पाण्योः ॥ ५४ ॥

भुक्त्वेत्येव । भुक्त्वा यावत्प्रोदकौ पाणी आर्द्रौ, तावन्नाधीयीत । केचिद्भुक्त्वेति नानुवर्तयन्ति ॥ ५४ ॥

प्रेतसंक्लृप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः ॥ ५५ ॥

यो मृतोऽसपिण्डीकृतः स प्रेतः । तदुद्देशेन दत्तमन्नं भुक्त्वा सप्रदोषमहर्नाधीयीत । प्रदोषादूर्ध्वं न दोषः । अत्र मनुः—

यावदेकानुदिष्टस्य गन्धालेपश्च तिष्ठति ।
विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्तयेत् । इति ॥ ५५ ॥

आ च विपाकात् ॥ ५६ ॥

यदि तावता कालेन तदन्नं विपक्वं जीर्णं न भवति तदाऽऽविपाकाच्च नाधीयीत ॥ ५६ ॥

अश्राद्धेन तु पर्यवदध्यात् ॥ ५७ ॥

जीर्णेऽजीर्णे च तस्मिन्नश्राद्धेनान्नेन पर्यवदध्यात् । तस्योपर्यश्राद्धमन्नं भुञ्जीतेत्युक्तं भवति । केचिदत्राश्राद्धेति वचनात्पूर्वत्रापि प्रेतान्नमिति श्राद्धमात्रं विवक्षितं मन्यन्ते ॥ ५७ ॥

काण्डोपाकरणे चामातृकस्य ॥ ५८ ॥

काण्डोपाकरणं काण्डव्रतादेशनम् । तस्मिन्नहनि अमातृकस्यान्नं भुक्त्वा सप्रदोषमहरनध्यायः । अपर आह— भुक्त्वेति नानुवर्तते । तथा चोत्तरत्र भुक्त्वाग्रहण काण्डोपाकरणेऽमातृकस्य माणवकस्य सप्रदोषमहरनध्याय इति । एतेनोत्तर व्याख्यातम् ॥५८॥

काण्डसमापने चापितृकस्य ॥ ५९ ॥

काण्डसमापन व्रतविसर्गः ॥ ५९ ॥

मनुष्यप्रकृतीना च ( ख० १० ) । देवानां यज्ञे भुक्त्वेत्येके ॥ ६० ॥

मनुष्या भूत्वा प्रकृष्टेन तपसा ये देवाः संपन्नास्ते मनुष्यप्रकृतयो देवाः । ब्राह्मे पुराणे कुबेरनन्दीश्वरकुमारादयः । तेषा यज्ञे तत्प्रीत्यर्थे ब्राह्मणभोजने भुक्त्वा सप्रदोषमहरनध्याय इत्येके मन्यन्ते । मनुष्यमुखदेवेष्विज्यमानेष्वित्यन्ये ॥ ६० ॥

प्रेतसंक्लृप्तमित्यस्यापवादमाह—

पर्युषितैस्तण्डुलैराममांसेन च नानध्यायः ॥ ६१ ॥

पर्युषिता राज्यन्तरिताः प्रतिग्राह्याः । प्रतिगृहीतेषु तण्डुलेषु अद्य पक्त्वा भुज्यमानेषु नानध्यायः । तथाऽऽममांसेन तदहर्भक्षितेन नानध्यायः । पर्युषितेनेत्यन्ये । पर्युषितैरिति वचनात्तदहर्भुक्ता. सप्रदोषमहरनध्यायः ॥ ६१ ॥

तथौषधिवनस्पतिमूलफलैः ॥ ६२ ॥

ओषधिग्रहणेन व्रीहयो गृह्यन्ते । वनस्पतिग्रहणेनापि वृक्षग्रहणम् । तेषा मूलै. फलैः सूरणादिभिः पक्वैरपक्वैश्च तदहर्भक्षितैरपि नानध्याय. ॥ ६२ ॥

यत्काण्डमुपाकुर्वीत यस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत ॥ ६३ ॥

यस्मिन्नहनि यत्काण्डमुपाकृतं न तत्तदहरधीयीत । अहरित्यहोरात्रोपलक्षणम् ॥ ६३ ॥

उपाकरणसमापनयोश्च पारायणस्य च तां विद्याम् ॥ ६४ ॥

अनेकवेदाध्यायी यदैकवेदस्य पारायणं कुरुते तदा तस्य पारायणस्य ये उपाकरणोत्सर्जने तयोः कृतयोस्ता विद्या •तदहर्नाधीयीत । उक्त गृह्ये पारायणविधानातिदेशेन । ता विद्यामिति वचनाद्विद्यान्तराध्ययने न दोष. ॥ ६४ ॥

**वायुर्घोषवान्भूमौ वा तृणसंवाहो वर्षति वा यत्र धाराः प्रवहेत् ॥ ६५ ॥**

घोषवान् कर्णश्रावः । भूमाववस्थितानि तृणानि सवाहयति उत्क्षिप्य गम॰ यतीति तृणसवाहः । वर्षति वा देवे धाराः प्रवहेत् क्षिपेत् । यत्र देश एवंविधो वायु॰ स्तत्र तावन्तं कालं नाधीयीत । अत्र मनुः—कर्णश्रावेऽनिले रात्रौ दिवा या(पा)॰ सुसमूहन इति ॥ ६५ ॥

उत्तरे द्वे सूत्रे निगदासिद्धे —

**ग्रामारण्ययोश्च संधौ महापथे च गतो विप्रोष्य च समध्ययनं तदहः ॥ ६६ ॥**

यदा सहाधीयानाः कारणवशात्प्रवसेयुः के(कदा)चिच्चाऽऽचार्येण संगतास्तदा सम॰ ध्ययन सहाधीयमानं तदहर्नाधीयीत । विप्रोषिताना पुनर्यदहर्मेलनं तदहर्नाधीयीते॰ त्यन्ये ॥ ६६ ॥

**स्वैरिकर्मसु च ॥ ६७ ॥**

नाधीयीतेत्येव ॥ ६७ ॥

तत्रोदाहरणम्—

**यथा पादप्रक्षालनोत्सादनावलेखनानुलेपनानीति तावन्तं कालं नाधीयीताध्यापयेद्वा संध्योः ॥६८॥**

स्वैरिकर्मसु तावन्तं कालमध्ययनमध्यापन च वर्जयेत् । ज्योतिषोर्दर्शनादुभे संध्ये तयोः । तावन्त काल नाधीयीताध्यापयेद्वा । एवमुत्तरत्राप्यनुवृत्तिः ॥ ६८ ॥

उत्तरे द्वे सूत्रे निगदासिद्धे—

**तथा वृक्षसमारूढोऽप्सु वाऽवगाढो नक्तं चापावृत्ते दिवा चापिहिते ॥ ६९ ॥**

विवृतं द्वारमपावृत्तम् । तत्र नक्तं नाधीयीत । संवृतं द्वारमपिहितम् । तत्र दिवा नाधी॰ यीत ॥ ६९ ॥

**अविहितमनुवाकाध्ययनमाषाढवासन्तिकयोः ॥ ७० ॥**

वासन्तिको वसन्तोत्सवः । स चैत्रे मासि शुक्लत्रयोदश्यां भवति । आषाढशब्दे॰ नापि तस्मिन्मासि क्रियमाणस्तादृशः कश्चिदिन्द्रोत्सवादिर्विवक्षितः । तयोस्तदहरनुवाका

ध्ययनमविहितम् । अनुवाकग्रहणान्न्यूने न दोषः । अपर आह—अनुवाकग्रहणान्मन्त्रब्राह्मणयोरेव प्रतिषेधो नाङ्गानामिति ॥ ७० ॥

नित्यप्रश्नस्य चाविधिना ॥ ७१ ॥

नित्यं प्रश्नाध्ययनं यस्य स नित्यप्रश्नो ब्रह्मयज्ञः । तस्याविधिना । उक्तविधेरन्यो विधिरविधिः । तेनाविधिना । वक्ष्यमाणप्रकारेण विधिनाऽनुवाकाध्ययनं विहितम् । यद्यपि नित्यं ब्रह्मयज्ञाध्ययनं तथाऽपि केनचिदङ्गेन विना न कर्तव्यम् । तेन विस्मृत्य प्रातराशे कृते प्रायश्चित्तमेव न ब्रह्मयज्ञः । स्नातकव्रतलोपेऽपि प्रायश्चित्तमभोजनम् ॥ ७१ ॥

तस्य विधिः ॥ ७२ ॥

तस्य नित्यप्रश्नस्य विधिरुच्यते ॥ ७२ ॥

अकृतप्रातराश उदकान्तं गत्वा प्रयतः शुचौ देशे स्वाध्यायमधीयीत यथाध्यायमुत्सृजन्वाचा ॥ ७३ ॥

अकृतप्रातराशोऽकृतदिवाभोजनः । उदकान्तमुदकसमीपं गत्वा प्रयतः स्नानमार्जनादिना शुद्धः शुचौ देशे प्राच्यामुदीच्यां प्रागुदीच्यां दिश्यच्छदिर्देशेऽधीयीत यथाध्ययनमुत्सृजन् यथापाठमनुसङ्गमुत्सृजन्नादित आरभ्य प्रथमादिष्वहःसु अधीयीत । द्वितीयादिषूत्सृज्य ततः परमधीयीत । वाचोच्चैरित्यर्थः ॥ ७३ ॥

मनसा चानध्याये ॥ ७४ ॥

अनध्याये च मनसाऽधीयीत नित्यस्वाध्यायम् ॥ ७४ ॥

विद्युति चाभ्यग्रायां स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च मानसं परिचक्षते ॥ ७५ ॥

विद्युति अभ्यग्रायामविरतायाम् । स्तनयित्नौ चाभ्यग्रे । अप्रायत्य आत्मनोऽशुचिभावे । प्रेतान्ने च भुक्ते । नीहारे नीहारो हिमानी तस्मिंश्च वर्तमाने । मानसमनन्तरोक्तमध्ययनं परिचक्षते वर्जयन्ति ॥ ७५ ॥

श्राद्धभोजन एवेत्येके ॥ ७६ ॥

एक आचार्याः श्राद्धभोजन एव मानसं परिचक्षते न विद्युदादिषु ॥ ७६ ॥

विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र संनिपतेयुस्त्र्यहं-

अपर्तौ यथा—यस्मिन्देशे यो वर्षकालस्ततोऽन्यत्रापर्तुः । तत्र यदि विद्युदादयः संनिपतेयु समुच्चिताः स्युस्तत्र त्र्यहमनध्यायः ॥ ७७ ॥

यावद्व्युदका भूमिरित्येके ॥ ७८ ॥

यावता कालेन भूमिर्विगतोदका भवति तावन्तं कालमनध्याय इत्येके मन्यन्ते ॥ ७८ ॥

एकेन द्वाभ्यां वै तेषामाकालम् ॥ ७९ ॥

विद्युदादीना मध्य एकेन द्वाभ्या वा योग आकालमनध्यायः । परेद्युरागतस्य कालस्य प्राप्तिपर्यन्तमित्यर्थः ॥ ७९ ॥

सूर्याचन्द्रमसोर्ग्रहणे भूमिचलनेऽवस्वान उल्काया मग्न्युत्पाते च सर्वासा विद्यानां सार्वकालिकमाकालम् ॥ ८० ॥

सूर्याचन्द्रमसोरिति वचनं बृहस्पत्यादिनिवृत्त्यर्थम् । भूमिचलने भूमिकम्पे । अवस्वाने निर्घाते । उल्कायामुल्कापाते । अग्न्युत्पाते ग्रामादिदाहे । एतेषु सर्वासा विद्याना

अङ्गानि वेदाश्चत्वारो मीमासा न्यायविस्तर. ।
पुराण धर्मशास्त्र च विद्या ह्येताश्चतुर्दश ॥

इत्युक्ताना सार्वकालिकमृतौ चापर्तौ चाऽऽकालमनध्याय. । अत्र सर्वासामिति वचनादन्यत्र वेदानामेव प्रतिषेधः । अङ्गानामपीत्यन्ये ॥ ८० ॥

अभ्रे चापर्तौ ॥ ८१ ॥

अपर्तावभ्रं दृश्यमानं यावद्दृश्यते तावत्कालमनध्यायः ॥ ८१ ॥

सूर्याचन्द्रमसोः परिवेष इन्द्रधनुषि प्रतिसूर्यमत्स्य[श्च] वाते पूतीगन्धे नीहारे च सर्वेष्वेतेषु तावन्तं कालम् ॥ ८२ ॥

एवं परिवेषादिष्वपि योज्यम् । अत्रापि बृहस्पत्यादिपरिवेषे न दोषः । इन्द्रधनुः प्रसिद्धम् । सूर्यसमीपे तदाकृतिः प्रतिसूर्यः । मत्स्यः पुच्छवन्नक्षत्रम् । समाहारद्वंद्वे छान्दसो लिङ्गव्यत्ययः । सर्वेष्वेतेषु वातादिषु च त्रिषु तावत्कालमनध्ययनम् । वाते घोषवति । पूतीगन्धे दुर्गन्धे । नीहारे हिमान्याम् । वातादिग्रहणं पूर्वोक्ताना श्वगर्दभादीनामुपलक्षणम् । पुनरिह विधानं तावत्कालमिति विधातुम् । अत्रैव गर्दभादिग्रहणे कर्तव्ये पूर्वत्र पाठस्य चिन्त्य प्रयोजनम् ॥ ८२ ॥

**मुहूर्तं विरते वाते ॥ ८३ ॥**

वाते तु घोषवति विरते मुहूर्तमनध्यायः । द्वे नाडिके मुहूर्तः ॥ ८३ ॥

**सलावृक्यामेकसृक इति स्वप्नपर्यन्तम् ॥ ८४ ॥**

तावत्कालमित्यस्यापवादोऽयम् ॥ ८४ ॥

**नक्तं चारण्येऽनग्नावहिरण्ये वा ॥ ८५ ॥**

रात्रावग्निवर्जिते हिरण्यवर्जिते वाऽरण्ये नाधीयीत ॥ ८५ ॥

**अननूक्तं चापर्तौ छन्दसो नाधीयीत ॥ ८६ ॥**

उत्सर्जनादूर्ध्वमुपाकरणादर्वागपर्तुः । तत्र च्छन्दसो नानूक्तमशमपूर्वं नाधीयीत । ग्रहणाध्ययनमपर्तौ न कर्तव्यम् । यद्यपि तैष्या पौर्णमास्या रोहिण्या वा विरमेदित्युक्तं तथाऽपि कियन्त कालं तद्विरमणं कस्याध्ययनमित्यपेक्षायामुच्यते । एतावन्त कालं ग्रहणाध्ययनं न कर्तव्यम् । धारणाध्ययने तु न दोषः । तथा छन्दस इति वचनादङ्गाना ग्रहणेऽपि न दोषः ॥ ८६ ॥

**प्रदोषे च ॥ ८७ ॥**

प्रदोषे चाननूक्तमृतावपि नाधीयीत । मासं प्रदोषे नाधीयीतेत्येतत्तु धारणाध्ययनस्यापि प्रतिषेधार्थम् । अपर आह—यस्या रात्रौ द्वादशी त्रयोदशी च मिश्रे भवतस्तस्या प्रदोषे नाधीयीताननूक्तमनुक्तं चर्तावपर्तौ चैष आचार इति ॥ ८७ ॥

**सार्वकालिकमाम्नातम् ॥ ८८ ॥**

आम्नातमधीतं न सार्वकालिकम् । अपर्तौ प्रदोषे च सर्वस्मिन्कालेऽनध्यायः ॥८८॥

**यथोपाकृते नानुवाकानामेवमपर्तौ कल्पानां यथोक्तमन्यदत्तः(तः) परिषत्सु ॥ ८९ ॥ ( ख० ११ ) ।**

**इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (धर्मसूत्रापरपर्याये) षड्विंशप्रश्ने तृतीयः पटलः ॥**

अत एतस्मादनध्यायप्रकरणादन्यदनध्यायनिमित्तं परिषत्सु मानवादिधर्मशास्त्रेषु यथोक्तं द्रष्टव्यम् । तत्र वसिष्ठः—दिग्दाहपर्वतप्रपातेषु फलरुधिरपांसुवर्षेष्वाकालिकमिति । यमः—

श्लेष्मातकस्य च्छायाया मधुकस्य तथाऽप्यधः ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥

संग्रामोद्यानदेवसमीपेषु नाधीयीत ॥ ८९ ॥ (ख० ११) ।

इति श्रीमन्महादेवदीक्षितविरचिताया हिरण्यकेशिधर्मप्रश्नव्याख्याया-मुज्ज्वलाया षड्विंशप्रश्ने तृतीयः पटलः ॥

अथ चतुर्थ पटल ।

**तपः स्वाध्याय इति हि ब्राह्मणम् ॥ १ ॥**

योऽय नित्यस्वाध्यायः सः, कृच्छ्रचान्द्रायणादिलक्षणं तपो यावत्फलं साधयति तावत्फलं साधयतीत्यर्थः ॥ १ ॥

**तत्र श्रूयते स यदि तिष्ठन्नासीनः शयानो वा स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इति ॥ २ ॥**

तत्र ब्राह्मणे स यदि तिष्ठन्नित्यापत्कल्प. श्रूयते । तत्र दर्भाणा महदुपस्तीर्योपस्थं कृत्वा प्राङासीन. स्वाध्यायमित्यादिर्मुख्यः कल्प. । स यदि तिष्ठन्नासित्वा ब्राह्मण एवोक्तः । इह पुनरासीनवचन यथाकथचिदासीनार्थम् । सर्वथाऽप्यधीयानस्तप एव तत्तप्यत इति ब्राह्मणार्थः । मनुरप्याह—

आहैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यत्स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥ इति ।

स्रग्वीति स्वैर दर्शयति । एव कर्तुर्नियमो नाऽऽपद्यतीवाऽऽदरणीय इति ॥ २ ॥

उत्कालेऽप्याह—

**अथापि वाजसनेयिब्राह्मणं ब्रह्मयज्ञो ह वा एष यत्स्वाध्यायस्तस्यैते वषट्कारा यत्स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वा वाति तस्मात्स्तनयति विद्योतमाने वाऽवस्फूर्जति वाते वा वायत्यधीयीतैव वषट्काराणामच्छबट्कारायेति विज्ञायते ॥ ३ ॥**

अथापि अपि च स्वाध्यायो नाम यदेष ब्रह्मयज्ञः । ब्रह्म वेदस्तत्साधनो यागः । यथा दर्शपूर्णमासादयः पुरोडाशादिसाधनाः । हवैशब्दौ प्रसिद्धिं द्योतयत. । तस्य यज्ञस्यैते

स्तनयित्न्वादय. । वषट्कारदर्शनात् । वायतीति वै शोषण इत्येतस्य रूपम् । यथाऽऽर्द्रः प्रदेशः शुष्को भवति तथा वाय्यतीत्यर्थ. । यस्मादेते वषट्कारास्तस्मात्स्तननादिष्व[न]-ध्यायनिमित्तेषु सत्स्वप्यधीयीतैव न पुनरनध्याय इति नाधीयीत । किमर्थम् । वषट्काराणामेतेषामच्छंबट्काराय।व्यर्थत्वाय । अन्यथा वषट्कारा एते व्यर्थाः स्यु. । ततश्च यथा होत्रा वषट्कृतेऽध्वर्युर्जुहुयात्तादृगेव तत्स्यात् ॥ ३ ॥

तस्य शाखान्तरे वाक्यसमाप्तिः ॥ ४ ॥

तस्य वाजसनेयिब्राह्मणस्य शाखान्तरे वाक्यसमाप्तिर्भवति । न तावता पर्यवसानम् ॥ ४ ॥

तदेव शाखान्तर पठति–

अथ यदि वातो वा वायात्स्तनयेद्वा विद्योतेत वा स्फूर्जेद्वैका वर्चमेकं वा यजुरेकं वा सामाभिव्याहरेद्भूर्भुवः स्वः सत्यं तपः श्रद्धायां जुहोमीति चैतत्तेनो हैवास्यैतदहः स्वाध्याय उपाप्तो भवति ॥ ५ ॥

अन्त इति शब्दोऽध्याहार्यः। वातादिषु सत्सु एकामृचमधीयीत प्राप्ते प्रदेशे। यजुर्वेदाध्ययन एक यजुः । सामवेदाध्ययन एक साम । सर्वेषु वा वेदेषु भूर्भुव स्वरित्यादिकं यजुरभिव्याहरेत्। न पुनर्यथापूर्वं प्रश्नमात्रम् । तेनैतावताऽध्येतुस्तदहस्तस्मिन्नहनि स्वाध्याय उपाप्तो भवति स्वीकृतो भवति। अधीतो भवतीत्यर्थ.। केचिद्भूर्भुवःस्वरित्यादिक ब्राह्मणं नामाध्ययनविषयं मन्यन्ते न सार्वत्रिकम् ॥ ५ ॥

कस्मात्पुनर्वाजसनेयिब्राह्मणस्योदाहृते शाखान्तरे वाक्यपरिसमाप्तिरवसायते न पुनर्यथाश्रुतमात्रं गृह्यते तत्राऽऽह–

एवं सत्यार्यसमयेनाविप्रतिषिद्धम् ॥ ६ ॥

एवं सति एवं वाक्यपरिसमाप्तावाश्रीयमाणायामार्यसमयेनाऽऽर्या. शिष्टा मन्वादयस्तेषा समयो व्यवस्था तेनाविप्रतिषिद्ध भवति । इतरथा विप्रतिषिद्ध स्यात् ॥ ६ ॥

कथम्—

अध्यायानध्यायान्ह्युपदिशन्ति तदनर्थकं स्याद्वाजसनेयिब्राह्मणं चेदवेक्षेत ॥ ७ ॥

आर्याः स्वाध्यायमनध्यायं चोपदिशन्ति । तदुपदेशोऽनर्थकः स्याद्यदि वाजसनेयिब्राह्मण यथाश्रुतमवेक्षेताध्येता ॥ ७ ॥

आहानर्थकमेव तदस्तु । श्रुतिविरोधात् । तत्राऽऽह—

आर्यसमयो ह्यगृह्यमानकारणः ॥ ८ ॥

योऽयमध्यायानध्यायमये विषय आर्यसमयो न तत्र किंचित्कारणं गृह्यते। यथा वैसर्जनीयं वासोऽध्वर्यवे ददातीति । अगृह्यमाणकारणश्चाऽऽर्यसमयः श्रुत्यनुमानद्वारेण प्रमाणम् । अतो वाक्यपरिसमाप्तिरेव युक्ता । एवं वाजसनेयिब्राह्मणस्यापि नात्यन्तबाधः। अनध्यायोपदेशस्यापि प्रभूताध्ययनविषयतयाऽर्थवत्त्वमिति । अगृह्यमानकारण इति णत्वाभावश्छान्दसः । का पुनरसौ स्मृतिर्या ब्रह्मयज्ञेऽप्यनध्यायमुपदिशति । मानवे तावद्विपर्ययः श्रूयते—नेत्येके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतमिति । सामान्येनानध्यायो ब्रह्मयज्ञादन्यत्र चरितार्थः । तस्मात्तादृशी स्मृतिर्मृग्या ॥ ८ ॥

एवं तर्ह्यग्निहोत्रादिष्वपि मन्त्राणामनध्यायः प्राप्नोति नेत्याह—

विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम् ॥९॥

विद्या वेदानामध्ययनं प्रत्यनध्यायः श्रूयते न पुनः कर्मयोगे । हेतुः । अर्थान्तरं हि कर्मणि प्रयोगो मन्त्राणाम् । नापूर्वग्रहणार्थमध्ययनम् । पारायणाध्ययनमध्येऽनध्यायागमे भवति न वेति चिन्त्यम् । एवं रुद्रादिजपेऽपि ॥ ९ ॥

कथं पुनरार्यसमयः प्रमाण यावता न तेषामतीन्द्रियेऽर्थे ज्ञानं संभवति । तत्राऽऽह—

ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः ॥ १० ॥

अध्येतृदौर्बल्यात् ॥ १० ॥

कथं तर्हि तेषामास्तित्वम्—

प्रयोगादनुमीयन्ते ॥ ११ ॥

प्रयोगः स्मृतिनिबन्ध[न] मनुष्ठानं च । तस्माद्ब्राह्मणान्यनुमीयन्ते मन्वादिभिरुपलब्धानीति । कथमपरथा स्मरेयुरनुतिष्ठेयुर्वा संभवति च तेषा चेदसंयोगः ॥ ११ ॥

अथ प्रसङ्गादुपस्मृतिरुच्यते—

यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति ॥ १२ ॥

यत्र तु मातुलसुतापरिणयनादौ प्रीत्युपलब्धितः प्रवृत्तिर्न तत्रोत्सन्नपाठशास्त्रप्राप्तानां श्रुतिमूलत्वं युक्तम् ॥ १२ ॥

तादृगप्रमाणमित्याह—

तदनुवर्तमानो नरकाय राध्यति ॥ १३ ॥

ता अपस्मृतीरनुवर्तमानस्तदुक्तं कर्म कुर्वाणो नरकाय राध्यति । कल्पत इत्यर्थ. ॥ १३ ॥

अथेदानीं प्रत्यक्षब्राह्मणोक्ता एव केचिद्विधयो व्याख्यायन्ते तेषामपि स्मार्तेष्वनुप्रवेशार्थम् । तेन तदतिक्रमे स्मार्तातिक्रमनिमित्तमेव प्रायश्चित्तं भवति —

**अथापि ब्राह्मणोक्ता विधयस्तेषां महायज्ञा महासत्राणीति संस्तुति. ॥ १४ ॥**

अत्रापि स्मृतिमूलानि ब्राह्मणानि प्रत्यक्षाणि दृश्यन्ते तद्वत्तत्रापि श्रुतिमूलमनुमीयत इत्यर्थः । तेषां वक्ष्यमाणानां महायज्ञा इति संस्तुति. । स्वाध्यायब्राह्मण आरण्यकादौ संस्तुतिग्रहणेन सस्तुतिमात्रमिदं नामधेयं धर्मातिदेशार्थमिति दर्शयति । तेन महायज्ञेषु सोमयागेषु ये धर्मा न ज्येष्ठभ्रातरमन्तरित्यसोमेन यष्टव्यमित्यादयो ये च महासत्रस्य गवामयनस्य धर्मा इष्टप्रथमयज्ञानामधिकार इत्येवमादयस्त उभय एव वक्ष्यमाणेषु पञ्चमहायज्ञेषु न भवन्ति ॥ १४ ॥

**अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्तिदानं (ख० १२) । देवेभ्यः स्वाहाकार आकाष्ठात् पितृभ्यः स्वधाकार ओदपात्रात्स्वाध्याय इति ॥ १५ ॥**

वैश्वदेवे वक्ष्यमाणेन बलिहरणप्रकारेण भूतेभ्योऽहरहर्बलिर्देय एष भूतयज्ञः । मनुष्येभ्यश्च यथाशक्ति दानं कर्तव्यमेष मनुष्ययज्ञः ( ख० १२ ) । देवेभ्य. स्वाहाकारेण प्रदानमाकाष्ठात् । अशनीयाभावे काष्ठमपि तावद्देयं वैश्वदेवोक्तप्रकारेण । एष देवयज्ञः । केचिद्वैश्वदेवाहुतिभ्य. पृथग्भूतामिमां मन्यन्ते । देवेभ्य. स्वाहेति मन्त्रमिच्छन्ति । देवयज्ञेन यक्ष्य इति संकल्पमिच्छन्ति । वयं तु न तथेति गृह्य एवावोचाम । केचिदाहुराकाष्ठादिति वचनाददनीयाभावेन भोजनलोपेऽपि यथाकथंचिद्वैश्वदेव. कर्तव्य. पुरुषसंस्कारत्वादिति । अपरे त्वशनीयसंस्कार इति वदन्तो भोजनलोपे वैश्वदेवो न कर्तव्य इति स्थिताः । तच्चिन्त्यम् । पितृभ्यः स्वधाकारेण प्रदानमोदपात्रात् । अन्नाद्यभाव उदपात्रमपि तावद्देयम् । पात्रग्रहणात्सह पात्रेण देयम् । एष पितृयज्ञ. । स्वाध्यायस्तस्य विधिरित्यारभ्योक्तो नित्यस्वाध्याय. । एष ऋषियज्ञ. । इतिशब्दः समाप्तौ । इत्येते महायज्ञा इति । न चायमुपदेशक्रमोऽनुष्ठान उपयुज्यते । अनुष्ठानं तु ब्रह्मयज्ञो देवयज्ञो भूतयज्ञ. पितृयज्ञो मनुष्ययज्ञ इति ॥ १५ ॥

पूजाप्रसङ्गादाह—

**पूजा वर्णज्यायसां कार्या ॥ १६ ॥**

वर्णतो यो ज्यायान्प्रशस्ततरो भवति तस्यावरेण पूजा कार्या । अध्वन्यनुगमनादिका । उत्सवेषु गन्धमाल्यादिका ॥ १६ ॥

**वृद्धतरणा च ॥ १७ ॥**

सजातीयानामपि पूजा कार्या । तरनिर्देशाद्विद्यावयःकर्मभिर्वृद्धानाम् । हीनानामपीत्येके । तथा च मनुः—शूद्रोऽपि दशमीं गत इति पूजा कार्येत्युक्तम् ॥ १७ ॥

तद्विरोधिहर्षो वर्ज्य इत्याह—

**हृष्टो दर्पति दृप्तो धर्ममतिक्रामति धर्मातिक्रमे खलु पुनर्नरकः ॥ १८ ॥**

अभिमतलाभादिनिमित्तश्चित्तविकारो हर्षः । तद्युक्तो हृष्टः । स दर्पति । दर्पो गर्वोऽभिमानः । दृप्तो धर्ममतिक्रामति । पूज्यपूजनादिकं प्रतिस्तब्धत्वात् । खलुशब्दो वाक्यालङ्कारे । धर्मातिक्रमे पुनर्नरको भवति निरयं प्रतिपद्यते । तस्माद्धर्मातिक्रममूलभूतो हर्षो न कर्तव्यः । यद्यपि भूतदाह्रीयेषु दोषेषु वर्जनीयेषु हर्षो विवर्ज्यते तथाऽपीह विशेषेण हर्षवर्जनार्थोऽयं समारम्भः । योगाङ्गत्वाद्वक्ष्यमाणस्य ॥ १८ ॥

**न समावृत्ते समादेशो विद्यते ॥ १९ ॥**

समावृत्तशिष्यं प्रत्याचार्येण समादेशो न देय इदं त्वया कर्तव्यमिति । यथा समावृत्तदशाया दीयते उदकुम्भमाहरेति । नैर्मात्तिके स्वेच्छया करणे न प्रतिषेधः ॥ १९ ॥

**ॐकारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत ॥ २० ॥**

ओंकारः प्रणवः स्वर्गद्वारमिति यथा द्वारेण गृहाभ्यन्तरं प्राप्यते तथा तेन स्वर्गः । तस्माद्ब्रह्म वेदं स्वर्गसाधनमध्येष्यमाण एतदादि अनाम्नातमपि ॐकारमादौ कृत्वा प्रतिपद्येत क्रमेताध्येतुम् ॥ २० ॥

**विकथा चान्यां कृत्वैव लौकिक्या वाचा व्यावर्तते ब्रह्म ॥ २१ ॥**

अध्ययनेऽनुपयुक्ताः कथा विकथाः । अतोऽन्या कृत्वा एतदादि प्रतिपद्येत । एवं सति ब्रह्म वेदो लौकिक्या वाचा व्यावर्तते तया मिश्रितं न भवति ॥ २१ ॥

पुनरप्योंकारमेव स्तौति—

**यज्ञेषु चैतदादयः प्रसवाः ॥ २२ ॥**

यज्ञेषु दर्शपूर्णमासादिष्वेतदादय ॐकारादयः प्रसवा अनुज्ञावाक्यानि स्युर्ब्रह्मादीनाम् । ओं प्रणय । ओं निर्वप । ओं स्तुतेति ॥ २२ ॥

**लोके च भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युर्यथा पुण्याहꣳ स्वस्त्ययनमृद्धिमिति ॥ २३ ॥**

लोके च कर्मसु पाणिग्रहणादिष्वेतदादीन्येव वाक्यानि स्यु: । तान्युदाहरति यथा पुण्याहवाचने—ॐ कर्मणः पुण्याहमिति वाचयित्वा वदन्ति ॐ पुण्याह कर्मण इति प्रतिवक्तारः । ॐ कर्मणे स्वस्ति भवन्तो ब्रुवन्त्विति वाचयित्वा ॐ स्वस्ति कर्मण इतीतरे । ॐ कर्मण ऋद्धिं भवन्तो ब्रुवन्त्विति वाचयित्वा ॐ कर्म ऋध्यतामितीतरे । तस्मादेव प्रशस्त ॐकार इति ॥ २३ ॥

**नासमयेन कृच्छ्रं कुर्वीत त्रिः श्रावणं त्रिः सहवचनमिति परिहाप्य ॥ २४ ॥**

समयः शुश्रूषा । तेन विना कृच्छ्रं दुःखं दुरवधारणमपूर्वग्रन्थ न कुर्वीत । क्रियासामान्यवचनः करोतिरध्ययनेऽध्यापने च वर्तते । समयेन विना शिष्योऽपि कृच्छ्रं ग्रन्थं नाधीयीत । आचार्योऽपि नाध्यापयेत् । तथा च मनुः—

धर्मार्थौ यत्र न स्याता शुश्रूषा चापि तद्विधा ।
न तत्र विद्या वक्तव्या शुभ बीजमिवोखरे ॥ इति ।

किमविशेषेणेत्याह–त्रिः श्रावण त्रिः सहवचनमिति परिहाप्य वर्जयित्वा । त्रिः श्रावणमात्रा(त्रे) त्रिः सहवचनमात्रा(त्रे) चान्यतरापेक्षया क्रियमाणे शुश्रूषा नापेक्ष्या ततोऽधिके सर्वत्रापेक्ष्येति ॥ २४ ॥

**अविचिकित्साया ब्रह्म निगन्तव्यमिति हारीतः ॥ २५ ॥**

विचिकित्सा सशय । तदभावोऽविचिकित्सा । सा यावदुपपद्यते तावद्ब्रह्म निगन्तव्यं नियमेन गन्तव्यं नियमपूर्वमधिगन्तव्यमिति हारीत आचार्यो मन्यते । अत्र पक्षे त्रिःश्रावणात्रिःसहवचनयोरपि शुश्रूषितव्यम् । ब्रह्मग्रहणादङ्गेषु नाय विधिः ॥ २५ ॥

**न बहिर्वेदे गतिर्विद्यते ॥ २६ ॥**

बहिर्वेदे वेदाद्बहिर्भूते काव्यनाटकश्रवणे गतिः शुश्रूषा न विद्यते । यद्यपि तदुपयुक्तं वेदार्थज्ञाने ॥ २६ ॥

**समादिष्टमध्यापयन्तं यावदध्यायमुपसंगृह्णीयात् ॥ २७ ॥**

आचार्येण समादिष्टोऽध्यापयेति त यावदध्याय यावदसावध्यापयति तावदुपसंगृह्णीयात् । तथा समादिष्टोऽध्यापयतीत्यत्र सूत्र आचार्यदारवद्वृत्तिरुक्ता । तत्र चान्यत्रोपसगृह्णीयादिति वर्तते । अत उपसग्रहणार्थोऽयमारम्भः ॥ २७ ॥

**एनमुपसंगृह्णीयान्नित्यमर्हन्तमित्येके ॥ २८ ॥**

स चेत्समादिष्टोऽर्हन्भवति विद्यासमाचारादिना ततो नित्यमुपसंगृह्णीयादित्येके । स्वमतं तु यावदध्ययनमिति ॥ २८ ॥

**नित्यानां तु खलु ॥ २९ ॥**

सा गतिर्नित्यसमादिष्टा य आचार्येणाध्यापनार्थं तेषामेव । न तु कदाचित्समादिष्टानाम् । कादाचित्के तु नित्य न गतिर्विद्यते । यद्यप्यसावर्हन्भवति तथाऽप्याचार्ये या गतिः शुश्रूषा साऽस्मिन्न कर्तव्या ॥ २९ ॥

**ब्रह्मणि मिथो विनियोगे न गतिर्विद्यते ॥ ३० ॥**

ब्रह्मणि वेदविनियोगविषये यथा मिथो विनियोगः क्रियते बह्वृचो यजुर्वेदाध्यायिनः सकाशाद्यजुर्वेदमधीते सोऽपि तस्माद्दग्वेद तदा परस्पर शूश्रूषा न कर्तव्या ॥ ३० ॥

अत्र हेतु स्वयमेवाऽऽह—

**ब्रह्म वर्धत इत्युपदिशन्ति ॥ ३१ ॥**

द्वयोरपि ब्रह्म वर्धते । सैव ब्रह्मवृद्धिः शुश्रूषा इत्युपदिशन्त्याचार्या ॥ ३१ ॥

**निवेशे हि वृत्ते संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतमिच्छन्निति श्वेतकेतुः ॥ ३२ ॥**

भूयः श्रवणमिच्छन् पुरुषो निवेशे वृत्ते दारकर्मणि वृत्तेऽपि प्रतिवत्सरं द्वौ द्वौ मासौ समाहित आचार्यकुले वसेदिति श्वेतकेतुराचार्यो मन्यते ॥ ३२ ॥

अत्र हेतुत्वेन श्वेतकेतोरेव शिष्यान्प्रति वचनम्—

**एनेन ह्ययं योगेन पूर्वस्मात्कालाद्भूयः श्रुतमकुर्वामिति ॥ ३३ ॥**

एतेनानन्तरोक्तेन योगेनोपायेन पूर्वस्माद्ब्रह्मचर्यकालाद्भूयोऽधिकतर श्रुतमकुर्वं तत्कृतवानस्मि । ततो यूयमपि तथा कुरुध्वमिति ॥ ३३ ॥

**तच्छास्त्रेषु च प्रतिषिद्धम् ॥ ३४ ॥**

तदिदं श्वेतकेतोर्दर्शनं श्रुत्यादिशास्त्रेषु विप्रतिषिद्धम् ॥ ३४ ॥

कथमित्याह—

**निवेशे हि वृत्ते(ख० ६३) । नैयमिकानि श्रूयन्ते**
**यथाऽग्निहोत्रमतिथयो यच्चान्यदेवं युक्तम् ॥ ३५ ॥**

हिशब्दो हेतौ । यस्मान्निवेशे वृत्ते नैयमिकानि नियमेन कर्तव्यानि नित्यानि कर्माणि श्रूयन्ते । कानि पुनस्तानि । अग्निहोत्रमतिथयोऽतिथिपूजा ।

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति जन्तवः । इति ।

यच्चान्यदेवं युक्तम् । एवंविधं श्राद्धादि । एवमेतैः कर्मभिरहरहराक्रान्तस्य शिरःकण्डूयनेऽप्यवसरो न भवति स कथं द्वौ मासौ गुरुकुले वसेदिति ॥ ३५ ॥

**अध्ययनार्थेन यं चोदयेन्न चैनं प्रत्याचक्षीत ॥ ३६ ॥**

यमाचार्यं माणवकोऽध्ययनं प्रयोजनमुद्दिश्य चोदयेच्छिष्यस्तेऽहं शाधि मां प्रपन्नमिति तमेव माणवकम् । चशब्दोऽवधारणे । नैनं प्रत्याचक्षीत ॥ ३६ ॥

किमविशेषेणेत्याह—

**न चास्मिन्दोषं पश्येत् ॥ ३७ ॥**

अस्मिन्निति निपातोऽस्ति चेदर्थवृत्तिः । ईदृक्च मृलया(डमा)निन इत्यादौ दर्शनात् । तस्यायं प्रयोगः । न चेदस्मिन्माणवकेऽध्याप्यहेतुदोषं पश्येत् ॥ ३७ ॥

**यदृच्छायामसंवृत्तौ गतिरेव तस्मिन् ॥ ३८ ॥**

समानमधीयानेषु माणवकेषु यदि कस्यचिद्यदृच्छया दृष्टहेतुमन्तरेणैव बुद्धिमान्द्यादिनाऽध्ययनस्यासंवृत्तिः स्यादधीतो भागो माणवकान्तरवन्नाधिगच्छेत्तदा तस्य यदृच्छायामसंवृत्तौ तस्मिन्नाचार्ये गतिरेव शुश्रूषैव माणवकस्य शरणम् । तथाऽऽह मनुः—

यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छतीति ॥

अधिकं शुश्रूषितो हि गुरुः सर्वात्मना तं शिक्षयेदिति ॥ ३८ ॥

**मातरि पितर्याचार्यवच्छुश्रूषा ॥ ३९ ॥**

मातृग्रहणेन पितामहीप्रपितामह्योरपि ग्रहणम् । पितृग्रहणेन च पितामहप्रपितामहयोर्ग्रहणम् । सर्वे एत आचार्यवच्छुश्रूषितव्याः ॥ ३९ ॥

**समावृत्तेन सर्वे गुरव उपसंग्राह्याः ॥ ४० ॥**

उक्तानुक्ताश्च ज्येष्ठा मातुलादय सर्वे गुरव. समावृत्तेनाहरहरुपसंग्राह्याः ॥ ४० ॥

**भ्रातृभागिनीषु च यथापूर्वमुपसंग्रहणम् ॥ ४१ ॥**

पूर्वेणैव सिद्धे क्रमार्थमिदं वचनम् । यथापूर्वं ज्येष्ठक्रमेणेति ॥ ४१ ॥

**नित्या च पूजा यथोपदेशम् ॥ ४२ ॥**

पूजा वर्णज्यायसा कार्या । वृद्धतराणामिति उपदेशानुरोधेन या नित्या पूजा सा च यथापूर्वं वृद्धतरक्रमेण ॥ ४२ ॥

**ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसोऽप्युत्थायाभिवदेत् ॥४३॥**

त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हतीति वक्ष्यति । तेऽवरवयस ऋत्विगादयोऽप्यभिवादयन्ते । तानभिवादयमानान्प्रत्युत्थायाभिवदेत् । नाने(न्ये)ष्विव यथासुखमासीनः । वयसोत्कृष्टाना तेषामियमेव पूजा ॥ ४३ ॥

**तूष्णीं वोपसंगृह्णीयात् ॥ ४४ ॥**

अथवा प्रत्युत्थाय स्वयमपि तान्तूष्णीमुपसगृह्णीयात् । विद्याचारित्राद्यपेक्षया विकल्पः ॥ ४४ ॥

अथाभिवाद्या उच्यन्ते—

**दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणं त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हतीति ॥ ४५ ॥**

पुरे भव पौरं पौर च तत्सख्यं च पौरसख्यम् । सेवानिबन्धन बान्धवम् । तदभिवादनस्य निमित्तम् । कीदृशम् । दशवर्षान्तराले [ विद्यमानम् ] । दशवर्षाधिकं पौरसख्यमश्रोत्रियोऽप्यभिवाद्य इति विवक्षितम् । पञ्चवर्षं तु चारणम् । सख्यमित्युपरि समन्तमप्यपेक्षते । चारणशब्दः शाखाध्यायिषु रूढ. । तेषा सख्यं पञ्चवर्षमभिवादनस्य निमित्तम् । श्रोत्रिय वक्ष्यति । स त्रिवर्षपूर्वस्तावन्मात्रेणाभिवादनमर्हति न पूर्वसंख्यमपेक्षते ॥४५॥

**ज्ञायमाने वयोविशेषे वृद्धतरायाभिवाद्यम् ॥ ४६ ॥**

---

१ क °रसंख्यं २ क तत्संख्यं । ३ क बन्धनं ।

क्रमार्थमिदम् । वयोविशेषे ज्ञायमाने पूर्वं वृद्धतरायाभिवाद्यमभिवादनं कर्तव्यं पश्चाद्वृद्धायेति ॥ ४६ ॥

विषमगतायागुरवे नाभिवाद्यम् ॥ ४७ ॥

उच्चैःस्थाने नीचैःस्थाने वा स्थितो विषमगतः । तस्मै गुरुव्यतिरिक्ताय नाभिवाद्यम् । गुरवे त्वभिवाद्यम् । एवं दर्शने सति तूष्णीमवस्थानस्य युक्तत्वात् ॥ ४७ ॥

अन्वारुह्य वाऽभिवादयीत ॥ ४८ ॥

इदमगुरुविषयम् । यत्रासावभिवादनीयः स्थितस्तत्र त्वन्वारुह्य वाऽभिवादयीताभिवादयेत् । अ[ न ]न्वारुह्येत्यपि द्रष्टव्यम् । उभयस्य तुल्यत्वात् । गुरौ तु( रुस्तु ) दृष्टमात्र एवाभिवादनीय इत्युक्तम् । सर्वत्र तु प्रत्युत्थायाभिवादनम् ॥ ४८ ॥

उत्तरे द्वे सूत्रे निगदसिद्धे—

अप्रयतेन नाभिवाद्यं तथा प्रयतायाप्रयतश्च न प्रत्यभिवदेत् ॥ ४९ ॥

यद्यज्ञानादप्रयताय कश्चिदभिवदेत्तथाऽपि सोऽप्रयतो न प्रत्यभिवदेत् ॥ ४९ ॥

पतिवयसः स्त्रियः ॥ ५० ॥

पत्युर्यद्वयः स्त्रीणां तदेव वयश्चेत्र तदनुरोधेन ज्येष्ठभार्यादिष्वभिवादनं कर्तव्यम् ॥ ५० ॥

न सोपानद्वेष्टितशिरा अवहितपाणिर्वाऽभिवादयीत ॥ ५१ ॥

अवहितपाणिः समित्कुशहस्तो दात्रादिहस्तो वा । अन्यत्प्रसिद्धम् ॥ ५१ ॥

सर्वनाम्ना स्त्रियो राजन्यवैश्यौ च न नाम्ना ॥ ५२ ॥

स्त्री च सर्वनाम्नैवाभिवाद्या त्वामभिवादयेऽहमिति । न नाम्नाऽभिवादनीया । एवं राजन्यवैश्यौ च ॥ ५२ ॥

मातरमाचार्यदारं चेत्येके ॥ ५३ ॥

मातरमाचार्यदारं च । एते अपि द्वे सर्वनाम्नैवाभिवादयीत । स्वमतं तु नाम्नैव भवति ॥ ५३ ॥

वयोविशेषणाभिवादनं हीनवर्णे नास्तीत्याह—

दशवर्षश्च ब्राह्मणः शतवर्षश्च क्षत्रियः पितापुत्रौ स्म तौ विद्धि तयोस्तु ब्राह्मणः पिता ॥ ५४ ॥

शिष्यं प्रत्याचार्यस्यायमुपदेश. । स्मशब्दः श्लोकपूरणार्थो निपातः । ब्राह्मणः क्षत्रिय इत्युपलक्षणम् । विद्धि जानीहि । शिष्ट स्पष्टम् ॥ ९४ ॥

**कुशलमवरवयसं वयस्यं वा पृच्छेत् ॥ ५५ ॥**

ब्राह्मणविषयमिदम् । क्षत्रियादिषु विशेषस्य वक्ष्यमाणत्वात् । वयसा तुल्यो वयस्यः । अवरवयसं वयस्य वा ब्राह्मण प(क)थादिषु संगत कुशल पृच्छेत्, अपि कुशलमिति ॥ ९९ ॥

**अनामयं क्षत्रियम् ॥ ५६ ॥**

अप्यनामय त इति । आमयो रोगस्तदभावोऽनामयं पृच्छेत् ॥ ९६ ॥

**अनष्टं वैश्यम् ॥ ५७ ॥**

अप्यनष्टपशुधनोऽसीति ॥ ९७ ॥

**आरोग्यं शूद्रम् ॥ ५८ ॥**

अप्यरोगो भवानिति ॥ ९८ ॥

**नासंभाष्य श्रोत्रियं व्यतिव्रजेदरण्ये च स्त्रियम् ॥ ५९ ॥ ( ख० १४ ) ।**

श्रोत्रियं पथिसंगतमसंभाष्य नव्यतिव्रजेन्नव्यतिक्रामेत् । अरण्ये च स्त्रियम् । अरण्यग्रहणं समयदेशस्योपलक्षणम् । तत्र स्त्रियमेकाकिनीं दृष्ट्वाऽसंभाष्य नातिव्रजेत् । संभाषण च मातृवद्भगिनीवच्च । भगिनि किं ते करवाणि न भेतव्यमिति ॥ ९९ ॥ ( ख० १४ ) ।

सर्वेषामेव कर्मणा शेषजातमाचमनं विवास्यंस्तदुपयोगिनो विधीनाह—

**उपासने गुरूणां वृद्धानामतिथीनां होमे जपकर्मणि स्वाध्याये भोजन आचमने च यज्ञोपवीति स्यात् ॥ ६० ॥**

गुरूणामाचार्यादीनामन्येषा च पूज्यानामतिथीना चोपासने यदा तानुपास्ते तदा होमे साङ्के पित्र्यादन्यत्र जपकर्मणि जपक्रियाया स्वाध्यायाध्ययने भोजनाचमनयोश्च यज्ञोपवीती स्यात् । वासो विन्यासविशेषो यज्ञोपवीतम् । दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमिति ब्राह्मणम् । वाससोऽसंभवेऽनुकल्पं वक्ष्यति । अपि वा सूत्रमेवोपवीतार्थम् । मनुरप्याह—

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृत त्रिवृत् ।
उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः ॥ इति ।

एतेषु यज्ञोपवीतविधानात्कालान्तरे नावश्यंभावः ॥ ६० ॥

**भूमिगतास्वप्स्वाचम्य प्रयतो भवति ॥ ६१ ॥**

अपि शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ॥
शुचि गोतृप्तिकृत्तोय प्रकृतिस्थ महीगतम् । इति याज्ञवल्क्यः ।
अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।
दशरात्रेण शुध्यन्ति भूमिष्ठं च नवोदकम् ॥ इति मनुः ।
श्रावणे मासि संप्राप्ते सर्वा नद्यो रजस्वलाः । इति स्मृत्यन्तरमपि ।

एवंभूतदोषरहितास्वप्स्वाचम्य प्रयतो भवति । प्रायत्यार्थमाचमन भूगतास्वप्सु कर्तव्यमिति ॥ ६१ ॥

**यं वा प्रयत आचामयेत् ॥ ६२ ॥**

यं वा प्रयतो योग्य आचामयेत्सोऽपि प्रयतो भवति । सर्वथा स्वय वामहस्तावर्जिताभिराचमन न भवति । एतेन शास्त्रान्तर उक्त कमण्डलुधारणमाचार्यस्य नाभिमत लक्ष्यते । अलाबुपात्रेण नारिकेलपात्रेण वा स्वयमाचमन कुर्वन्ति ॥ ६२ ॥

**न वर्षधारास्वाचामेत् ॥ ६३ ॥**

पूर्वोक्तेन प्रकारेण प्रायत्यार्थस्याऽऽचमनस्य वर्षधारासु प्रसङ्गाभावात् पिपासितस्य पानप्रतिषेधोऽयमिति केचित् । अपर आह—अस्मादेव प्रतिषेधाच्छिक्यादिस्थस्य करकादेर्या धारा तत्र प्रायत्यार्थमाचमन न भवतीति ॥ ६३ ॥

**तथा प्रदरोदके ॥ ६४ ॥**

भूमेः स्वयं दीर्णः प्रदेशः प्रदरः । तत्र यदुदक तस्मिन्भूमिगतेऽपि नाऽऽचामेत् ॥ ६४ ॥

**तप्ताभिश्चाकारणात् ॥ ६५ ॥**

तप्ताभिश्चाद्भिर्नाऽऽचामेत् । अकारणाज्ज्वरादौ कारणे सति न दोषः ॥ ६५ ॥

**रिक्तपाणिर्वयस उद्यम्याप उपस्पृशेत् ॥ ६६ ॥**

वय इति पक्षी । यो रिक्तपाणिः सन् वयस उद्यम्य पक्षिणमुद्दिश्य तस्य प्रोत्सारणाय पाणिमुद्यच्छति स तत्कृत्वाऽप उपस्पृशेत् तेनैव पाणिना । रिक्तपाणिरिति वचनात्काष्ठलोष्टादिसहितस्य पाणेरुद्यमने न दोषः । केचिदुपस्पर्शनमाचमनमाहुः ॥६६॥

शक्तिविषये न मुहूर्तमप्यप्रयतः स्यात् ॥ ६७ ॥

शक्तौ सत्या मुहूर्तमप्यप्रयतो न स्यात् । आचमनयोग्यं जलं दृष्ट्वैव मूत्रपुरीषादिकं कुर्यात् । यदि तावन्त कालं वेगं धारयितुं शक्नुयात् ॥ ६७ ॥

नग्नो वा ॥ ६८ ॥

न मुहूर्तमपि स्यादिति संबध्यते । शक्तिविषय इति च । व्रणादिना कौपीनाच्छादनाशक्तौ न दोषः ॥ ६८ ॥

नाप्सु सतः प्रयमणं विद्यते ॥ ६९ ॥

येन प्रयतो भवति तत्प्रयमणम् । करणे ल्युट् । तदप्सु सतो वर्तमानस्य न भवति । जलमध्य आसीनोऽपि नाऽऽचामेदिति ॥ ६९ ॥

उत्तीर्य त्वाचामेत् ॥ ७० ॥

तीर उत्तीर्याऽऽचामेत् । न जलमध्य इत्यर्थो न विधेयः । पूर्वेण गतत्वात् । तस्मादयमर्थः—यदा नदीमुत्तरति नावा प्रकारान्तरेण वा तदा तामुत्तीर्य तीरान्तरं गतः प्रयतोऽप्याचामेत् । नद्यादेरुत्तरणमप्याचमनस्य निमित्तमिति । तुशब्दोऽपि शब्दार्थः ॥ ७० ॥

नाप्रोक्षितमिन्धनमग्नावादध्यात् ॥ ७१ ॥

श्रौते स्मार्ते लौकिकेऽ[वा]ग्नावप्रोक्षितमिन्धनं नाऽऽदध्यात् । केचिल्लौकिके नेच्छन्ति ॥ ७१ ॥

मूढस्वस्तरे चासंस्पृशन्ध्यानप्रयतान्प्रयतो मन्येत ॥ ७२ ॥

पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्टयुपस्पर्शने सचैल इति गौतमः । तस्मिन्विषये वेदमुच्यते । शयनतयाऽऽसनतया वाऽऽस्तीर्णपलालादिः स्वस्तरः । पृषोदरादिदर्शनाद्रूपसिद्धिः । यत्रातिश्लक्ष्णतया पलालादेर्मूलाग्रविभागो न ज्ञायते स मूढः । मूढश्चासौ स्वस्तरश्च मूढस्वस्तरः । तस्मिन्पतितादिषु अप्रयतेषु यदि कश्चित्प्रयत उपविशेन्न च तान्संस्पृशेत् स प्रयतो मन्येत । यथा प्रयतमात्मानं मन्यते प्रयतोऽस्मीति तथैव मन्येत । नैवंविधे विषये तत्स्पृष्टिन्यायः प्रवर्तत इति ॥ ७२ ॥

तथा तृणकाष्ठेषु निखातेषु ॥ ७३ ॥

तृणकाष्ठेष्वपि भूमौ निखातेषु तथा । तत्र तत्स्पृष्टिन्यायो न भवतीति ॥ ७३ ॥

**प्रोक्ष्य वास उपयोजयेत् ॥ ७४ ॥**

शुद्धमपि वासः प्रोक्ष्यैवोपयोजयेद्वसीत । अपर आह—अपवित्रस्यापि वाससः प्रोक्षणमेव शुद्धिहेतुरिति ॥ ७४ ॥

**शुनोपहतः सचैलोऽवगाहेत ॥ ७५ ॥**

शुनोपहतः स्पृष्टो यद्यपि च शुना दष्टं तथाऽपि सचैलोऽवगाहेत । भूमिगतास्वप्सु स्नायान्नोद्धृताभिः । स्मृत्यन्तरे प्रायश्चित्तमुक्तम् । तत्र वसिष्ठः—

ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य च शुध्यति ॥

अङ्गिराः—ब्रह्मचारी शुना दष्टस्त्रिरात्रेणैव शुध्यति ।
गृहस्थस्तु द्विरात्रेण एकाहेनाग्निहोत्रवान् ॥
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
तदेव द्विगुणं वक्त्रे मूर्ध्नि चेत्स्याच्चतुर्गुणम् ॥
क्षत्रविट्शूद्रयोनिस्तु स्नानेनैव शुचिर्भवेत् ।
द्विगुणं तु वनस्थस्य तथा प्रव्रजितस्य च ॥
ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
यदा न दृश्यते सोमः प्रायश्चित्तं तदा कथम् ॥
या दिशं तु गतः सोमस्ता दिशं त्ववलोकयेत् ।
सोममार्गेण सा पूता पञ्चगव्येन शुध्यति ॥
प्रक्षाल्य चापि तं देशमग्निना संस्पृशेत्पुनः । इति ॥ ७५ ॥

**प्रक्षाल्य वा तद्देशमग्निना संस्पृश्य पुनः प्रक्षाल्य**
**चाऽऽचम्य प्रयतो भवति ॥ ७६ ॥**

शुना स्पृष्टं तद्देशं प्रक्षाल्याग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ च प्रक्षाल्य पश्चादाचम्य प्रयतो भवति । व्यवस्थितविकल्पोऽयम् ।

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते ।
तत्र स्नानविधिः प्रोक्तो ह्यधः प्रक्षालनं स्मृतम् ॥

इति मानवे दर्शनात् ॥ ७६ ॥

**अग्निं नाप्रयत आसीदेत् ॥ ७७ ॥**

अप्रयतः सन्नग्निं नाऽऽसीदेदग्नेरासन्नो न भवेत् । यावति देशे ऊष्मोपलम्भः । अत्राप्यशक्तौ न दोषः ॥ ७७ ॥

इषुमात्रादित्येके ॥ ७८ ॥

इषुमात्रादर्वाङ् नाऽऽभीदेदूष्मोपलम्भो भवतु मा [वा] भूदित्येक आचार्या मन्यन्ते ॥ ७८ ॥

न चैनमुपधमेत् ॥ ७९ ॥

अप्रयत इत्येव । एनमग्निमप्रयतो नोपधमेत् । प्रयतस्य न दोष इत्येके । अपर आह— मुखेन नोपधमेत् । नाग्निं मुखेनोपधमेदिति मानवदर्शनात् । स्मृत्यन्तरे—मुखे- नोपधमेदग्निं मुखादग्निरजायत । उभयोर्विकल्पः । अपर आह—वाजसनेयके श्रौत- प्रकरणे—मुखादग्निरजायत । तस्मान्मुखेनोपसमिध्यत इति दर्शनाच्छ्रौतेषु मुखेनोपसमि- न्धनम् । अन्यत्र स्मार्तप्रतिषेध इति । अन्ये तु वैणवेनाऽऽयसेन वा सुषिरेणोपसमि- न्धनमिच्छन्ति । एवमग्नेर्मुखव्यापारस्यान्वयाच्छ्रुतिरप्यनुगृहीता भवति । आस्याद्बि- न्दूना पतनशङ्काभयात्प्रतिषेधस्मृतिरपीति ॥ ७९ ॥

खट्वायां च नोपदध्यात् ॥ ८० ॥

खट्वायामग्निं नोपदध्यात् । अत्राप्यशक्तौ न दोष. ॥ ८० ॥

प्रभूतैधोदके ग्रामे यत्राऽऽत्माधीनं प्रयमणं तत्र वासो धर्म्यो ब्राह्मणस्य ॥ ८१ ॥

प्रभूत एध उदक च यस्मिंस्तस्मिन्ग्रामे ब्राह्मणस्य वासो धर्म्यः । तत्रापि न सर्वत्र कथ तर्हि । यत्राऽऽत्माधीन प्रयमणं प्रायत्य मूत्रपुरीषप्रक्षालनानीति । यत्राऽऽत्माधी- नानि । यत्र कूपेष्वेवोदक तत्र बहुकूपेऽपि न वस्तव्यम् । ब्राह्मणग्रहणाद्वर्णान्तरस्या- नियमः । ग्रामग्रहणादेवभूतेषु घोषादिष्वपि न वस्तव्यम् ॥ ८१ ॥

मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपानन्नलेपानु च्छिष्टलेपान्रेतसश्च ये लेपास्तान्प्रक्षाल्य पादौ चाऽऽचम्य प्रयतो भवति ॥ ८२ ॥ (ख० १५)।

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे ( धर्मसूत्रापरपर्याये ) षड्विंशप्रश्ने चतुर्थः पटलः ॥४॥

मूत्रं पुरीषं [वा] कृत्वोत्सृज्य तयोर्मूत्रपुरीषयोर्लेपा यस्मिन्प्रदेशे स्थिता. प्रदेशान्तरे वा पतितास्तान्सर्वान् । अन्नलेपाश्चोच्छिष्टलेपानपि । उच्छिष्टलेपाश्चान्नलेपानपि । तथा रेतसश्च ये लेपाः स्वापादौ मैथुनेन च तान्सर्वानद्भिर्मृदा च प्रक्षाल्य पादौ च लेपव- र्जितावपि प्रक्षाल्य पश्चादाचम्य प्रयतो भवति । अत्र मृत्प्रमाणस्य संख्यायाश्चानुक्तत्वा- द्यावता गन्धलेपक्षयो भवति तावदेव विवक्षितम् । तथा च याज्ञवल्क्यः—'गन्धलेप- क्षयकरं शौचं कुर्यादतन्द्रितः' इति । देवलस्तु—

यावत्संशुद्धिं मन्येत तावच्छौचं समाचरेत् ।
प्रमाणं शौचे सङ्ख्याया न शिष्टैरुपदिश्यते ॥ इति ।

पैठीनसिः—मूत्रोत्सर्गे कृते शौच न स्यादन्तर्जलाशये ।
अन्यत्रोत्सृज्य कुर्यात्तु सर्वदैव समाहितः ॥ इति ।

॥ ८९ ॥ ( ख० १९ ) ।

इति श्रीमन्महादेवविरचितायां हिरण्यकेशिधर्मप्रश्नव्याख्यायामुज्ज्वलायां षड्विंशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

अथ पञ्चम पटल ।

तिष्ठन्नाऽऽचामेत्प्रह्वो वा ॥ १ ॥

तिष्ठन्प्रह्वो वा नाऽऽचामेत् । नाय प्रतिषेधो वक्तुं शक्यते । आसीनस्त्रिराचामेदिति वक्ष्यति । ततो यथा शयानस्याऽऽचमन न भवति तथा तिष्ठतः प्रह्वस्य च न भवति । एव तर्हि नाय शौचार्थस्याऽऽचमनस्य प्रतिषेधः । तथा गौतमः—नाञ्जलिना पिबेन्न तिष्ठन्निति । अपर आह—अस्मादेव वचनात्क्वचित्तिष्ठतः प्रह्वस्याऽऽचमनमभ्यनुज्ञातं भवति । तेन भूमिगतास्वप्सु तीरस्यापोढत्व ऊरुदघ्ने नाभिदघ्ने वा स्थितस्याऽऽचमनं भवति । गौतमे च तिष्ठन्नुद्धृतोदकेन नाऽऽचामेदिति सूत्रच्छेदादुद्धृतोदकेनैव तिष्ठतः प्रतिषेध इति ॥ १ ॥

अथाऽऽचमनविधि.—

आसीनस्त्रिराचामेद्धृदयंगमाभिरद्भिः ॥ २ ॥

अत्राऽऽनुकूल्यं स्मृत्यन्तरवशादुपाश्रीयते। आसीनः शुचौ देशे नाऽऽसने भोजने त्वा॰सनेऽपि चाऽऽत्मनो दक्षिणं बाहुं जान्वन्तरा कृत्वा प्राङ्मुख उदङ्मुखः प्रागुदङ्मुखो वा हृदयंगमा अप· करतलस्थासु यावतीषु माषो निमज्जति तावतीः फेनबुद्बुदरहिता वीक्षिता विमुक्तकनिष्ठाङ्गुष्ठेन सहतोर्ध्वीकृतमध्याङ्गुलित्रयेण दक्षिणपाणिना मुखमसंस्पृ॰शंस्त्रिराचामेत्पिबेद्ब्राह्मणः । क्षत्रिय. कण्ठगाः । वैश्यस्तालुगाः । शूद्रो जिह्वास्पृष्टाः सकृत् ॥ २ ॥

त्रिरोष्ठौ परिमृजेत् ॥ ३ ॥

त्रिरोष्ठावलोमप्रदेशावङ्गुष्ठेन परिमृजेत् परिमृज्यात् ॥ ३ ॥

**द्विरित्येके ॥ ४ ॥**

तुल्यविकल्पः ॥ ४ ॥

**सकृदुपस्पृशेत् ॥ ५ ॥**

मध्यमाभिस्त्रिभिरङ्गुलीभिरोष्ठौ ॥ ५ ॥

**द्विरित्येके ॥ ६ ॥**

तुल्यविकल्पः ॥ ६ ॥

**दक्षिणेन पाणिना सव्यमभ्युक्ष्य पादौ शिरश्चेन्द्रि-
याण्युपस्पृशेच्चक्षुषी नासिके श्रोत्रे च ॥ ७ ॥**

दक्षिणेन पाणिना सव्यं प्रोक्ष्य तथा पादौ शिरश्चेन्द्रियाण्युपस्पृशेत् । उदकेन सर्वेषामिन्द्रियाणां प्रसङ्गे परिसचष्टे—चक्षुषी नासिके श्रोत्रे चेति । इन्द्रियाणीति वचनं स्वरूपकथनमात्रम् । तत्राङ्गुष्ठानामिकाभ्यां चक्षुषी । केचिद्युगपत्केचित्पृथक्पृथक् । अङ्गुष्ठप्रदेशिनीभ्यां नासिके । अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे । अङ्गुष्ठेनैव वा सर्वाणि खानि संस्पृशेत् । अत्र पृथग्भावस्य निश्चितत्वात्पूर्वत्रापि पृथगिति युक्तम् । अत्राऽऽपस्तम्बेनोक्तम्—अथाप उपस्पृशेदिन्द्रियस्पर्शनानन्तरं हस्तौ प्रक्षालयेदिति ॥ ७ ॥

**भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेद् द्विः
परिमृजीत सकृदुपस्पृशेत् ॥ ८ ॥**

भोजनं करिष्यन्प्रयतोऽपि द्विराचमनं कुर्यात् । अत्र विशेषः । द्विः परिमृजीत न विकल्पेन त्रिः । सकृदुपस्पृशेन्न विकल्पेन द्विः । प्रयतोऽपीति वचनादप्रयते सर्वत्र द्विराचमनमाचार्यस्याभिमतम् । अत्र द्विराचामेदिति साङ्गं द्विरावर्तयेदित्येके । द्विः परिमृजीत सकृदुपस्पृशेदित्येतत्प्रायपाठितस्य द्विराचामेदेतस्यापि द्विः प्राशनमात्रपरत्वात्साङ्गमाचमनमात्रं विधीयते । तस्याभ्यासाश्रवणात्सकृदित्येके । शास्त्रान्तरप्राप्ताभ्यासोऽपीत्यन्ये ॥ ८ ॥

**श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याऽऽचम्य प्रयतो भवति ॥ ९ ॥**

दन्तमूलात्प्रभृत्योष्ठौ । तत्रालोमकप्रदेशः श्यावः । तस्यान्तः सलोमकस्तत्पर्यन्तावोष्ठावुपस्पृश्याऽऽचामेत् । ओष्ठयोरलोमकप्रदेशमङ्गुल्या काष्ठादिना वोपस्पृश्याचामेदिति । अस्मादेव प्रतिषेधाज्ज्ञायते यत्किंचिदपि द्रव्यमन्तरास्ये सदुच्छिष्टतया निमित्तमिति ॥ ९ ॥

**न श्मश्रुभिरुच्छिष्टा भवन्त्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति ॥ १० ॥**

श्मश्रूणि यदाऽऽस्यस्यान्तर्भवन्ति तदा तैरन्तरास्ये सद्भिरुच्छिष्टो न भवति यावन्न हस्तेनोपस्पृशति । उपस्पर्शने उच्छिष्टो भवति । ततश्चाऽऽचामेदिति । अत्र स्मृत्यन्तरम्—

भुक्त्वा क्षुत्वा च सुप्त्वा च ष्ठेवित्वोक्त्वाऽनृत वचः ।
आचान्तः पुनराचामेद्वासोऽपि परिधाय च ॥ इति ॥ १० ॥

**य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम् ॥ ११ ॥**

भाषमाणस्याऽऽस्यात्पतन्तो लालाबिन्दव उपलभ्यन्ते चक्षुषा स्पर्शनेन वा य उपलब्धियोग्यास्तेष्वाचमन विहितम् । वेदोच्चारणे गौतमः—मन्त्रान् ब्राह्मणमुच्चारयतो ये बिन्दवः शरीर उपलभ्यन्ते तेष्वाचमन विहितमिति ॥ ११ ॥

**ये भूमौ न तेष्वाचामेदित्येके ॥ १२ ॥**

ये बिन्दवो भूमौ पतन्ति न शरीरे तेषु नाऽऽचामेदित्येके । स्वमते तु तेष्वप्याचामेदिति ॥ १२ ॥

**स्वप्ने क्षवथौ शृं(सिं)घाणिकाश्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चाऽऽलम्भे महापथं च गत्वाऽमेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत् ॥ १३ ॥**

स्वप्नः स्वापः । क्षवथुः क्षुतम् । शृङ्घाणिका नासिकामलः । अश्रु नेत्रजलम् । तेषामालम्भे स्पर्शे, लोहितस्य रुधिरस्य । केशाना शिरोगताना भूमिगताना च । अग्न्यादीना चतुर्णामालम्भे, महापथ च गत्वाऽमेध्य च गोव्यतिरिक्ताना मूत्रपुरीषाणा ताम्बूलनिषेकादि चोपस्पृश्याप्रयत च मनुष्यमुपस्पृश्य । नीवी प्रसिद्धा । तद्योगादधोवासो लक्ष्यते तच्च परिधायाप उपस्पृशेत् । केषुचित्स्नान केषुचिदाचमनं केषुचित्स्पर्शनमात्रं यावता प्रयतो मन्यते ॥ १३ ॥

**आर्द्रं वा शकृदोषधीर्भूमिं वनस्पतिं चाऽऽचामेद्वा ॥ १४ ॥**

आर्द्रं वा शकृदुपस्पृशेत् । ओषधीर्वा आर्द्रा भूमिं वाऽऽर्द्रां वनस्पतिं वाऽऽर्द्रं चाऽऽचामेत् । पूर्वोक्तेषु स्वल्पेषु वैकल्पिकमिदम् । एवमाचमनं सह निमित्त तु(सनिमित्तमु)क्तम् ॥ १४ ॥

अथाभक्ष्याधिकारः—

हिंसार्थेनासिना मांसं छिन्नं तदभोज्यम् ॥ १५ ॥

असिग्रहणं क्षुरादेरप्युपलक्षणम् । यन्मांसं पाककालेऽसिना छिन्नं तदभोज्यम् ॥ १५ ॥

दद्भिरपूपस्य नापछिन्द्यात् ॥ १६ ॥

अपूपग्रहणं मूलफलादेरप्युपलक्षणम् । द्वितीयार्थे षष्ठी । दन्तैरपूपं नापच्छिन्द्यात् । किंतु हस्तादिभिरवच्छिद्य भक्षयेत् ॥ १६ ॥

यस्य कुले म्रियेत न तत्रानिर्दशे भोक्तव्यम् ॥ १७ ॥

यस्य कुले कश्चिन्म्रियेत सपिण्डतायां सत्यां तत्रानिर्गते दशाहे न भोक्तव्यम् । अनिर्दश इत्याशौचकालोपलक्षणम् । तेन क्षत्रियादिष्वधिकं पक्षिण्यादिषु न्यूनम् ॥ १७ ॥

तथाऽनुत्थितायां सूतिकायाम् ॥ १८ ॥

सूतिकायामनुत्थितायां सत्याम् । उत्थानं नाम सूतिकागारे निवेशितानामुदकुम्भादीनामपनयनम् । तच्च द्वादशेऽहनि भवति । द्वादश्यां मातापुत्रौ स्नात इति गृह्य उक्तत्वात् । अत्राप्याशौचकालोपलक्षणम् । तस्माद्यावदाशौचमभोजनम् । अत्राङ्गिराः-

ब्रह्मक्षत्रविशां भुक्तौ न दोषस्त्वग्निहोत्रिणाम् ।
सूतके शाव आशौचे त्वस्थिसंचयनात्परम् ॥ इति ॥ १८ ॥

अन्तःशवे च ॥ १९ ॥

यावद्ग्रामान्न निर्ह्रियते शवस्तावन्न भोज्यम् । आचारस्तु बनुशतादर्वाक्तत्रापि प्रदीपमारोप्योदकुम्भमुपनिधाय भुञ्जते यदि समानवंशगृहं न भवति ॥ १९ ॥

अप्रयतोपहतमन्नमप्रयतं न त्वभोज्यम् ॥ २० ॥

अप्रयतेनाशुचिनोपहतं स्पृष्टमन्नमप्रयतं भवति किंत्वशुद्धमप्यभोज्यं न भवति । कः पुनरप्रयतस्याभोज्यस्य विशेषः । उच्यते । अप्रयतमन्नमग्नावधिश्रित्याद्भिः प्रोक्षितं भस्मना मृदा वा संस्पृष्टं वाचा प्रशस्तमन्नं भवति भोज्यम् । अभोज्यं तु न शूद्रादिना कदाचिदपीति ॥ २० ॥

अप्रयतेन शूद्रेणोपहृतमभोज्यम् ॥ २१ ॥

अप्रयतेन शूद्रेणोपनीतमभोज्यं स्पृष्टमस्पृष्टं च । स्पृष्टमेवेत्यन्ये ॥ २१ ॥

यस्मिंश्चान्ने केशः स्यात् ॥ २२ ॥

तदभोज्यम् । एतच्च पाकदशायामेव । पतितेन केशेन सह यत्पक्वमन्नं तद्विषयम् । भोजनकाले तु केशपाते घृतप्रक्षेपादिना संस्कृतं भोज्यम् ॥ २२ ॥

अन्यद्वाऽमेध्यम् ॥ २३ ॥

अन्यद्वा नखादि यस्मिन्नन्ने स्यात्तदप्यभोज्यम् । इदमपि पूर्ववत् । अत्र बौधायनः— कीटनखकेशाखुपुरीषाणि दृष्टानि तावन्मात्रमन्नमुद्धृत्य शेषं भोज्यमिति । वसिष्ठस्तु-काम तु केशकीटानुद्धृत्याद्भिः प्रोक्ष्य भस्मावकीर्य वाचा प्रशस्तमुपयुञ्जीतेति ॥ २३ ॥

अमेध्यैरवमृष्टम् ॥ २४ ॥

अमेध्यैः कलञ्जपलाण्ड्वादिभिरवमृष्टं संस्पृष्टमभोज्यम् ॥ २४ ॥

कीटो वाऽमेध्यसेवी ॥ २५ ॥ ( ख० १६ ) ।

यस्मिंश्चान्ने स्यादिति व्यवहितकल्पनया संबध्यते । अमेध्यसेवी क्रिमिः कीटः पूत्यण्डाख्यः ॥ २५ ॥ ( ख० १६ ) ।

मूषकलाऽङ्गं वा ॥ २६ ॥

पूर्ववत्संबन्धः । मूषकला मूषकपुरीषम् । अङ्गं वा । उपसमस्तमपि मूषकग्रहणं संबध्यते । यस्मिन्नन्ने मूषकस्याङ्गं पादादि पुरीषं वा भवति तदप्यभोज्यम् ॥ २६ ॥

पदा वोपहतम् ॥ २७ ॥

प्रयतेनापि यत्पदा स्पृष्टं तदप्यभोज्यम् ॥ २७ ॥

सिचा वा ॥ २८ ॥

सिग्वस्त्रदशा । परिहितस्य वाससः सिचा यत्स्पृष्टं तदप्यभोज्यम् ॥ २८ ॥

अपपात्रेण वा दृष्टम् ॥ २९ ॥

अपपात्रेण वा यद्दृष्टं तदप्यभोज्यम् । पतितचाण्डालसूतिकोदक्या अपपात्राः । अपगताः पात्रेभ्यः । नहि ते पात्रे भोक्तुं लभन्ते ॥ २९ ॥

शुना वा ॥ ३० ॥

शुना वा यद्दृष्टं तदप्यभोज्यम् ॥ ३० ॥

सिचा वोपहृतम् ॥ ३१ ॥

अपरिहितस्य शुद्धस्यापि वाससः सिचा यदुपहृतमानीतं तदप्यभोज्यम् ॥ ३१ ॥

दास्या वा नक्तमाहृतम् ॥ ३२ ॥

दास्या नक्तमाहृतमभोज्यम् । स्त्रीलिङ्गनिर्देशाद्दासेनाऽऽहृते न दोषः । अन्ये लिङ्गमविवक्षितं मन्यन्ते । नक्तमिति वचनाद्दिवा न दोषः ॥ ३२ ॥

भुञ्जानं वा यत्र शूद्र उपस्पृशेत् ॥ ३३ ॥

भोजनदशायां यदा शूद्र उपस्पृशेत्तदाऽपि न भुञ्जीत । भुञ्जानग्रहणादन्यदा शूद्रोपस्पर्शने नाप्रायत्यमिति केचित् । अन्ये तु सदा भवत्यप्रायत्यं भोजनदशायामा· धिक्यप्रतिपादनाय प्रतिषेध इति ॥ ३३ ॥

अनर्हद्भिर्वा समानपङ्क्तौ ॥ ३४ ॥

सर्वत्र वाशब्दः समुच्चये । अभिजनविद्यावृत्तरहिता अनर्हाः । तैः सह समानप· ङ्क्तौ न भुञ्जीत ॥ ३४ ॥

भुञ्जानेषु वा यत्रान्योऽनूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा ॥ ३५ ॥

समानपङ्क्ताविति वर्तते । समानपङ्क्तौ बहुषु भुञ्जानेषु यद्येकोऽन्योऽनूत्थाय भोजनाद्बहिरम्योच्छिष्टं शिष्येभ्यः प्रयच्छेदाचामेद्वा तस्यां पङ्क्ताावितरेषां न भोक्तव्यम् । अतो बहुषु भुञ्जानेष्वेको मध्ये न विरमेत् । भोजनकण्टक इति तमाहुः ॥ ३५ ॥

कुत्सयित्वा वा यत्रान्नं दद्युः ॥ ३६ ॥

मूर्ख वैधवेय विष भुङ्क्ष्वेत्येवं कुत्सयित्वा यत्रान्न दद्युस्तदभोज्यम् ॥ ३६ ॥

मनुष्यैरवघ्रातमन्यैर्वा मेध्यैः ॥ ३७ ॥

मनुष्यैरन्यैर्वा मार्जारादिभिरवघ्रातमन्नमभोज्यम् । अवेत्युपसर्गप्रयोगाद्दूरस्थैर्गन्ध· स्याऽऽघ्राणे न दोषः ॥ ३७ ॥

न नावि भुञ्जीत ॥ ३८ ॥

नाव्यासीनो न भुञ्जीत शुद्धेऽपि पात्रे ॥ ३८ ॥

तथा प्रसादे ॥ ३९ ॥

प्रसादो दारुमयो मञ्चः । तत्रापि न भुञ्जीत ॥ ३९ ॥

कृतभूमौ तु भुञ्जीत ॥ ४० ॥

भूमावपि भुञ्जानः कृतायां गोमयादिना संस्कृतायां भुञ्जीत ॥ ४० ॥

अनाप्रीते मृन्मये भोक्तव्यम् ॥ ४१ ॥

यदि मृन्मये भुञ्जीत तदाऽन्येनानाप्रीते भुञ्जीत । आप्रीतं क्वचित्कार्ये पाकादा· (वु)पयुक्तम् ॥ ४१ ॥

आप्रीतं चेदभिदग्धे ॥ ४२ ॥

आप्रीतमेव लभ्यते तदाऽग्निनाऽभितो दग्ध्वा तत्र भोक्तव्यम् ॥ ४२ ॥

परिमृष्टं लौहं प्रयतम् ॥ ४३ ॥

लौहं लोहविकारभूतं कांस्यादि भोजनपात्रं भस्मादिभिः परिमृष्टं सत्प्रयतं भवति । तत्र भस्मना कांस्यमाम्लेन ताम्रं राजतं शकृता सौवर्णमद्भिरेवेत्यादिस्मृत्यन्तरवशाद्द्रष्टव्यम् ॥ ४३ ॥

**यन्निर्लिखितं दारुमयम् ॥ ४४ ॥**

यद्दारुमयं भाजनं तन्निर्लिखितं तष्टं सत्पूयतं भवति ॥ ४४ ॥

**यथागमं यज्ञे ॥ ४५ ॥**

यज्ञपात्रं तु यथागमं शोधितं भवति । तद्यथा—अग्निहोत्रहवणी दर्भैरद्भिः प्रक्षालिता । सोमपात्राणि मार्जालीये प्रक्षालितानि । आज्यपात्राण्युष्णेन वारिणा ॥ ४५ ॥

**नाऽऽपणीयमन्नमश्नीयात् ॥ ४६ ॥**

आपणः पण्यवीथी । तत्र जातं लब्धं वाऽऽपणीयम् । तत्र कृतं नाश्नीयात् । व्रीह्यादिषु न दोषः ॥ ४६ ॥

**तथा रसानाममांसमधुलवणानीति परिहाप्य ॥ ४७ ॥**

तथा रसान्रसद्रव्याणि । तानप्यापणीयान्नाश्नीयात् । आममांसादीनीति वर्जयित्वा ॥ ४७ ॥

**तैलसर्पिषी तूदकेऽवधायोपयोजयेत् ॥ ४८ ॥**

तैलसर्पिषी तु आपणीये अपि उपयोजयेत् । उदकेऽवधाय निषिच्य । पाकेन तैलसर्पिषी शोधयित्वा कार्यविरोधो यथा न भवति तथोदकेन संसृज्येत्येके व्याचक्षते ॥ ४८ ॥

**कृतान्नं पर्युषितमखाद्यापेयानाद्यम् ॥ ४९ ॥**

कृतान्नं पर्युषितं पूर्वेद्युः पक्वं सदखाद्यमपेयमनाद्यं च । यथायोग्यं खरविशदद्रवमृदुविशदसिद्धं च ॥ ४९ ॥

**शुक्तं च ॥ ५० ॥**

शुक्तं काले पाकेनाऽऽम्लीभूतं तदपि पर्युषितमखाद्यापेयानाद्यम् ॥ ५० ॥

**फाणितपृथुकतण्डुलभरुजकरम्भसक्तुशाकमांसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जम् ॥ ५१ ॥**

अनन्तरोक्तं विधिद्वयं फाणितादि वर्जयित्वा द्रष्टव्यम् । फाणितं पानविशेषः । इक्षुरस इति केचित् । भ्रष्टाना व्रीहीणां तण्डुला । पृथुभूताः पृथुकाः । भरुजा भ्रष्टा यवाः । करम्भो दधिसक्तूनामाहारः करम्ब इति प्रसिद्धः । वेदेऽप्युभयं भवति । यत्करम्भैर्जुहोति । धानाः करम्ब इति । क्षीरविकारो दध्यादि । प्रसिद्धमन्यत् ॥ ५१ ॥

अथ शुक्तं चेत्यस्य विधेः शेषः —

**शुक्तं चापरयोगम् ॥ ५२ ॥**

परेण द्रव्यान्तरेण योगो यस्य तत्परयोगम् । तदेव शुक्तं वर्जयति । पूर्वं सामान्येनाभिधाय सलावृक्यामेकस्रुक इति स्वप्नपर्यन्तमिति पश्चाद्विशेष उक्तः ॥ ५२ ॥

सर्वं मद्यमपेयम् ॥ ५३ ॥

सर्वं मद्यं मदकरमपेयम् । अत्र स्मृत्यन्तरवशाद्व्यवस्था । अत्र मनुः—

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैव ता न पातव्यास्तथा सर्वा द्विजोत्तमैः ॥ इति ।

सुराव्यतिरिक्तं तु मद्यं ब्राह्मणस्य नित्यमपेयम् । तथा च गौतमः—मद्यं नित्यं ब्राह्मणस्येति । क्षत्रियवैश्ययोस्तु ब्रह्मचारिणोरिति ॥ ९३ ॥

तथैलकं पयः ॥ ५४ ॥

अविरेलका तस्याः क्षीरमपेयम् ॥ ९४ ॥

उष्ट्रीक्षीरमृगीक्षीरसंधिनीक्षीरयमसूक्षीराणीति ॥ ५५ ॥

उष्ट्रमृगौ प्रसिद्धौ । या गर्भिणी दुग्धे सा संधिनीति शास्त्रान्तरे प्रसिद्धा । एककालदोहेत्यन्ये । एकस्मिन्गर्भे याऽनेकगर्भं सूते सा यमसूः । उष्ट्र्यादीनां क्षीराण्यपेयानि । इतिकरणादेवंप्रकाराणामेकशफानां क्षीराण्यपेयानि । तथा च मनुः—

आरण्यानां [च] सर्वेषां मृगाणां महिषीं विना ।
स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥
अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा ।
आविकं संधिनीक्षीरं विवत्सायाश्च गोः पयः ॥ इति ॥ ९५ ॥

धेनोश्चानिर्दशायाः ॥ ५६ ॥

धेनुर्नवप्रसूता गौः । चकारादजामहिष्यौ च । अजा गावो महिष्यश्चेति मानवे दर्शनात् ॥ ९६ ॥

औषधीनां च तथा कीलालम् ॥ ५७ ॥

औषधयः सुरार्थास्तेषां विकारभूतमन्नं कीलालं नाद्यात् ॥ ९७ ॥

कलञ्जपलाण्डुपरारिकाः ॥ ५८ ॥

कलञ्जं रक्तलसुनम् । पलाण्डुः स्थूलकन्दो नीलो लसुणानुकारी । परारिका कृष्णडण्डुभाख्य प्रसिद्धम् । एते चाभक्ष्याः ॥ ९८ ॥

प्रतिपदपाठो न शक्य इति समासेनाऽऽह—

यच्चान्यत्परिचक्षते ॥ ५९ ॥

यच्चान्यदेवंयुक्तं शिष्टाः परिचक्षते वर्जयन्ति तदप्यभक्ष्यम् । तत्र मनुः—

लशुनं गृञ्जनं चैव पलाण्डुकवकानि च ।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ॥ इति ॥ ९९ ॥

क्याकभोज्यमिति हि ब्राह्मणम् ॥ ६० ॥

क्याकु च्छत्राकम् । तदप्यभोज्यमभक्ष्यम् । ब्राह्मणग्रहणमुक्तार्थम् ॥ ६० ॥

एकखुरोष्ट्रगवयग्रामसूकरशरभगवाम् ॥ ६१ ॥

मांसमित्यर्थाद्गम्यते । एकखुरा अश्वादयः । गवयो गोसदृशः पशुः । शरभोऽष्टापद आरण्यो मृगः । अन्ये प्रसिद्धाः । एतेषां मांसमभक्ष्यम् ॥ ६१ ॥

धेन्वनडुहोश्च कारणाद्भक्ष्यम् ॥ ६२ ॥

धेन्वनडुहोर्मांसं भक्ष्यं नावैधं किंतु कारणात् । कारणमष्टकादिविधिः । गोप्रतिषेधस्य प्रतिप्रसवः — मेध्यमानडुहमिति वाजसनेयकम् । आनडुहं मांसं न केवलं भक्ष्यं किं तर्हि मेध्यमपीति वाजसनेयिनः समामनन्ति ॥ ६२ ॥

कुक्कुटो विकिराणाम् ॥ ६३ ॥

पादाभ्यां विकीर्य विकीर्य कीटधान्यादि ये भक्षयन्ति ते विकिरा मयूरादयः । तेषां मध्ये कुक्कुटो न भक्ष्यः । स्मृत्यन्तरवशाद्ग्राम्यो नाऽऽरण्यः ॥ ६३ ॥

प्लवः प्रतुदाम् ॥ ६४ ॥

तुण्डेन प्रतुद्य प्रतुद्य भक्षयन्ति ते दार्वाघाटादयः प्रतुदस्तेषां मध्ये प्लव एवाभक्ष्यः । प्लवः शकटविलाख्यो बकविशेषः ॥ ६४ ॥

क्रव्यादाः ॥ ६५ ॥

क्रव्यं मांसं तदेव केवलं येऽदन्ति ते क्रव्यादा गृध्रादयः । तेऽप्यभक्ष्याः ॥ ६५ ॥

हंसभासचक्रवाकसुपर्णाश्च ॥ ६६ ॥

हंसः प्रसिद्धः । भासः श्येनाकृतिः पीततुण्डः । चक्रवाको मिथुनचरः । सुपर्णः श्येनः । एते चाभक्ष्याः ॥ ६६ ॥

क्रुञ्चक्रौञ्चवार्ध्राणसलक्ष्मणवर्जम् ॥ ६७ ॥

क्रुञ्चा वृन्दचराः । क्रौञ्चा मिथुनचराः । ते चाभक्ष्याः । सूत्रे क्रौञ्चेति विभक्तिलोपश्छान्दसः । किमविशेषेण क्रुञ्चक्रौञ्चा अभक्ष्याः । नेत्याह—वार्ध्राणसलक्ष्मणवर्जम् । श्वेतो लोहितो वा मूर्धा येषां ते लक्ष्मणाः । त एव विशेष्यन्ते वार्ध्राणसा इति । वार्ध्रं चर्म तदाकारा नासिका येषां ते । एवंभूताँल्लक्ष्मणान्वर्जयित्वा क्रुञ्चक्रौञ्चा न भक्ष्या इति । अन्ये त्वाहुः । क्रव्यादा इति प्राप्तस्य प्रतिषेधस्य क्रुञ्चादिषु तेषु प्रतिषेध इति । तत्र लक्ष्मणा सारसी । लक्ष्मणवर्जमिति ङ्यापोः सञ्ज्ञाछन्दसोरिति ह्रस्वः । एवं क्रुञ्चाशब्दस्याप्यजादेराबन्तस्य ॥ ६७ ॥

पञ्चनखानां गोधाकच्छपश्वाविट्शल्यकखड्गशशपूतीकखषवर्जम् ॥ ६८ ॥

पञ्चनखा वानरमार्जारादयः । तेषां मध्ये गोधादीन्सप्त वर्जयित्वाऽन्ये भक्ष्याः । गोधा कृकलासाकृतिर्महाकायः । कच्छपः कूर्मः । श्वाविडन्त्राहिविशेषः । यस्य नाराचाकाराणि लोमानि स शल्यकः । यस्य चर्मणा तनुत्राणं क्रियते स श्वाविट् ।

शल्यक इति युक्तः पाठः । एके तु च्छकारं पठन्ति च्छकारात्पूर्वमिकारम् । खड्गो मृगविशेषः पार्वतीयः । यस्य तर्पणार्थे भाजनम् । शशः प्रसिद्धः । पूतीकखषः शशाकृतिर्हिमवति प्रसिद्धः ॥ ६८ ॥

**अभक्ष्यश्चेटो मत्स्यानाम् ॥ ६९ ॥**

मत्स्यानां मध्ये चेटाख्यो मत्स्यो न भक्ष्यः ॥ ६९ ॥

**सर्पशीर्षा मृदुरः क्रव्यादो ये चान्ये विकृता यथा मनुष्यशिरसः ॥ ७० ॥**

जलमनुष्याख्या जलमत्स्यादयश्च तत्र सर्वे न भक्ष्याः । तत्र मनुः—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्ता च खादकश्चाष्ट घातकाः ॥
न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु गरीयसी ॥

अप्रतिषिद्धेष्वपि भक्ष्यनिवृत्तिरेव ज्यायसीत्यर्थः ॥ ॥ ७० ( ख० १७ ) ।

एवं मांसनिमित्तदुष्टं जातिदुष्टं कालदुष्टं चाभोज्यमुक्तम् । तत्र निमित्तदुष्टं यस्य कुले म्रियेतेत्यादि । जातिदुष्टं कलञ्जादि । कालदुष्टं पर्युषितादि । इदानीं परिग्रहाशुचीनि कानिचिदनुज्ञापकानि कानिचित्प्रतिषेधन इति—

**मध्वामं मार्गं मांसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिगृह्याणि ॥ ७१ ॥**

मधु पक्वमपक्वं वा । आमं तण्डुलादि । मृगस्य विकारो मार्गं मांसम् । भूमिः शालेयादि क्षेत्रम् । विश्रामस्थानमित्येके । मूलफलानि मूलकाष्ठादीनि । रक्षाऽभयदानम् । गव्यूतिर्गोमार्गः । निवेशनं गृहम् । युगं वह[ती]ति युग्यो बलीवर्दः । तस्य घासो भक्ष्यं पलालादि । एतानि उग्रतोऽपि प्रतिग्राह्याण्यदुर्भिक्षेऽपि । उग्रः क्रूरकर्मा द्विजातिः । वैश्याद्वा शूद्रायां जातः । उग्रग्रहणं तादृशानामुपलक्षणम् ॥ ७१ ॥

**एतान्यपि नानन्तेवास्याहृतानीति हारीतः ॥ ७२ ॥**

एतान्यपि मध्वादीन्यप्यन्तेवास्याहृतान्येव प्रतिग्राह्याणि न स्वयमिति हारीतो मुनिराह ॥ ७२ ॥

**आमं वा गृह्णीरन् ॥ ७३ ॥**

पूर्वोक्तेषु आमं स्वयं गृह्णीरन् वा द्विजातय इति हारीताचार्यस्यैव पक्षः ॥ ७३ ॥

**कृतान्नस्य विरसस्य ॥ ७४ ॥**

आमस्यालाभे कृतान्नस्यापि विरसस्य लवणादिरसैरसंयुक्तस्य षष्ठीनिर्देशात्स्तोकं स्वयमन्तेवास्याहृतं वा गृह्णीरन् ॥ ७४ ॥

न सुभिक्षाः स्युः ॥ ७५ ॥

अनन्तरोक्तविधानद्वये यद्गृहीत तन्न सुभिक्षाः सुहिता न भवेयुः । यावता प्राणयात्रा भवति तावदेव गृह्णीरन् । यावता सौहित्य न तावदिति ॥ ७९ ॥

स्वयमप्यवृत्तौ सुवर्णं दत्त्वा पशुं वा भुञ्जीत ॥ ७६ ॥

यदा तु दुर्भिक्षतयाऽऽत्मनोऽपि वृत्तिर्नोपलभ्यते प्रागेव पोष्यवर्गस्य तदा स्वयमप्यवृत्तौ यत्रैव लभ्यते तत्रैव भुञ्जीत । तत्रैव गुणविधिः सुवर्णं दत्त्वा सकृदेवोपभोक्तव्यम् । उपरिष्टात्सुवर्णेन स्पृष्ट्वा । एतेन पशु दत्त्वेति व्याख्यातम् । पशुरग्निः । अग्निः पशुरिति मन्त्रलिङ्गात् । गोसूक्तेन चाग्नेरुपस्थानदर्शनात् ॥ ७६ ॥

नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ ७७ ॥

यदा विहिता वृत्तिर्लभ्यते तदा निषिद्धाया विरमेत् । न पुनः सकृत्प्रवृत्तायामवकुण्ठनेनेति न्यायेन तत्रैव रमेत् । अत्र च्छान्दोग्योपनिषत्—मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास । स हेभ्यं कुल्माषान्खादन्त बिभिक्ष इत्यादिर्मन्त्रश्च भवति । अवृत्त्या शुन आन्त्राणि पच इति । अवृत्त्या वृत्त्यभावे । अपर आह—दुर्भिक्षे स्वयमप्यवृत्तौ तन्निवृत्तेर्यत्र कुत्रचिन्नीचेऽपि दातरि भुञ्जाने वसेत् । या च यावती च । सुवर्णमात्रं यंकंचन पशुं वा दत्त्वा न पुनरत्यन्तमल वस्येत् । वृत्तिं प्राप्य विरमेदिति ॥ ७७ ॥

एवमापदि वृत्तिमुक्ता । सुभिक्षेऽनापदि वृत्तिमाह—

त्रयाणा वर्णाना क्षत्रियप्रभृतीनाँ समावृत्तेन न भोक्तव्यम् ॥ ७८ ॥

समावृत्तो द्विजातिः क्षत्रियादीना त्रयाणा वर्णाना गृहे न भुञ्जीत ॥ ७८ ॥

प्रकृत्या ब्राह्मणस्य भोक्तव्यं कारणादभोज्यम् ॥ ७९ ॥

ब्राह्मणस्य त्वन्न प्रकृत्याऽस्य भावेनैव भोज्यम् । कारणादभोज्यम् ॥ ७९ ॥

कारणमाह—

यत्राप्रायश्चित्तं कर्माऽऽसेवते प्रायश्चित्तवति ॥ ८० ॥

यत्र यदाऽग्निहोत्रवैश्वदेवाद्यप्रायश्चित्तरूप नित्यमभ्युदयिक वा कर्माऽऽसेवते तात्पर्येण करोति प्रायश्चित्तवत्यात्मनि न चोदितकर्मप्रायश्चित्त तदा । एतस्मात्कारणादभोज्यमिति ॥ ८० ॥

चरितनिर्वेषस्य भोक्तव्यम् ॥ ८१ ॥

कृतप्रायश्चित्तस्य ॥ ८१ ॥

सर्ववर्णानां स्वधर्मे वर्तमानानां भोक्तव्यं शूद्रवर्जमित्येके ॥ ८२ ॥

शूद्रवर्जितानां स्वधर्मे वर्तमानानां सर्वेषामेव वर्णानामन्नं भोज्यं न ब्राह्मणस्यैवेत्येके मन्यन्ते ॥ ८२ ॥

**तस्यापि धर्मोपनतस्य ॥ ८३ ॥**

तस्यापि शूद्रस्यान्नं भोज्यं यद्यय धर्मार्थमुपनत आनामिनो भवति । धर्मग्रहणादर्थार्थमुपनतस्याभोज्यम् । आपत्कल्पश्चायम् ॥ ८३ ॥

तत्र गुणविधिः—

**सुवर्णं दत्त्वा पशुं वा भुञ्जीत नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ ८४॥**

गतम् ॥ ८४ ॥

**संघान्नमभोज्यम् ॥ ८५ ॥**

संयोगेन यत्संहृतमन्नमभोज्य ते सर्वे यद्यपि दद्यु. ॥ ८५ ॥

**परिक्रुष्टं च ॥ ८६ ॥**

भोक्तुमागच्छेत्येव परिक्रुश्य सर्वत आहूय यद्दीयते तत्परिक्रुष्टम् । तदभोज्यम् ॥ ८६ ॥

**सर्वेषां च शिल्पजीविनाम् ॥ ८७ ॥**

चित्रकर्मच्छत्रनिर्माणादिकाशिल्पं जीवन्ति उपजीवन्ति तेषां सर्वेषामपि ब्राह्मणानामन्नमभोज्यम् ॥ ८७ ॥

**ये च शस्त्रमाजीवन्ति ॥ ८८ ॥**

ये च शस्त्रेण जीवन्ति तेषामप्यभोज्यं क्षत्रियवर्जम् ॥ ८८ ॥

**ये चाधिम् ॥ ८९ ॥**

आजीवन्तीत्यपेक्षते । स्वगृहे परान्वासयित्वा तेभ्यो भृतिग्रहणमाधिर्य, स्तोम इति प्रसिद्धः । परभूमौ कुटिं कृत्वा स्तोमं दत्त्वा वसेतु य इति । ये चाधिमाजीवन्ति तेषामप्यन्नमभोज्यम् । अत्राधिं ये जीवन्ति तेषां वार्धुषिकत्वादेव निषेधः सिद्धः ॥ ८९ ॥

**भिषक् ॥ ९० ॥**

अभोज्यान्न इति प्रकरणाद्गम्यते । भिषग्भैषज्यवृत्तिः । धर्मार्थं ये सर्पदष्टादिकं चिकित्सन्ति ते भोज्यान्नाः ॥ ९० ॥

**वार्धुषिक. ॥ ९१ ॥**

वृद्ध्या जीवन्नप्यभोज्यान्नः ॥ ९१ ॥

**अक्रीतराजको दीक्षितः ॥ ९२ ॥**

दीक्षिते दीक्षणीयेष्ट्या संस्कृतः । सोऽपि यावत्क्रीतराजको न भवति सोमक्रयं न करोति तावदभोज्यान्नः । ९२ ॥

अग्नीषोमीयसंस्थायामेव दीक्षितस्य भोक्तव्यम् ॥ ९३ ॥

अग्नीषोमीये पशौ संस्थिते समाप्ते दीक्षितस्य भोक्तव्यं न प्रागिति पक्षान्तरम् ॥ ९३ ॥

हुतायां वा वपायां क्रीते वा राजनि यज्ञार्थे वा
निर्दिष्टे शेषाद्भुञ्जीरन्निति ब्राह्मणम् ॥ ९४ ॥

हुतायामित्यादि तु यज्ञार्थमनिर्दिश्याप्यशेषादेव । यज्ञार्थे इति पक्षान्तर इदं यज्ञार्थमिति व्यादेशे कृते शेषाद्भुञ्जीरन्निति ब्राह्मणं भवति । ब्राह्मणग्रहणं प्रीत्युपलब्धितः प्रवृत्तेरपस्मृतितो मा भूदिति प्रत्यक्षमेवोक्तं ब्राह्मणमिति ॥ ९४ ॥

क्लीबः ॥ ९५ ॥

क्लीबः प्रसिद्धः । सोऽप्यभोज्यान्नः ॥ ९५ ॥

राज्ञः प्रैषकृत् ॥ ९६ ॥

प्रैषकृद् दौत्यकर्मा । तस्यापि प्रतिषेधः ॥ ९६ ॥

अहविर्याजी चाऽऽर्याविधिप्रव्रजितः ॥ ९७ ॥

अग्निहोत्राद्यननुष्ठाताऽपि आर्यः शिष्टः । विधिराचारस्तस्मात्प्रव्रजितः प्रच्युतः । सोऽप्यभोज्यान्नः ॥ ९७ ॥

यश्चाग्नीनपास्यति ॥ ९८ ॥

अविधिना त्रेताग्निगृह्याग्नित्यागी ॥ ९८ ॥

यश्च सर्वान्वर्जयते ॥ ९९ ॥

आत्मानं श्रोत्रियं मन्यमान इतरान्वर्जयति । अन्नादिसंसर्गेण संसर्गदोषात् ॥ ९९ ॥

सर्वान्नी च ॥ १०० ॥

सर्वेषामन्नमस्येति मत्वर्थेन निरन्तरमित्युक्तम् । तत्तु युक्तानामयुक्तानां च ॥१००॥

श्रोत्रियो निराकृतिः ॥ १०१ ॥

श्रोत्रियो निःस्वाध्यायः । निवृत्त इत्यन्ये ॥ १०१ ॥

वृषलीपतिः ॥ १०२ ॥ (ख० १८) ।

क्रमविवाहे यस्य वृषली शूद्रजाता जीवतीतरा मृता स वृषलीपतिः । स श्रोत्रियोऽप्यभोज्यान्न इति ॥ १०२ ॥ ( ख० १८ ) ।

**मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते यश्च प्रश्रयते तावन्त कालम् ॥ १०३ ॥**

मत्तो मदद्रव्यसेवयाऽप्रकृतिं गतः । उन्मत्तो भ्रान्तः । बद्धो निगडादिना । अणिकः पुत्राच्च्छुतग्राही । पुत्राचार्य इति शास्त्रे निन्दितः । प्रत्युपविष्टः ऋणादिना कारणेन धर्मादिकं निरुध्य तत्पार्श्वे उपविष्ट इतरस्तत्परिहारमुक्तवास्तेन सहाऽऽसीनः । प्रत्युपवेशयते यश्च प्रश्रयते तिष्ठति । एते मत्तादयस्तावन्तं कालमभोज्यान्ना यावन्मदाद्यनुवृत्तिः । अपर आह— अणिक ऋणिक ऋणस्य दाता । प्रत्युपविष्ट इदं विशेषणमिति ॥ १०३ ॥

**अथ क आश्यान्नः ॥ १०४ ॥**

यद्येतेऽभोज्यान्नाः कस्तर्ह्याश्यान्नः कस्य तर्ह्यन्नमशनीयमिति । यद्यप्येतेऽभोज्यान्ना इति उक्ते परिशिष्टा भोज्यान्ना इति गम्यते तथाऽप्यनेकमतोपन्यासार्थोऽयं प्रश्नपूर्वक आरम्भः ॥ १०४ ॥

**यस्येप्सेदिति कण्वः ॥ १०५ ॥**

य एवमर्थयते स एवाऽऽश्यान्न इति कण्व ऋषिर्मन्यते ॥ १०५ ॥

**पुण्य इति कौत्सः ॥ १०६ ॥**

सर्ववर्णाना स्वधर्मे वर्तमानानामित्युक्तत्वादभोज्यान्नाः सर्वे पुण्या एव । इह पुनः पुण्यग्रहणमतिशयार्थम् । तपोहोमजपैः स्वधर्मेण युक्तः पुण्यः । स स्वयं चाप्रार्थयमानोऽपि भोज्यान्न इति कौत्सस्य पक्षः ॥ १०६ ॥

**यः कश्चिद्दद्यादिति वार्ष्यायणिः ॥ १०७ ॥**

यः कश्चित्पुण्योऽपुण्यो वा सततं दानशीलः स भोज्यान्न इति वार्ष्यायणिराह । तथा च मनुः—श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरदिति ॥ १०७ ॥

अत्रोपपत्तिः—

**यदि हि रजः स्थावरं पुरुषे भोक्तव्यमथ चेच्चलं दानेन निर्दोषो भवति ॥ १०८ ॥**

रजः पापम् । तद्यदि पुरुषे कर्तरि स्थावरं स्थिरं न भोगमन्तरेण क्षीयते तदा ततः

प्रतिग्रहमोक्तारि सप्रक्रम भावाद्भोक्तव्यम् । अथ चेज्जलमुपभोगमन्तरेणापि क्षीयते तदा सतत तद्दानशीले न मुहूर्तमपि द्रव्यमवतिष्ठत इति कुतो भोक्तुर्दोष इति ॥ १०८ ॥

शुद्धा भिक्षा भोक्तव्यैककुणिकौ कण्वकौत्सौ । १०९ ॥

धार्मिकेणोपहृता भिक्षा शुद्धा । सा भोक्तव्या, इत्येककुणिकादीना चतुर्णां पक्षः ॥ १०९ ॥

सर्वतोपेतं वार्ष्यायणीयम् ॥ ११० ॥

सर्वत उपेत छान्दसो गुणः । उपेतमयाचितोपपन्न तत्सर्वतोऽपि भोज्यमिति वार्ष्यायणीय मतम् ॥ ११० ॥

इदानीं स्वयमाह—

पुण्यस्येप्सतो भोक्तव्यम् ॥ १११ ॥

कण्वकुत्सयो. पक्षयो. समुदित आचार्यस्य पक्ष· ॥ १११ ॥

पुण्यस्याप्यनीप्सतो न भोक्तव्यम् ॥ ११२ ॥

य. प्रार्थितोऽपि नेत्यसकृदुक्त्वा कथचिद्दापयितेप्स सोऽनीप्सन्नुच्यते । तस्य पुण्यस्याप्यभोज्यमिति । अपर आह—अनीप्सत इति कर्तरि षष्ठी । पुण्यस्याप्यन्नमभोज्य यदि भक्ष्यमाण. पूर्ववैरादिना स्वयमीप्सित न भवति ॥ ११२ ॥

यतः कुतश्चाभ्युद्यत भोक्तव्यम् ॥ ११३ ॥

सर्वतोपेतमित्युक्तमेव पुनरुच्यते विशेषविवक्षया ॥ ११३ ॥

तदाह—

नाननियोगपूर्वमिति हारीत. ॥ ११४ ॥

अद्य तुभ्यमिदमाहरिष्यामि तद्भवता ग्राह्यमिति निवेदन नियोगः न नियोगोऽनियोगः । पुनर्नञ्समास । द्वौ नञौ प्रकृतमर्थं चोदयत· । अननियोगो नियोगस्तत्पूर्वं चेदभ्युद्यतं न भोज्यमिति ॥ ११४ ॥

अथ पुराणश्लोकानुदाहरन्ति—

उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् ।
भोज्यां मेने प्रजापतिरपि दुष्कृतकर्मणः ॥
न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यधिमन्यते ॥ इति ॥११५॥

अपि च पुराणे—

सर्गाश्च प्रतिसर्गाश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥

इत्येवंलक्षणं भविष्यादौ । उपे(य)तां हुत्वाम्यामुद्यम्य धारितामाहृतां स्वयमानीतां पूर्वमनिवेदितां भिक्षां दुष्कृतकर्मणोऽपि सकाशाद्भोज्या मेने प्रजापतिः मनुः प्रजापतिर्यस्मिन्निति मानवे दर्शनात् । पर न तामभ्याधिमन्यते प्रत्याचष्टे तस्य पितरः कव्यं नाश्नन्ति । कियन्त कालम्— दश वर्षाणि पञ्च च । अग्निश्च हव्यं न वहति । तावन्तमेव कालमिति प्रत्याख्यातुर्निन्दार्थः ॥ ११५ ॥

चिकित्सकस्य मृगयोः शल्यकुन्तस्य पाशिनः
कुलटायाः षण्ढकस्य च तेषामन्नमभोज्यम् ॥११६॥

चिकित्सको भिषग्वृत्तिः । मृगयुर्मृगघाती लुब्धः । शल्यकृन्तः शस्त्रेण ग्रन्थ्यादिच्छेत्ताऽम्बष्ठः । पाशी पाशवान्पाशजालेन मृगादीनां ग्राहक । कुलम्टनीति कुलटा व्यभिचारिणी । अभिसारिका वा । षण्ढकस्तृतीयाप्रकृतिरुत्पाटितवृषणश्च । तेषां चिकित्सकादीनामन्नमभोज्यम् । चिकित्सकषण्ढकयोः पुनर्ग्रहणमुद्यतस्यापि प्रतिषेधार्थम् पूर्वत्र ग्रहण शक्यमकर्तुम् । एवं तर्हि सूत्रकारस्य विप्रतिषेधः । अयं तु पुराणश्लोक इत्यपौनरुक्त्यम् ॥ ११६ ॥

अन्नादे भ्रूणहा माष्टर्यनं नाभिशंसति स्तेनः
प्रमुक्तो राजनि यावन्न(द)नृतसंगरे ॥ ११७ ॥

षडङ्गस्य वेदस्याध्येता भ्रूण । त यो हतवान्स भ्रूणहा । सोऽन्नादे माष्टि श्लिष्यति । किम् । प्रकरणादेन इति गम्यते । भ्रूणघ्नो योऽन्नमत्ति तस्मिन्नदेनोऽन्नमेनः संक्रामति । तस्मात्तस्योद्यतमप्यभोज्यमिति प्रकरणाद्गम्यते । मगत पादः । इतरः पुराणे श्लोके पठ्यमाने पतितसंयोगेन नाभिशंसति मिथ्यैव ब्रूत इदं त्व । कृतमिति । तस्मिन्नाभिशंसति तदेनो मार्ष्टि । मनुश्च—

पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः ।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषमर्हति ॥

इति द्वैगुण्यमाह तदभ्यासे द्रष्टव्यम् । स्तेन. प्रकीर्णकेश इति वक्ष्यति । स एव तृतीयपादस्यार्थः । कर्तृभेदादपौनरुक्त्यम् । सगत. प्रतिश्रय. सत्यसगन इति यथा । यः प्रतिश्रुत्य न ददाति सोऽनृतसगरः । रकारश्छान्दसः । तस्मिन्दातृदेनो मार्ष्टि । तस्मात्प्रतिश्रुतं देयमिति ॥ ११७ ॥

गुरौ याज्यश्च शिष्यश्च स्त्रियश्चर्तुर्व्यभिचारि-
णीति ॥ ११८ ॥ ( ख० १९ )।

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे ( धर्मसूत्रापरपर्याये ) षड्विंशप्रश्ने पञ्चमः पटलः ॥ ५ ॥

गुरौ याज्ये ( जके ) याज्य. । तथाऽध्यापके शिष्य । स्त्रिय ऋतुकाले ता विहायान्या गच्छेत्स व्यभिचारी । तस्मिन्मा स्वस्यत्ते( न्ते ) एनो निमार्ष्टि । एवं याज्यशिष्यावपि ॥ ११८ ॥ ( ख० १९ ) ॥

इति श्रीमन्महादेवविरचितायां हिरण्यकेशिधर्मप्रश्नव्याख्यायामुज्ज्वलाया वृत्तौ षड्विंशप्रश्ने पञ्चमः पटलः ॥ ५ ॥

अथ षष्ठ पटल ।

अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंहितानैश्चारिकान् ॥ १ ॥

उक्ता धर्माः । पतनीयान्यभिधास्यंस्तेषु मुख्यत्वेन ब्रह्मचारिधर्मानाभिधाय काश्चित्स्नातकस्यापि काश्चित्साधारणानप्यभिधाय गृहस्थधर्माभिधाने कर्तव्ये सत्यध्यात्मविद्याप्रतिपादनं प्रायश्चित्तानि विध्यपराधे वक्ष्यन्परमप्रायश्चित्तत्वेन प्रसक्तमाह । शुचिकराणि कर्माणि तेषां प्रायश्चित्तानि वक्ष्यन्नादित आत्मज्ञानं तदुपयोगिनश्च योगानधिकुरुते । तस्यापि सर्वपापहरत्वेन मुख्यप्रायश्चित्तत्व त् । श्रूयते हि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ इति ।

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त इति वा । याज्ञवल्क्योऽप्याह— इज्याचारदयाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥ इति ।

अध्यात्मं भवा अध्यात्मिकाः । छान्दसो वृद्ध्यभावः । आत्मनो लम्भयितॄन्योगाश्चित्तसमाधानहेतून्वक्ष्यमाणानक्रोधादीनुपायाननुतिष्ठेत्सेवेत । न्यायसंहितानुपपत्तिसमन्वितान् । उपपद्यन्ते हि न्यायतः क्रोधादीनां दोषाणां निर्घाते । अनैश्चारिकान् । निश्चारश्चित्तस्य बहिर्विक्षेपः । तस्मै ये प्रभवन्ति क्रोधादयो वक्ष्यमाणास्ते नैश्चारिकाः । तत्प्रतिपक्षभूतान् । अक्रोधादिषु सत्सु चित्तमनिश्चरणशीलमात्मलम्भनं निश्चलं तिष्ठति । तस्मात्ताननुतिष्ठेत् । आत्मप्रलब्धमक्रोधादिलक्षणं चित्तसमाधानं कुर्यादिति ॥ १ ॥

किं पुनरात्मा प्रयत्नेन लब्धव्य इत्याह—

आत्मलाभान्न परं विद्यते ॥ २ ॥

आत्मलाभात्परमुत्कृष्टं लाभान्तरं नास्ति । तस्मात्तस्य लाभाय यत्न आस्थेय इति। कः पुनरसावात्मा । प्रत्यगात्मा । नन्वसौ नित्यलब्ध । नहि स्वयमेव स्वस्यालब्धो भवति । सत्यम् । प्रकृतिग(क)लनात्तद्धर्मतामुपगतो नष्टस्वरूप इव भवति। प्रकृत्या हि नित्यसबद्धः पुरुष । तथाविधश्च संबद्धो यथा परस्परं विवेको न जायते। अन्योन्यधर्माश्चान्योन्यत्राध्यस्यन्ते । यथा क्षीरोदके संपृक्ते न ज्ञायत इदं क्षीरमिदमुदकमस्मिन्नवकाशे क्षीरममुष्मिन्नुदकमिति। यथा वा अग्न्ययोगोलकयोः सबद्धयोर्येऽग्निधर्मा उष्णत्वभास्वरत्वादयस्तेऽयोगोलकेऽध्यस्यन्ते। ये चायोगोलकस्य धर्माः काठिन्यदैर्घ्यादयस्तेऽग्नावध्यस्यन्ते । एवं हि तत्र प्रतिपत्तिः । एकं वस्तूष्णं दीर्घं भास्वरं कठिनमिति । तद्वदिहापि पुरुषधर्माश्चैतन्यादयः प्रकृतावध्यस्यन्ते प्रकृतिधर्माश्च सुखदुःखमोहपरिणामादयः पुरुषे । ततश्चैकं वस्तु चेतनं सुखदुःखादिफलपरिणामीति व्यवहारः । वस्तुतस्तु तस्मिन्संघातेऽचेतनांशः परिणामी। चेतनांशस्तु तमनुधावति। येन येन रूपेण परिणमति तेन तेनाभेदाध्यासमापद्यते । यथा क्षीरावस्था गतं घृतं क्षीरसंपृक्तं दध्यात्मना परिणमति तेनानु तामवस्था प्रविशति त[द्व]त्। तदिदमुच्यते—'तत्सृष्ट्वा तदेवानुप्राविशत्' इति। सर्गेऽप्यात्मनः कर्तृत्वे इदमेव यदुपभोक्तव्यतया निमित्तत्वम् । तदेव स्वभावतः स्वस्थोऽप्यात्मा प्रकृत्या सहाभेदमापन्नस्तद्धर्मा भवति । एवं तद्विकारेण महतो विकारेणाहंकारेणेत्याशरीराद्द्रष्टव्यम् ।स्थूलोऽहं कृशोऽहं देवदत्तोऽहं मनुष्योऽहं तिर्यगहमिति।तस्यैवंगतस्यापेक्षितः स्वरूपलाभो नीचैरभिवर्धितस्य राजपुत्रस्य । तद्यथा शबरादिभिर्बाल्यात्प्रभृति स्वसुतैः सह वर्धितो राजपुत्रस्तज्जातीयमात्मानमनुभूय च बन्धुभिः स्वरूपे कथिते लब्धस्वरूप इव भवति । प्रकृत्यावेशेन स्वभावान्तरं नीत आत्मा मातृस्थानीयया तत्त्वमसीति श्रुत्या स्वभावं नीयते । यदेवंविधं परिशुद्धं वस्तु तदेव त्वमसि न तु यथा मन्यसे मनुष्योऽहं दुःखयहमित्यादि तथेति । एवंभूतो राजा तत्त्वमसीति राजपुत्र । ननु तत्त्वमसीति ब्राह्मणात्तादात्म्यमुच्यत इति को वा ब्रूते । नेति[नेतीति निषेधाद्]ब्रह्मापि नान्यदात्मनः । किं पुनरयमात्मैक आहोस्विन्नाना। किं तेन ज्ञातेन त्वं तावदेवंविधश्चेदेकोऽस्मि नित्यनिर्मलः कलुषवस्तुसंसर्गात्कुलषतामिव गतस्तद्वियोगश्च ते मोक्षः त्वयि मुक्ते यद्यन्ये संसरिष्यन्ति का ते क्षतिः । अथ न सन्ति तथाऽपि कस्ते लाभ इत्यलमियता । महत्येषा कथा। तदप्येते श्लोका भवन्ति—

नीचानां वसतौ तदीयतनयैः सार्धं चिरं वर्धित-
स्तज्जातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा।
संघाते महदादिभिः सह वसंस्तद्वत्परः पूरुषः
स्वात्मानं सुखदुःखमोहकलितं मिथ्यैव विद्वन्मन्यते ।।
दाता भोगपरः समग्रविषयो यः शासिता दुष्कृता

राजा स त्वमसीति म तृपुखत श्रुत्वा यथावत्स तु ।
राजीभूय यथार्थमेव यतो तद्वत्तुमान्बोधितः
श्रुत्वा तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव सम्पद्यते ॥
इत्येव बहवोऽपि राजतनयाः प्राप्ता दशाकीदृशी
ते चान्योन्यभिदामपास्य सहसा सर्वे भजन्त्येकताम् ।
किंतु स्वे परमे पदे पृथगमी तिष्ठन्ति मातास्तथा
क्षेत्रज्ञा इति तत्त्वमादिवचसा काऽभेदवादे क्षतिः ॥
तेष्वेको यदि जातु मातृवचनात्प्राप्तो निजं वैभव
नानात्वे क्षतिरस्य का किल परे सन्त्वन्यथा च स्थिताः ।
यद्वाऽन्ये न भवेयुरेवमपि को लाभोऽस्य रद्वदति. ॥
पुसामित्यभिदाभिदा च न वय निर्बध्य निश्चित्स(न्म)हे ॥ इति ॥ २ ॥

तदिहोपक्षितमात्मज्ञानमुपदिश्यते । तत्त्रिविधम् । श्रुत मनन निदिध्यासनमिति 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य.' इति श्रवणात् । तत्र श्रुतमुपनिषदां तात्पर्यावधारणम् । मननमुपपत्तिनिरूपणम् । एव श्रुतेऽनुमते चाऽऽत्मनि साक्षात्कारहेतुरविक्षिप्तेन चेतसा निरन्तर भावनं ध्यानम् । तत्सिद्ध्यै श्रौतज्ञान तावदाह—

तत्राऽऽत्मलाभीयान् श्लोकानुदाहरिष्यामः ॥ ३ ॥

तत्रेति वाक्योपन्यासे । आत्मलाभीयानात्मलाभप्रयोजनान् । अनुप्रवचनादित्वाच्छः । श्लोकान्पादबद्धानौपनिषदान्मन्त्रानुदाहरिष्यामः । उद्धृत्याऽऽहरिष्यामो ग्रन्थे निवेशयिष्याम. ॥ ३ ॥

पूः प्राणिनः सर्वे एव गुहाशयस्याहन्यमानस्य विकल्मषस्याचलं चलनिकेत येऽनुतिष्ठन्ति तेऽमृताः ॥ ४ ॥

गुहेति प्रकृतिनाम ।

यतः स्मृतं कारणमप्रमेयं ब्रह्म प्रधानं प्रकृतिः प्रसूतिः ।
आत्मगुहा योनिरनन्त क्षेत्र तदेवामृतमक्षरं च ॥

इति पुराणदर्शनात् । बुद्धिरित्यपि परेः । अविकरणसाहित्यात् । तस्या शेते तया सहाविभागापन्नस्तिष्ठतीति गुहाशय आत्मा । 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते' इति मन्त्रान्तरम् । अहन्यमानस्येति । न ह्यसौ शरीरे हन्यमाने हन्यते । विकल्मषस्येति । निर्लेपस्येति । धर्माधर्मादिभिरन्तःकरणस्य धर्मैरात्मनि अध्यस्त. । एव भूतस्याऽऽत्मन. सर्व एव प्राणिनो ब्रह्मा-

घास्तिर्यगन्ताः प्राणादिमन्तः संघाताः पूः पुरमुपभोगस्थानम् । यथा राजा पुरमधिवसन्सचिवैरानीतान्भोगानुपभुङ्क्ते तथाऽयं देवादिशरीरमधिवसन्करणैरुपस्थापितान्भोगानुपभुङ्क्ते । तमेवभूतमचलं सर्वगतत्वेन निश्चलम् । चलनिकेतं निकेतं स्थानं शरीरं तदस्य चलं न येऽनुतिष्ठन्ति उपासत एवभूतोऽहमिति प्रतिपद्यन्ते तेऽमृता मुक्ता भवन्ति ॥४॥

विषयसंगपरित्यागेनायमुपास्य इत्याह—

यदिदमिती हेदिह लोके विषयमुच्यते
विधूय कविरेतदनुतिष्ठेद्गुहाशयम् ॥ ५ ॥

यदिदमिति । विषयमेतदिति । सर्वत्र लिङ्गव्यत्ययश्छान्दसः । एवमिदिति तकारस्य दकारः । हशब्द आश्चर्ये । इति शब्देनाऽऽवृत्तेन शब्दादिषु विषयेष्ववान्तरप्रकारभेदः प्रतिपाद्यते । विषयापहृतचेतसो हि वदन्ति इति ह तस्याहितमिति ह तस्यासुखस्पर्श इति ह तस्यारूपं निष्टप्तमिव कनकमिति ह तस्यास्वादिष्ठोऽधरमणिरिति ह तस्यागन्धो घ्राणतर्पण इति । एवं दिव्यमानुषभेदोऽपि द्रष्टव्यः । इति ह इति हात्रानन्तरपर इतिशब्दोऽध्याहार्य इति । इति ह इति हेत्येतयोः । य लोके विषयमुच्यते । सामान्यापेक्षमेकवचनम् । एत विधूय कविरेतदनुतिष्ठेद्गुहाशयम् । कविर्मेधावीति ॥ ५ ॥

विषयत्यागे हेतुमाह—

आत्मन्नेवाहमलब्धैतद्धितꣳ सेवस्व नाहितम् ।
अथान्येषु प्रतीच्छामि साधुष्ठान(स्थान)मनपेक्षया महान्तं तेजस्कायं सर्वत्र निहितं प्रभुम् ॥ ६ ॥

शिष्यं प्रत्याचार्यवचनमेतत् । द्वौ चात्र हेतू । विषयाणां पराधीनत्वमहितत्वं च । महान्तं गुणतः । तेजस्कायं तेजःशरीरम् । तेजो रश्मिः स्वयप्रकाशमात्मज्योतिः सम्राडिति होवाच ' इति बृहदारण्यकम् । सर्वत्र निहितं सर्वगतम् । प्रभुं स्वतन्त्रम् । एवंभूतं गुहाशयमतावन्तम् । अहम् । आत्मन्सप्तम्येकवचनस्य लुक् । आत्मनि । अस्मिंस्तदीये संघातेऽन्यानपेक्षयैव लब्धुं योग्यमलब्धम् । अथान्येष्वपीन्द्रादिषु तं तं विषयं प्रतीच्छामीति लब्धुं एद् । प्रत्यैच्छम् । इदानीं तु तं लब्ध्वा तथाविधोऽस्मि त्वमप्येतदेव हितं साधुस्थानं साधुनार्गं सेवस्वाहितविषयानुभवानमिति ॥ ६ ॥

पुनरप्यसौ कीदृश इत्याह—

सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवोऽनङ्गोऽ-
शब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः स सर्वं परमा
काष्ठा स वैषुवतः स वै वैभाजनं पुरम् ॥ ७ ॥

सर्वेषु भूतेषु मनुष्यादिषु सङ्घातेषु यो नित्यो विनश्यत्सु न नश्यति । विपश्चिन्मेधावी चित्स्वरूपः । अमृतो नित्यत्वादेवामरणधर्मा । ध्रुव एकरूपो विकाररहितः । न प्रभा. मवद्विकारिणः सतो धर्मिरूपेणास्य नित्यत्वमित्यर्थः । अनङ्गश्चरणाद्यङ्गरहितः । अश. ब्दोऽस्पर्श इति भूतगुणानामुपलक्षणम् । शब्दादिगुणरहितः । अशरीरः सूक्ष्मशरी. रेणापि वर्जितः । महाशुचिर्महत्त्वं शौचस्य विशेषणम् । परमार्थतोऽन्यत् । शुद्धः । स सर्वं प्रकृत्यभेदद्वारेण स एव । परमा काष्ठा ततः परं गन्तव्याभावात् । स वैषु. वतं विषुवान्नाम गवामयनस्य मध्ये भवमहरेकविंशम् । तदहरुपयन्ति विषुवन्त मध्ये संवत्सरस्येति दर्शनात् । विषुवानेव वैषुवतम् । तद्यथा संवत्सरस्य मध्ये भवति एव. मङ्गानामेष मध्ये । मध्ये ह्येषोऽङ्गानामिति बह्वृचब्राह्मणम् । स एव च वैभाजन पुरं विविधैर्मार्गैर्भजनीय विभजनं तदेव वैभाजनम् । बाह्वा(प्रज्ञा)दिरनुशातिकादिश्च । यथा समृद्धं पुरं सर्वैरर्थिभिः प्राप्यमेवमयमपीति ॥ ७ ॥

तं योऽनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेद्दुर्दर्शं
निपुणं युक्तो यः पश्येत्स मोदेत विष्टपे ॥ ८ ॥

तमेवंभूतमात्मानं योऽनुतिष्ठेदुपासीत प्राध्वं चास्य सर्वत्र सर्वावस्थासु सदा प्राध्वमा. नुकूल्यमाचरेत् । आनुकूल्य प्रतिषिद्धवर्जनं नित्यनैमित्तिककर्मानुष्ठानं च । यश्च दुर्दर्शं निपुणं सूक्ष्ममेन युक्तः समाहितो भूत्वा पश्येत्साक्षात्कुर्यात्स स्वविष्टपे स्वमहिमनि स्थितो मोदते विगतपापः सर्वदुःखविवर्जितो भवति । संसारदशाया वा तिरोहितं निरति. शयं स्वमानन्दमनुभवतीति केचित् ॥ ८ ॥

आत्मन्पश्यन्सर्वभूतानि न मुह्येच्चिन्तयन्कविरा-
त्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे
विराजति ॥ ९ ॥

सर्वाणि भूतानि आत्मनि शेषत्वेन स्थितानि पश्यन्नुपनिषदादिभिर्जानन्पश्चाच्चिन्त यन्युक्तिभिर्निरूपयन्यो न मुह्येन्मोहं न गच्छेत् । कविर्मेधावी । पश्चाच्चैव सर्वत्रावशे. षित्वेन स्थितमात्मानं पश्येत्साक्षात्कुर्यात्स वै ब्राह्मणो नाकपृष्ठे तत्सदृशे स्वे महि. मनि स्थितो विराजति स्वय प्रकाशते ॥ ९ ॥

निपुणोऽणीयान्बिसोर्णाया यः सर्वमावृत्य ति-
ष्ठति वर्षीयांश्च पृथिव्या ध्रुवः सर्वमारभ्य
तिष्ठति स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽनन्यस्य
ज्ञेयात्परमेष्ठी विभाजस्तस्मात्कायात्प्रभवन्ति सर्वे
स मूलꣳ शाश्वतिकः स नित्यः ॥ १० ॥

निपुणो मेधावी चित्स्वरूपः । बिसोर्णाया बिसतन्तोरप्यणीयान्सूक्ष्मः । सर्वमावृत्य व्याप्य तिष्ठति । यश्च पृथिव्या अपि वर्षीयान्वृद्धतरः सर्वगतत्वादेव सर्वमारभ्य विष्टभ्य शेषित्वेनाधिष्ठाय तिष्ठति । ध्रुव एकरूपः । स इन्द्रियैरस्य जगतो यदिन्द्रियैर्ज्ञानमिन्द्रियजन्यं ज्ञानं तस्मात् । कीदृशाज्ज्ञेयात् । अनन्यस्य पञ्चम्यर्थे षष्ठी । ज्ञेयान्नीलपीतादेराकारादनन्यभूतं नीलपीताद्याकार तस्माद्विषयज्ञानादन्य इत्यर्थः । तस्माद्विज्ञानादन्योऽन्तर आत्माऽऽनन्दमय इति ।

ज्ञानस्वरूपमत्यन्त निर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् । इति पुराणम् ।

स्वभावस्वच्छस्य चिद्रूपस्याऽऽत्मनो नीलपीताद्याकारकालुष्यं तद्रूपाया बुद्धिवृत्तेरनुरागकृत भ्रान्तमित्यर्थः । वैषयिकज्ञानादन्य इति विशेषणाज्ज्ञानात्मक इत्यपि सिद्धम् । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । एवंभूतः स आत्मा परमेष्ठी परमस्वरूपे तिष्ठति । विभाज इत्यस्य परमेणसंबन्धः । विभज्याऽऽत्मानं देवमनुष्यादिरूपेण नानाशरीरानुप्रवेशेनेति विभाक् । तस्माद्विभाजो निमित्तभूतात्सकायादेव मनुष्यादिशरीराणि प्रभवन्ति उत्पद्यन्ते । स मूलं सप्रपञ्चसृष्टेर्मोक्तृताया मूलकारणम् । स नित्योऽविनाशी । शाश्वतिक एकरूपोऽविकारः ॥ १० ॥

दोषाणां तु निर्घातो योगमूल इह जीविते निर्हृत्य
भूतदाहान्क्षेमं गच्छति पण्डित इति ॥ ११ ॥

अध्यात्मज्ञानद्वारेण पण्डितो लब्धज्ञान आत्मसाक्षात्कारी क्षेममभयं मोक्षम् । अभयं वै जनक प्राप्तोऽसीति बृहदारण्यकम् । समाप्ताः श्लोकाः ॥ ११ ॥

अथ भूदाहीयान्दोषानुदाहरिष्यामः ॥ १२ ॥

भूतानां दाहो भूतदाहः । तस्मै हिता भूतदाहीयाः ॥ १२ ॥

क्रोधो हर्षो रोषो लोभो द्रोहो दम्भो मृषोद्यम-
त्याशपरीवादावसूया काममन्यू आनात्म्यमयोग
स्तेषां योगमूलो निर्घातः ॥ १३ ॥

ताडनक्रोशनादिहेतुकोऽन्तःकरणविक्षोभः स्वेदकम्पादिलिङ्गकः क्रोधः । हर्ष इष्टला-भाच्चेतस उद्रेको रोमादिलिङ्गकः । रोषः क्रोधस्यैव कियानपि भेदः । पित्रादिषु प्रति-कूलेषु मनसो वैलोम्यमात्रमकार्यकरम् । लोभो द्रव्यव्यासङ्गः । मोहः कार्याकार्ययो-रविवेकः । स च प्रायेण क्रोधादिजन्योऽपि पृथगुच्यते कदाचित्तदभावेऽपि सम्भवेदिति । द्रोहोऽपकारः । दम्भो धार्मिकत्वप्रकाशनेन लोकवञ्चनम् । मृषोद्यमनृतवदनम् । अत्या-शोऽत्यशनम् । परीवादः परनिन्दा । असूया परगुणेष्वक्षमा । कामः स्त्रीसङ्गः । मन्युर्गूढो दोषः । आनात्म्यमजितेन्द्रियत्वं जिह्वादिचापलादि । अयोगो विक्षिप्तचित्तता । एवं भूतदाहीया दोषाः । तेषां योगमूलो निर्घातः ॥ १३ ॥

के पुनस्ते योगाः—

अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽद्रोहोऽदम्भः स-
त्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग
आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग
आर्यमानृशंस्यं तुष्टिरिति सर्वाश्रमाणां समय-
पदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति
॥ १४ ॥ ( ख० २० ) ॥

एते चाक्रोधादयो विभावरूपा न क्रोधासंभवमात्रं क्रोधादिनिर्घातहेतुतयोपदेशात् । के पुनस्ते—अलोभः संतोषोऽलंबुद्धिः । अमोहोऽवधानम् । अद्रोहः पुनः पुनः प्रस-क्तेषु क्रोधादिषु मा कार्षमिति सकल्पः । अदम्भो धर्मार्थमनुष्ठानम् । सत्यवचनं यथा दृष्टार्थवादित्वम् । अनत्याशो नियतभोजनम् । अपैशुनं परदूषणानुच्चारणम् । अनसूया परगुणेष्वनुमोदनम् । संविभाग आत्मानमुपरुध्य(ध्या)पि ला(दा)नम् । त्यागोऽपरि-ग्रहः । आर्जवं मनोवाक्कायकर्मणामेकरूपता । मार्दवं सूपगमता । शमः काममन्युपरि-त्यागः । दम इन्द्रियजयः । एतावस्यामेव गतत्वात्पूर्वत्र स्वस्मिन्क्रमेऽकामोऽमन्युरात्म-वत्त्वमिति नोपादिष्टम् । सर्वभूतैरविरोधः । सर्वग्रहणं क्षुद्रैरप्यविरोधार्थम् । योग ऐका-ग्र्यम् । आर्याणां भाव आर्यं शिष्टाचारानुपालनम् । आनृशंस्यं व्यवहारवचनादौ प्रस-क्तस्यापि नैष्ठुर्यस्य वर्जनम् । तुष्टिरनिर्वेदः । समयो व्यवस्था । सा च प्रकरणाद्धर्म-ज्ञानम् । पदं विषयः । एतेऽक्रोधादयः सर्वेषामाश्रमाणां समाः । न केवलं योगि-नामेवेति । धर्मज्ञानं समय इत्यर्थः । एते हि भाव्यमानाः क्रोधादीन्समूल-घातं घ्नन्ति । अतश्च तान्यनुतिष्ठन्विधिना सार्वगामी भवति । तान्यक्रोधादी-न्यनुतिष्ठन्सार्वगामी सर्वस्मै हितः सार्वः । आत्मानन्दं गच्छति । विधिनेति वचना

त्प्राणिना तु वधो यत्र तत्र साक्ष्यनृतं वदेदित्यादिके विषयेऽनृतवचनेऽपि न दोष इति ॥ १४ ॥ ( ख० २० ) ॥

**नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥ १५ ॥**

इमं लौकिकं लोके विश्रुतं ख्यातिलाभपूजादिकमर्थं प्रयोजनं पुरस्कृत्याभिसंधाय धर्मान्न चरेत् ॥ १५ ॥

किं कारणम्——

**निष्फला ह्यभ्युदये भवन्ति ॥ १६ ॥**

तस्मादेव क्रियमाणा धर्मा अभ्युदये फलकाले निष्फला भवन्ति । लोकोक्त्यर्थमसौ धर्मं चरति न कर्तव्यमिति । नः कर्तव्यमिति श्रद्धया धर्मफलं साधयति । यो वै श्रद्धामनारभ्येति श्रुतेः ॥ १६ ॥

किमिदानीं दृष्टं फलं त्याज्यमेव नेत्याह——

**तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनू त्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते॥१७॥**

अनुनिष्पद्यन्ते । तदेव स्वीकार्यापन्नताः सहितं प्रमोचित तृणानि वल्लिरपि प्रसिध्यति । तथा नरो धर्मचयेन वर्तते यशश्च कामाश्च वसूनि चाश्नुते । इति ॥ १७ ॥

**न चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥ १८ ॥**

यद्यपि दैवादर्था नानूत्पद्यन्ते तथाऽपि धर्मस्तावद्भवति । स च स्वतन्त्रः पुरुषार्थः । किमन्यैरर्थैरिति ॥ १८ ॥

**अनसूयुर्दुष्प्रलम्भः स्यात्कुहकशठनास्तिकबालवादेषु ॥ १९ ॥**

कुहकः प्रकाशे शुचिरेकान्ते यथेष्टाचारी । शठो वक्रचित्तः । नास्तिकः प्रेत्याभ(प्रत्यक्ष)वादी । बालः श्रुतिरहितः । तेषां वादेष्वनसूयः स्यात् । असूयया द्वेषो लक्ष्यते । द्वेष्टा न स्यात् । तान्विषयीकृत्य द्वेषमपि न कुर्यात् । तथा दुष्प्रलम्भ इति च । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् । गृधिवञ्च्योः प्रलम्भने इति दर्शनात् । दुष्प्रलम्भो विसवादयितुं मिथ्याफलाख्यानेन वर्तयितुं स शक्यः । कुहकादिवादेषु वञ्चितो न स्यात् । तद्वशो न स्यादित्यर्थः ॥ १९ ॥

वचनस्यासंभवमाह——

**न धर्माधर्मौ चरत आवा(व)१ स्वेव इति न देवा न गन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति ॥ २० ॥**

आवा(व)मिति छान्दसं रूपम् । भाषाया तु प्रथमायाश्च द्विवचने भाषायामिति प्राप्नोति । यदि हि धर्माधर्मौ विग्रहवन्तौ गोव्याघ्रवधगतावावा स्व इति ब्रुवाणौ यदि वा देवादयः प्रकृष्टज्ञाना ब्रूयुरिमौ धर्माधर्माविति ततः कुहकादिवादो न स्यात् । वचनात् । तदभावात्तु वचनं स्यादिति । इदं तावद्द्रष्टव्यम् । प्रत्यक्षादेरगोचरौ धर्माधर्मौ किंतु नित्यनिर्दोषवेदगम्यौ । तदभावे तन्मूलशास्त्रगम्याविति ॥ २० ॥

यत्र तु प्रायश्चित्तादौ विषयव्यवस्था दुष्करा तत्र निर्णयमाह—

**यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यद्गर्हन्ते सोऽधर्मः ॥ २१ ॥**

आर्याः शिष्टास्त्रैवर्णिकाः । बहुवचनाच्चत्वारस्त्रयोऽपि वा ।

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ॥

सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः इति ॥ २१ ॥

इदानीं श्रुतिस्मृत्योः प्रत्यक्षयोरदर्शने शिष्टाचारादप्यवगम्य धर्मः कार्य इत्याह—

**सर्वजनपदेष्वेकान्तसमाहितमाचार्याणां वृत्त१ सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥ २२ ॥**

सम्यग्विनीता आचार्याधीनः स्यादित्यादिना विनयेन संपन्नाः । वृद्धाः परिणतवयसः । यौवने विषयवश्यता स्यादिति तदुक्तम् । आत्मवन्तो जितेन्द्रियाः । अलोलुपा अकृपणाः । अदाम्भिका धर्मध्वजाः । एवंभूतानामाचार्याणा सर्वजनपदेषु यदेकान्तेनापि विचारेण समाहितमनुमत वृत्तमनुष्ठानं न मातुलसुतापरिणयनवत्कातिपयविषयं तद्वृत्तसादृश्यं भजेत तदनुरूप चेष्टेत । न तेषामनुष्ठान निर्मूलं संभवति । संभवति च वैदिकाना तूत्सन्न(नूतन)पाठो ब्राह्मणानुभव इति ॥ २२ ॥

**एवं वर्तमान उभौ लोकावभिजयति ॥ २३ ॥**

इमं चामुं च ॥ २३ ॥

**अविहिता ब्राह्मणस्य वणिज्या ॥ २४ ॥**

क्रयविक्रयव्यवहारो वणिज्या । सा स्वयंकृता ब्राह्मणस्य वृत्तिर्न विहिता । प्राप्ता नुवादोऽयमापदि विधानार्थः ॥ २४ ॥

**आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन् ॥२५॥**

ब्राह्मणवृत्तेरलाभ आपत् । तस्यां वृत्त्या पण्यानां व्यवहृपणोः समर्थयोरिति कर्तरि षष्ठी । व्यवहरेत । क्रयश्च विक्रयश्च व्यवहारः । पण्यानि क्रिणीयाद्विक्रीणीत वेत्यर्थः । अपण्यानि वक्ष्यमाणानि व्युदस्यन्वर्जयन् । कृत्स्नाया वैश्यवृत्तेरुपलक्षणमिदम् । क्षत्रियवृत्तिश्च दण्डापूपिकया सिद्धा । तथा च गौतमः—तदलाभे क्षत्रियवृत्तिस्तदलाभे वैश्यवृत्तिरिति ॥ २५ ॥

अपण्यानाह—

**मनुष्यान् रसान् रागान् चर्म गवां वशाꣳ श्लेष्मोदके तोक्मकिण्वे पिप्पलीमरीचे धान्यमाꣳसमायुधꣳ सुकृताशां च ॥ २६ ॥**

मनुष्या दासादयः । रसा गुडलवणादय क्षीरादयो वा । रागाः कुसुम्भादयः । रज्यन्तेऽनेनेति रागा वस्त्रा(स्त्रा)दयः । चर्म । गवा मध्ये वशा वन्ध्या गौः । श्लेष्मजलादि । येन विश्लिष्टं चर्मादि संधीयते, यथा श्लेष्मणा चर्मण्यं वाऽन्यद्वा विश्लिष्टं संश्लेषयेदिति बह्वृचब्राह्मणे दर्शनात् । तोक्मानीषदङ्कुरितानि व्रीह्यादीनि । किण्वं सुराप्रकृतिद्रव्यम् । सुकृत पुण्यं तस्य फलं वा सुकृताशा । शिष्टानि प्रसिद्धानि । एतान्यपण्यानि वर्जयित्वाऽन्येषां पण्यानां व्यवहरेत । मनुष्यादीन्वर्जयित्वेत्येव सिद्धेऽपण्यानीति वचनमन्येषामपण्यानां व्युदासार्थम् । तत्र मनुः—

सर्वान्रसानपोहेत कृतान्नं च तिलैः सह ।
अश्मनो लवणं चैव पशवो ये च मानुषाः ॥
सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च ।
अपि च स्युररक्तानि फलमूले तथौषधीः ॥
अपः शस्त्रं विषं मांसं सोमं गन्धांस्तु सर्वशः ।
क्षीरं क्षारं दधि घृतं तैलं मधु गुडं कुशान् ॥
आरण्यांश्च पशून्सर्वान्नष्ट्वु ( न्दंष्ट्रि ) णश्च वयांसि च ।
मद्यं नील च लाक्षां च सर्वांश्चैकशफान्पशून् ॥ इति ॥ २६ ॥

**तिलतण्डुलाꣳस्त्वेव विशेषेण धान्यस्य न विक्रीणीयात् ॥ २७ ॥**

धान्याना मध्ये तिलतण्डुलानेव विशेषतोऽतिशयेन न विक्रीणीयात् । अन्येषा विकल्पः । स्वयमुत्पादितेषु नाय प्रतिषेधः । मानवे तु श्रुतम्—

कामम् उत्पाद्य कृष्यात्तु स्वयमेव कृषीवलः ।
विक्रीणीत तिलाञ्छुद्धान्धर्मार्थमचिरस्थितान् ॥ इति ॥ २७ ॥

**अविहितश्चैतेषा मिथो विनिमयः ॥ २८ ॥**

परिवर्तन विनिमयो येषा विक्रयः प्रतिषिद्धस्तेषामेतेषा मिथः परस्परेण विनिमयोऽपि प्रतिषिद्धो न कर्तव्य इत्यर्थः ॥ २८ ॥

तेष्वेव केषु केषु विनिमयोऽनुज्ञायते—

**अन्नेन चान्नस्य रसानां च रसैर्मनुष्याणां च मनुष्यैर्विद्यया च विद्यानाम् ॥ २९ ॥**

अन्नादीना विद्यान्ताना विनिमयो भवत्येवेत्यर्थः । तथा च वसिष्ठः—रसा रसैः समतो हीनतो वा तिलतण्डुलपक्वान्नविद्यामनुष्याश्च विहिताः परिवर्तकेनेति । मानवे तु विशेषः—

रसा रसैर्निमातव्या न त्वेव लवण रसैः ।
कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः ॥

गौतमीये तु रसाना च रसैः पशूनां च लवणकृतान्नयोः समेतानामेव न तु पक्वस्यासम्प्रत्ययार्थं इति । तस्मादत्र प्रतिषेधानुवृत्तिर्नाऽऽशङ्कनीया । पूर्वत्र चोक्तं ब्रह्माणि मिथो विनियोगेन गतिर्विद्यत इति । विनिमयाभ्यनुज्ञानादेव विद्याना विक्रयो विप्रतिषिद्धो वेदितव्यः ॥ २९ ॥

**अक्रीतपण्यैर्व्यवहरेत ( ख० २१ ) मुञ्जबल्वजैर्मूलफलैः ॥ ३० ॥**

अक्रीतानि स्वयमुत्पादितानि अरण्यादाहृतानि वा यानि पण्यानि तैर्व्यवह्रियेत मुञ्जादिभिः । मुञ्जबल्वजास्तृणविशेषाः ॥ ३० ॥

**तृणकाष्ठैरविकृतैः ॥ ३१ ॥**

तृणानां विकारो रज्ज्वादिभावः । काष्ठाना विकारः स्थूणादिभावः । तृणत्वादेव सिद्धे मुञ्जबल्वजग्रहणं विकारार्थम् ॥ ३१ ॥

**नात्यन्तमन्ववस्येत् ॥ ३२ ॥**

प्रतिषिद्धानामपि विक्रयविनिमयाभ्या जीवन्न पुनरत्यन्तमवसीदेत्। तथा च गौतमः— सूर्षा च वृत्तिरशक्तौ च शूद्रेण जीवेत्तदप्येके प्राणसशय इति । मनुरपि—

जीवितात्ययमापन्नो योऽन्नमत्ति ततस्ततः ।
आकाशमिव पङ्केन न स दोषेण लिप्यते ॥ इति ॥ ३२ ॥

वृत्तिं प्राप्य विरमेत् ॥ ३३ ॥

गतम् ॥ ३३ ॥

अथाप्युदाहरन्ति । पशवश्च मुखादाना अश्मा चालवणो धृतः । एतद्ब्राह्मण ते पण्यं तन्तुश्चार· जनीकृत इति ॥ ३४ ॥

अपिच वदन्ति मुखेनाऽऽदानं येषा ते मुखादानाः पशवः । लवणव्यतिरिक्तोऽश्मा चारञ्जितस्तन्तुश्च । एतेन पूर्वोक्तं ब्राह्मण ते पण्यं विक्रेयमिति ॥ ३४ ॥

न पतितैः संव्यवहारो विद्यते ॥ ३५ ॥

पतिताः। स्तेनादयो वक्ष्यमाणाः । तैः सह न कश्चिदपि व्यवहारः कर्तव्यः । तत्र मनुः—संवत्सरेण पतति पतितेन सहाऽऽचरन् । याजनाध्यापनाद्यौनान्नतु यानाशना· दिति । यानादिभिः संवत्सरेण पतति याजनादिभिस्तु सद्य एव ॥ ३५ ॥

तथाऽपपात्रैः ॥ ३६ ॥

अपपात्राश्चण्डालादयः । तैश्च संव्यवहारो न कर्तव्यः ॥ ३६ ॥

अथ पतनीयानि ॥ ३७ ॥

द्विजाति कर्मभ्यो हानिः पतनं तस्य निमित्तानि कर्माणि वक्ष्यन्ते ॥ ३७ ॥

स्तेयमाभिशस्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुः पितुरिति योनिसंबन्धे सहापत्ये स्त्रीगम· नम् सुरापानमसंयोगसंयोगः ॥ ३८ ॥

स्तेयं सुवर्णचौर्यम् । आभिशस्यं ब्रह्महत्या । ब्राह्मणमात्रं च हत्वाऽभिशस्त इति वक्ष्यमाणत्वात् । पुरुषवधो मनुष्यजातिवधः । तेन स्त्रीवधोऽपि गृह्यते । ब्रह्मोज्झं संसर्गः । भावे घञ् । छान्दसो लिङ्गव्यत्ययः । ब्राह्मणेन वेदस्याधीतस्य नाशनम् । औषधादिप्रयोगेण गर्भशातनं गर्भवधः । मातुर्योनिसंबन्धे मातृष्वस्रादौ मातुलादौ, पितुर्योनिसंबन्धे पितृष्वस्रादौ सहापत्येऽपत्यसहिते स्त्रीगमनं मातृष्वसृगमनं तत्सुताग·

मनं पितृष्वसृगमन तत्सुतागमनं मातुलसुतागमनं चेत्यर्थः । गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा । तस्याः पान सुरापानम् । असंयोगाः संयोगानर्हाः पतितादयः । तैः सयोग एकगृहवासादि असंयोगसयोगः । एतानि पतनीयानि ॥ ३८ ॥

**गुर्वीं सखीं(खिं) गुरुसखीं(खिं) च गत्वाऽन्याश्च परतल्पाम् ॥ ३९ ॥**

छान्दसो ह्रस्वः । मात्रादीना सखीं, गुरुसखीं पित्रादीना सखीम् । किम् । पततीत्युत्तरत्र श्रुतमपेक्षते । अन्याश्च परतल्पान्गत्वा पतति । तल्पशब्देन शयनवाचिना दारा लक्ष्यन्ते ॥ ३९ ॥

**नागुरुतल्पे पततीत्येके ॥ ४० ॥**

गुरुदारव्यतिरेकेण परतल्पगमने पातित्य नास्तीत्येके मन्यन्ते । यद्यपि सामान्येन शब्देन शयनवाचिना दारा लक्ष्यन्ते तथाऽपि प्रायश्चित्ते गुरुलघुभावो द्रष्टव्यः ॥४०॥

**अधर्माणा तु सततमाचारः ॥ ४१ ॥**

तुश्चार्थे । उक्तव्यतिरिक्तानामप्यधर्माणा सततमाचारः पतनहेतुः ॥ ४१ ॥

**अथाशुचिकराणि ॥ ४२ ॥**

अशुचिं पुरुषं कुर्वन्तीत्यशुचिकराणि कर्माणि वक्ष्यन्ते ॥ ४२ ॥

**शूद्रगमनमार्यस्त्रीणाम् ॥ ४३ ॥**

त्रैवर्णिकस्त्रीणा शूद्रगमनमशुचिकरम् ॥ ४३ ॥

**प्रतिषिद्धानां मांसभक्षणम् ॥ ४४ ॥**

येषा मास प्रतिषिद्ध तेषा मासाना भक्षणमशुचिकरम् ॥ ४४ ॥

तत्रोदाहरणम्—

**शुनो मनुष्यस्य कुक्कुटसूकराणां क्रव्यादसाम् ॥ ४५ ॥**

प्रतिषेधः । अदसोऽद्रो मावेऽसुन् । क्रव्यमामिषमदन येषा ते क्रव्यादसः । केवलमासवृत्तयो गृध्रादयः ॥ ४५ ॥

**मनुष्याणा मूत्रपुरीषप्राशनम् ॥ ४६ ॥**

मूत्रपुरीषग्रहण तादृशस्य रेतसोऽप्युपलक्षणम् ॥ ४६ ॥

**शूद्रोच्छिष्टमपपात्रागमनं चाऽऽर्याणाम् ॥ ४७ ॥**

शूद्रोच्छिष्ट भुक्तमार्याणामशुचिकरम् । अपपात्रा अतिनीचस्त्रियस्तासां च गमनम् ॥ ४७ ॥

**अपि पतनीयान्येतानि भवन्तीत्येके ॥ ४८ ॥**

यान्येतान्यशुचिकराण्यनुक्रान्तानि तान्यपि पतनीयानि भवन्तीत्येके ॥ ४८ ॥

अतोऽन्यानि दोषफलान्यशुचिकराणि ॥ ४९ ॥

उक्तव्यतिरिक्तानि दोषफलानि कर्माणि दुष्प्रतिग्रहहिंसादीन्यशुचिकराणि भवन्ति ॥ ४९ ॥

दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समा-
ख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु ॥ ५० ॥(ख० २२)।

पतितस्य दोष परैरविदित बुद्ध्वा परेभ्यः समाख्याते पूर्वो न स्यात् । परेभ्यः पूर्वं नाऽऽचक्षीत । किंतु स्वय धर्मकृत्येषु वर्जयेत् । यथा परा न जानन्ति । अन्यथा दोषवान् ॥ ५० ॥ ( ख० २२ ) ।

क्षत्रियꣳ हत्वा गवाꣳ सहस्रं वैरयातनार्थं दद्यात् ॥ ५१ ॥

क्षत्रिय हत्वा गवा सहस्रं ब्राह्मणेभ्यो दद्यात् । किमर्थम् । वैरयातनार्थम् । वैरं पापं तस्य यातनं निर्हरण तदर्थम् ॥ ५१ ॥

शतं वैश्ये दश शूद्रे ॥ ५२ ॥

वैश्ये हते शूद्रे हत इति । प्रकरणाद्वा इति च । ऋषभश्चात्राधिकः सर्वत्र प्राया-श्चित्तार्थमिति वक्ष्यति । तेन प्रायश्चित्तरूपमिदं दानम् । प्रायश्चित्तं पापक्षयार्थम् । तत्किमर्थं वैरयातनार्थमित्युच्यते । केचिदाहु.—नाभुक्तं क्षीयते कर्म पुण्यमपुण्यं च । प्रायश्चित्त नैमित्तिक कर्मान्तरम् । यथा गृहदाहादौ क्षामवत्यादय इति । तन्निराकर्तु-मुक्तम् । अपर आह यो येन हन्यते स हतो म्रियमाणस्तस्मिन्वैरं करोति । अपि नामैनं जन्मान्तरेऽपि वध्यासमिति । तस्य वैरस्य यातनार्थमिदमिति । प्रायश्चित्ता-र्थमपि वक्ष्यमाणेन सिद्धमिति ॥ ५२ ॥

ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थम् ॥ ५३ ॥

सर्वेष्वेतेषु निमित्तेषु ऋषभोऽधिको देयः । न केवल गा एव । इदं प्रायश्चित्तत्रयं मानवेन समानविषयम् । यथाऽऽह—

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
ऋषभैकसहस्रा गा दद्याच्छुद्ध्यर्थमात्मनः ॥
त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् ।
वसन्दूरतरे ग्रामाद्वृक्षमूलनिकेतनः ॥
एतदेव चरेदब्द प्रायश्चित्तं द्विजोत्तमः ।
प्रमाप्य वैश्यवृत्तस्थं दद्याच्चैकशत गवाम् ॥

एतदेव व्रतं कृत्स्नं षण्मासं शूद्रहा चरेत् ।
ऋषभैकादशा वाऽपि दद्याद्विप्राय गाः शतम् ।। इति ।। ९३ ।।

**स्त्रीषु चैतेषामेवम् ॥ ५४ ॥**

एतेषा तु क्षत्रियादीना स्त्रीषु च हतास्वेवमेव प्रायश्चित्त यथा पुरुषेषु ।। ९४ ।।

**पूर्वयोर्वर्णयोर्वेदाध्याय[१] हत्वा सवनगतं चाभिशस्तः ॥ ५५ ॥**

प्रकृतेषु यौ पूर्वौ वर्णौ क्षत्रियवैश्यौ तयोर्वेदाध्यायोऽधीतवेदस्तं हत्वाऽभिशस्तो भवति । अभिशस्त इति ब्रह्मघ्नोऽभिधानम् । सवनगतं तयोरेव वर्णयोः सवनगत. । सवनशब्देन न प्रात.सवनादीन्युच्यन्ते । नापि यागमात्रम् । किं तर्हि । सोमयागः । तत्र यो दीक्षित. स सवनगतः । ब्राह्मणो वा एष जायते यो दीक्षित इति दर्शनात् । त च हत्वाऽभिशस्तो भवति । पूर्वयोर्वर्णयोरिति किम् । ब्राह्मणे मा भूत् । इष्यते ब्राह्मणे वक्ष्यते च ब्राह्मणमात्रं चेति । एव तर्हि शूद्रे मा भूत् । न शूद्रो वेदाध्यायः सवनगतो भवति । इदं तर्हि प्रयोजनम् । पूर्वयोर्वर्णयोरेव यथा स्यात् । तयोरेवानुलोमौ सवर्णाभ्रष्टौ तयोर्मा भूदिति । तेनान्ये वर्णधर्मा अनुलोमानामपि भवन्ति ॥ ९५ ।।

**ब्राह्मणमात्रं च ।। ५६ ।।**

हत्वाऽभिशस्तो भवति । मात्रग्रहणान्नाभिजनविद्यासंस्कारापेक्षा ॥ ९६ ॥

**गर्भं च तस्याविज्ञानम् ।। ५७ ।।**

तस्य ब्राह्मणमात्रस्य गर्भं स्त्रीपुंनपुसकभेदेनाविज्ञातं हत्वाऽभिशस्तो भवति ।। ९७ ।।

**आत्रेयीं च स्त्रियम् ।। ५८ ।।**

ऋतुस्नाताऽऽत्रेयीति वसिष्ठः । तस्येति वर्तते । आत्रेयीं ब्राह्मणस्त्रिय हत्वा ब्रह्महा भवति । सम्भवत्यस्या ब्राह्मणगर्भ इति । अत्रिगोत्रजा वाऽऽत्रेयीत्यन्ये ।। ९८ ।।

**तस्य निर्वेषः ।। ५९ ।।**

तस्य सर्वप्रकाराभिशस्तस्य निर्वेषः प्रायश्चित्तमुच्यते ॥ ९९ ॥

**अरण्ये कुटिं कृत्वा वाग्यतः शवशिरोध्वजोऽर्ध-**
**शाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य ॥ ६० ॥**

कृत्वेति वचनान्न परकृता कुटी ग्राह्या । वाग्यता नियता येन स वाग्यतो वाच्यमः । आहिताग्न्यादिषु दर्शनाद्यतशब्दस्य परनिपात. । शवशिरो ध्वजो यस्य स शवशिरोध्वजः । सलोपः कचिच्छान्दसः । स्वव्यापादितस्य ब्राह्मणस्य शिरो ध्वजदण्डाग्रे प्रोतं कृत्वेत्यर्थ. । यस्य कस्यचिच्छिर इत्यन्ये । शाणस्य विकार. शाणी पटी ।

[१] ग 'शिरध्व'।

तस्या अर्धमर्धशाणी । तस्य(स्या॰) पक्षमर्धशाणीपक्षम् । आयामविस्तारयोरुभयोरप्यर्धमघोनाभ्युपरिजानु च यथा भवति तथाऽऽच्छाद्य तावन्त प्रदेशमाच्छाद्य । सापेक्षत्वाद्ग्रामे तिष्ठेतेति वक्ष्यमाणेन संबन्धः ॥ ६० ॥

मध्ये कियान् विधिः—

**तस्य पन्था अन्तरा वर्त्मनी ॥ ६१ ॥**

तस्य ग्राम प्रविशतो वर्त्मनी अन्तरा शकटादेर्वर्त्मनोर्मध्ये पन्था वेदितव्यः । अपर आह—यत्र रथ्यादावुभयोः पथोर्वर्त्मनी भवतस्तत्र तयोर्मध्ये न सूकरादिपथेन संचरेदिति ॥ ६१ ॥

**दृष्ट्वा चान्यमुत्क्रामेत् ॥ ६२ ॥**

अन्यमायान्त दृष्ट्वा पथ उत्क्रामेत् । तत्र कौण्डिन्यः—पञ्चारत्नीति रथपथात् । चत्वारो हस्तिपथात् । द्वौ क्षुद्रपशुमनुष्या[णा]मिति । तेन मनुष्येषु द्वौ हस्तावुत्क्रामेदिति ॥६२॥

**खण्डेन लोहितकेन शरावेण ग्रामे प्रतितिष्ठेत ॥ ६३ ॥**

अर्धमात्रं खण्डम् । लोहितं मनाक् प्रीतम् । एवंभूत शरावं भिक्षापात्र गृहीत्वा ग्रामे प्रतितिष्ठेत ग्रामं गच्छेत् ॥ ६३ ॥

**कोऽभिशस्ताय भिक्षामिति सप्तागाराणि चरेत्**
**सा वृत्तिः ॥ ६४ ॥**

अभिशस्तो ब्रह्महा । तस्मै मह्य को धार्मिको भिक्षा ददातीत्युच्चैर्ब्रुवाणः सप्तागाराणि चरेत् । सप्तग्रहणमधिकनिवृत्त्यर्थम् । द्वित्रादिष्वेवागारेषु यदि पर्याप्त लभ्यते तदा तावत्येव सा वृत्तिः । सप्तस्वगारेषु यात्राया यावल्लभ्यते सैव वृत्तिरपर्याप्ताऽपि ॥ ६४ ॥

**अलब्धोपवासः ॥ ६५ ॥**

यदि सप्तस्वगारेषु न किंचिल्लभ्यते तदोपवास एव तस्मिन्नहनि ॥ ६५ ॥

**गाश्च रक्षेत् ॥ ६६ ॥**

एव प्रायश्चित्तं कुर्वन्नहरहर्गाश्च रक्षेत् ॥ ६६ ॥

**तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेऽर्थः ॥ ६७ ॥**

तासां गवा निष्क्रमणसमये प्रवेशनसमये द्वितीयो ग्रामेऽर्थः प्रयोजनम् । भिक्षार्थं नान्यदा ग्रामं प्रविशेदित्युक्तं भवति ॥ ६७ ॥

**द्वादश वर्षाणि चरित्वा सिद्धः सद्भिः संप्रयोगः ॥ ६८ ॥**

एवं द्वादश वर्षाणि व्रतमेतच्चरित्वा सद्भिः संप्रयोगः कर्तव्यः । सद्भिः सह संप्रयुज्यते येन विधिना स कर्तव्यः । स च शिष्टाचारे शास्त्रान्तरे च सिद्धः । स उच्यते—कृतप्रायश्चित्तः स्वहस्ते यवसं गृहीत्वा गामाह्वयेत् । अन्यथा नेति ॥ ६८ ॥

**आजिपथे वा कुटिं कृत्वा ब्राह्मणगवीरुपजिहीर्षमाणो वसेत्त्रिः प्रतिराद्धोऽपजित्य वा मुक्तः ॥ ६९ ॥**

संग्रामेण जेतव्या दस्यवो येन पथा ग्रामं प्रविश्य गवादिकमपहृत्यापसरन्ति स आजिपथः । तस्मिन्वा कुटिं कृत्वा वसेत् । ब्राह्मणगव्य इति पाठे वा छन्दसीति पूर्वसवर्णाभावे यणादेशः । ब्राह्मणगवीरुपजिहीर्षमाणो दस्यूनवजित्य प्रत्याहर्तुमिच्छन् । एवं दस्युभिर्ह्रियमाणगवादिकमुद्दिश्य तैर्युद्धं कुर्वंस्त्रिः प्रतिराद्धस्तैरवजितो विजित्य वा तान्गवादीन्प्रत्याहृत्य ब्राह्मणेभ्यो दत्त्वा मुक्तो भवति तस्मादेनसः । द्वादशवार्षिकप्रत्यावृत्तस्येदम् । एवमुत्तरमपि ॥ ६९ ॥

**आश्वमेधिकं वाऽऽवभृथमवेत्य मुच्यते ॥ ७० ॥**

अथवाऽऽश्वमेधावभृथे स्नात्वा मुच्यते ॥ ७० ॥

**धर्मार्थसंनिपातेऽर्थग्राहिण एतदेव ॥ ७१ ॥**

धर्मस्याग्निहोत्रादेरर्थस्य च युगपत्संनिपातो यत्र तत्रोभयानुसग्रहासंभवे धर्मलोपेन योऽर्थं गृह्णाति तस्याप्येतदेव प्रायश्चित्तम् । अथवा यो धर्मं हित्वाऽर्थहेतोः कौटसाक्ष्यादि करोति तद्विषयमेतत् । अत्र गौतमः—कौटसाक्ष्यं राजगामि पैशुनं पातकसमानीति । मनुरपि—

> अनृतं च समुत्कर्षे राजगामि च पैशुनम् ।
> गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ इति ॥ ७१ ॥

**गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् ॥ ७२ ॥**

गुरुः पित्राचार्यादिः । श्रोत्रियोऽधीतवेदः । स यदि कर्मसमाप्तौ भवति सोमान्तानि कर्माणि समाप्तानि यस्य स एवमुच्यते । तौ हत्वैतेन विधिनोत्तमादुच्छ्वासात् । उत्तम उच्छ्वासः प्राणवियोगः । तस्माच्चरेत् ॥ ७२ ॥

**नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते ॥ ७३ ॥**

अश्वमेधावभृथादिषु समवत्स्वपस्यास्मिँल्लोकेऽस्मिञ्जीविते प्रत्यापत्तिः शुद्धिर्नास्तीत्यर्थः ॥ ७३ ॥

**कल्मषं तु निर्हण्यते ॥ ७४ ॥**

मृतस्य कल्मषं निर्हण्यते । तेन पुत्रादिभिः संस्कारादि कर्तव्यमिति भावः । अन्ये पूर्वसूत्र तन्निवृत्त्यर्थं मन्यन्ते । पुत्रादिभि. पित्रादिभावेन( ना )सबन्ध इति ॥७४॥

**गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत् ॥ ७५ ॥**

गुरुरत्र पिता नाऽऽचार्यादि. । तल्पशब्देन शयनबोधिना भार्या लक्ष्यते । साक्षाज्जननी न तत्पत्नी । तां गत्वा सवृषण साण्ड शिश्न परिवास्य क्षुरादिना छित्वाऽञ्जलावाधाय दक्षिणा दिशं व्रजेत् । अनावृत्तिम् । आवृत्तिर्न क्रियते यस्या ता दिशमनावर्तमानो गच्छेदिति । अथ ये दक्षिणस्योदधेस्तीरे वसन्ति ते कथम् । तेऽपि यावद्देश गत्वोदधिमेव प्रवेक्ष्यन्ति । मरण ह्यत्र विवक्षितम् । अत्र सवर्तः—

पितृदार समारुह्य मातृवर्जं नराधमः ।
भगिनीं मातुराप्ता वा स्वसार चान्यमातृजाम् ॥
एता गत्वा स्त्रियो मोहात्तप्तकृच्छ्र समाचरेत् ॥ इति ।

नारदस्तु—माता पितृष्वसा स्वसूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमा गच्छन्गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तन तत्र नान्यो दण्डो विधीयते ॥ इति ॥ ७५ ॥

**ज्वलितां वा सूर्मिं परिष्वज्याऽऽत्मानं समाप्नुयात् ॥ ७६ ॥**

आयसी ताम्रमयी वा स्त्रीप्रतिकृतिरत्र सूर्मि· । ता ज्वलितामग्नौ तप्ता परिष्वज्याऽऽत्मानं समाप्नुयान्म्रियेत ॥ ७६ ॥

**कृच्छ्रं संवत्सरं वा चरेत् ॥ ७७ ॥**

अथवा संवत्सरमेकं नैरन्तर्येण कृच्छ्रं चरेत् ॥ ७७ ॥

**सुरापोऽग्निस्पर्शां सुरां पिबेत् ॥ ७८ ॥**

सुरापोऽग्निस्पर्शामिति ज्वलिता सुरां पिबेत् । तथा दग्धकायः शुध्यति ॥ ७८ ॥

स्तेनः प्रकीर्णकेशोऽꣳसे मुसलमाधाय ॥ ७९ ॥ (ख० २३ ) ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे(धर्मसूत्रापरपर्याये)षड्विंशप्रश्ने षष्ठः पटलः ।

स्तेनो ब्राह्मणस्वामिकसुवर्णपरिमितसुवर्णहारी । स स्वीये स्कन्धे मुसलमाधायाऽऽयसं खादिरं वा। आचक्षीतेत्यनेन सबन्ध. ॥ ७९ ॥ ( ख० २३ ) ॥

इति श्रीमन्महादेवदीक्षितविरचितायां हिरण्यकेशिधर्मप्रश्नव्याख्याया मुज्ज्वलाया वृत्तौ षष्ठ. पटलः ॥ ६ ॥

---

अथ सप्तम पटल ।

राजानं गत्वा कर्माऽऽचक्षीत तेनैनꣳ हन्याद्वधे मोक्षः ॥ १ ॥

राजानं प्रति गत्वा कर्माऽऽचक्षीतैवकर्माऽस्मि शाधि मामिति । स तेन मुसलेनैनं हस्तेन हन्यात् । यथा मृतो भवति । वधे मोक्षः ॥ १ ॥

अनुज्ञातेऽनुज्ञातारमेनः स्पृशति ॥ २ ॥

यदि राजा दयादिना तमनुजानीयादाज्ञापयति तदा तमनुज्ञातारं राजानमेव तदेनः स्पृशति ॥ २ ॥

उत्तरमृत्वग्निं वा प्रविशेत् तीक्ष्णं वा तप आयच्छेत् ॥ ३ ॥

तीक्ष्णं वा तपो महाकारा(कृच्छ्रा)दि तद्वाऽऽयच्छेदावर्तयेत् ॥ ३ ॥

भक्तापचयेन वाऽऽत्मानꣳ समाप्नुयात् ॥ ४ ॥

भक्तमन्नं तस्यापचयो ह्रासः । प्रथमे दिवसे यावन्तो ग्रासास्त एकेन न्यूना द्वितीये । एवं तृतीयादिषु । अथैकस्माद्ग्रासात्, तत्रापि यदि न समाप्तिस्ततस्तत्रैव परिमाणापचयः कर्तव्यः । एव भक्तापचयेनाऽऽत्मान समाप्नुयात्समापयेत् ॥ ४ ॥

कृच्छ्रꣳ संवत्सरं वा चरेत् ॥ ५ ॥

एषामेनःसु गुरुष गुरूणि लघुषु लघूनीति व्यवस्थया द्रष्टव्यम् ॥ ५ ॥

अथाप्युदाहरन्ति ॥ ६ ॥

अस्मिन्नेव विषये पुराणश्लोकमप्युदाहरन्तीत्यर्थः ॥ ६ ॥

स्तेयं कृत्वा सुरां पीत्वा गुरुदारं च गत्वा
ब्रह्महत्यामकृत्वा चतुर्थकाला मितभोजिनः
स्युरपोऽभ्यवेयुः सवनान्यनुकल्पयेत्स्थानास-
नाभ्या विहरन्त एते त्रिभिर्वर्षैरप पापं नुदन्ते॥७॥

ब्रह्महत्याव्यतिरिक्तानि स्तेयादीनि कृत्वा चतुर्थकालाः। चतुर्थो भोजनकालो येषां ते, यथाऽद्य दिवा भुञ्जते श्वो रात्राविति तथोक्ताः। तदाऽपि मितभोजिनोऽमिष्टाशिनोऽपोऽभ्यवेयुर्भूमिगतास्वप्सु स्नानं कुर्युः। सवनान्यनुकल्पयेत्। यथा सवनानि प्रातःसवनादीन्यनुकल्पानिन्यनुस्मृतानि भवन्ति। त्रिषवणमित्यर्थः। तिष्ठेयुरहनि रात्रावासीरन्। एवं स्थानासनाभ्यां विहरन्तः कालं क्षिपन्तः। एवं त्रिभिर्वर्षैस्तत्पापमपनुदन्ते ॥ ७ ॥

तेन कल्पेन धनलाभे वधे च संवत्सरं वैरमणं चरित्वा
त्रयाणामेकशुचयो भवन्ति ॥ ८ ॥

अत्रैका पङ्क्तिस्त्रुटिता ॥ ८ ॥

प्रथमं वर्णं परिहाप्य प्रथमं वर्णꣳ हत्वा संग्रामं गत्वाऽ-
वतिष्ठेत तत्रैनꣳ हन्युः ॥ ९ ॥

प्रथमवर्णो ब्राह्मणः। तं हत्वा संग्रामं गत्वा सेनयोर्मध्येऽवतिष्ठेत। किं सर्वमेत्याह। प्रथमं वर्णं परिहाप्य ब्राह्मणवर्जमितरो वर्णः क्षत्रियादिः। तत्र स्थितं सैनिका हन्युः। अघ्नन्तस्त एनं हिंस्युर्यथा राजा स्तेनम्। स मृतः शुध्यति ॥ ९ ॥

अपि वा लोमानि त्वचं माꣳसमिति हावयित्वाऽग्निं प्रविशेत् ॥ १० ॥

अनन्तरोक्तविषये प्रायश्चित्तान्तरम्। इतिशब्द उपलक्षणार्थः। आत्मनो लोमान्युत्कृत्य पुरोहितेन हावयित्वा होमं कारयित्वा पश्चात्स्वयं तस्मिन्नग्नौ प्रविशेत्। मृतः शुध्यति। तत्राग्निमुपसमाधाय जुहुयात्। लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासये स्वाहा। त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वासये स्वाहा। लोहितेन० मृत्युं वा० हा। स्नावानि० मृत्यु० लोहित मृत्यो० मि स्नावभिर्मृ०हा। मज्जानि मृत्यो० मज्जभिर्मृत्युं०हा। मेदो मृत्योर्जुहोमि मेदसा मृ० हा। इत्येते मन्त्रा वसिष्ठेन पठिताः ॥ १० ॥

**वायसप्रचलाकबर्हिणचक्रवाकहंसभासनकुलमण्डूकडेरीकाश्वहिंसायां शूद्रवत्प्रायश्चित्तम् ॥ ११ ॥**

वायसः काकः । प्रचलाकः कामरूपी कृकलासः । बर्हिणो मयूरः । चक्रवाको मिथुनचरो रात्रौ विरही । हंसो मानसवासी । भासो गृध्रविशेषः । नकुलमण्डूकश्वानः प्रसिद्धाः । डेरीका गन्धमूषिका । एतेषां समुदितानां वधे शूद्रवत्प्रायश्चित्तम् । प्रत्येकवधेऽनुकल्प्यम् । केचित्प्रत्येकवध एतदित्याहुः ॥ ११ ॥

**धेन्वनडुहोश्चाकारणात् ॥ १२ ॥**

धेनुः पयस्विनी गौः । अनड्वान्—अनोवहनयोग्यो बलीवर्दः । तयोः कारणमन्तरेण हिंसायां शूद्रवत्प्रायश्चित्तं कार्यम् । कारणं कोपो मांसेच्छा वा । तेन विनाऽबुद्धिपूर्वमित्यर्थः । बुद्धिपूर्वे तु गां च दत्त्वा वैश्यवदित्यादि स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥ १२ ॥

**धुर्यवाहप्रवृत्तौ चेतरेषां प्राणिनाम् ॥ १३ ॥**

धुरं वहतीति धुर्यो बलीवर्दः । तेन वोढुं शक्यन्ते धुर्यवाहाः । तावत्सु हिंसायां प्रवृत्तौ सत्यामितरेषां प्राणिनां केवलं प्राणा एव येषां नास्थीनि तेषां हिंसायां शूद्रवत्प्रायश्चित्तमिति । अत्र गौतमः—अस्थिमतां सहस्रं हत्वाऽनस्थिमतामनडुद्भारं चेति ॥ १३ ॥

**अनाक्रोश्यमाक्रुश्यानृतं चोक्त्वा त्रिरात्रमक्षीरवलणं भोजनम् ॥ १४ ॥**

यो न कथचनाऽऽक्रोशमर्हति स पित्राचार्यादिरनाक्रोश्यः । तमाक्रुश्यानृतं चोक्त्वा पातकोपपातकवर्ज्यं त्रिरात्रं क्षीरादि भोजने वर्जयेत् । क्षीरग्रहणेन विकाराणां दध्यादीनामपि ग्रहणमित्यर्थः । अक्षारेति पाठे क्षारं यद्भुज्यमानं परस्य स्वस्य वा जिह्वां द्रावयति तत् ॥ १४ ॥

**शूद्रस्य सप्तरात्रमभोजनम् ॥ १५ ॥**

शूद्रस्त्वनन्तरोक्तविषये सप्तरात्रमुपवसेत् ॥ १५ ॥

**स्त्रीषु चैतेषामेवम् ॥ १६ ॥**

क्षत्रियं हत्वेत्यादिष्वनृतवदनान्तेषु नैमित्तेषु यानि प्रायश्चित्तान्युक्तानि तानि स्त्रीणामप्येवमेव कर्तव्यानि । एतच्चत्वारो वर्णा इति जात्यभिधानादेव प्राप्तं सन्नियमार्थमुच्यते । अ । ऊर्ध्वं पुरुषस्यैव न स्त्रीणामिति । अपर आह—जात्यभिधानादेव सिद्धेऽतिदेशार्थं वचनम् । अतिदेशेषु चार्धं प्राप्यत इति स्मार्तो न्यायः । तेन स्त्रीणामप्यर्धप्राप्त्यर्थं वचनमिति । तथा च भार्गवः—

अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः ।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च ॥ इति ॥ १६ ॥

**येष्वाभिशस्त्यं(स्त्यं) तेषामेकाङ्गं छित्त्वाऽप्राणहिंसायाम् ॥ १७ ॥**

येषु हतेषु सवनगतं चाभिशस्तमित्यादिनाऽभिशस्तत्वमुक्तं तेषामेकाङ्गं छित्त्वा शूद्रवत्प्रायश्चित्तं कुर्यात् । अप्राणहिंसाया यदि च्छेदनेन तस्याङ्गस्य शक्तिर्न भज्यते ॥ १७ ॥

**अनार्यत्वपैशुनप्रतिषिद्धाचारेष्वभक्ष्याभोज्यापेया न्नप्राशने शूद्रायां च रेतः सिक्त्वाऽयोनौ च दोषवच्च कर्माभिसंधिपूर्वं कृत्वाऽनभिसंधिपूर्वं वाऽ-ब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिर्वाऽन्यैर्वा पवि-त्रैर्यथा कर्माभ्यासः ॥ १८ ॥**

आर्याणां भाव आर्यं तद्यस्मिन्नाचारेऽस्ति तदार्यत्वम् । मत्वर्थीयो वप्रत्ययः । ततोऽन्यदनार्यत्वमसत्यभाषणादि । पैशुनं परदोषकथनं राजगामि । प्रतिषिद्धाचारः ष्ठीवनमैथुनयोः कर्मापो वर्जयेदित्यादेरनुष्ठानम् । अभक्ष्यं वृथा कृशरादि । अभोज्यं केशकीटाद्युपहतमन्नादि । अपेयमनिर्दशाया गोः क्षीरादि । एतेषां प्राशने शूद्रायां वैश्यात्प्रभृतौ रेतः सिक्त्वाऽयोनौ च जलादौ रेतः सिक्त्वा दोषवच्च कर्म श्रौतमाभिचारिकमभिसंधिपूर्वं बुद्धिपूर्वं कृत्वाऽनभिसंधिपूर्वं वा परपीडादिकं कृत्वाऽब्लिङ्गाभिरापो हि ष्ठा मयो भुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिरप उपस्पृशेत् । तूष्णीं प्रथमं स्नात्वा पश्चादेतैर्मन्त्रैर्मार्जनं कुर्यात् । वारुणीभिर्वा इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्न इत्येतैर्मन्त्रैरन्यैर्वा पवित्रैः पवमानः सुवर्जन इत्येतेनानुवाकेन शुद्धवतीभिस्तरत्समन्दीत्यादिकेन यथा कर्माभ्यासस्तथाऽप उपस्पृशेत् । अभ्यासे न रहस्यप्रायश्चित्तमित्येक आहुः ॥ १८ ॥

**गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत ॥ १९ ॥**

यो ब्रह्मचारी स्त्रियमुपेयात्सोऽवकीर्णी गर्दभेन निर्ऋतिं यजेत् । पाकयज्ञेन स्थालीपाकविधानेन । अत्र मनुः—

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥ इति ।

हारीतस्तु स्त्रीष्ववकीर्णी निर्ऋत्यै चतुष्पथे गर्दभपशुना यजेत पाकधर्मेण । भूमौ पशुपुरोडाशश्रपणमवदानैः प्रचर्य जुहोति । कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा । कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहा ॥ १९ ॥

तस्य शूद्रः प्राश्नीयात् ॥ २० ॥

तस्य गर्दभस्य सर्पिष्मद्धविरुच्छिष्टं शूद्रः प्राश्नीयात् । तेन ब्राह्मणं विद्यावन्तं परिवेवेष्टीत्यस्यापवादः ॥ २० ॥

मिथ्याधीतप्रायश्चित्तम् ॥ २१ ॥ ( ख० २४ ) ।

नियमातिक्रमेणाधीतं मिथ्याधीतम् । तद्दोषनिर्हरणाय प्रायश्चित्तं वक्ष्यते ॥ २१ ॥ ( ख० २४ ) ।

संवत्सरमाचार्यहिते वर्तमानो वाचं यच्छेत्स्वाध्याय एवोत्सृजेद्वाचमाचार्य आचार्यदारे भिक्षाचर्ये च ॥ २२ ॥

आचार्यहिते वर्तमानो भूत्वा संवत्सरं वाचंयमः स्यात् । स्वाध्यायादिष्वेव वाचमुत्सृजेत् । आचार्ये तं प्रति कार्यनिवेदने । एवमाचार्यदारे भिक्षाचरणे तत्र भवति भिक्षां देहीति । अस्मादेव ज्ञायतेऽसमावृत्तविषयमेतदिति ॥ २२ ॥

एवमन्येष्वपि दोषवत्सु कर्मस्वपतनीयेषूत्तराणि यानि वक्ष्यामः ॥२३॥

यथा मिथ्याधीतस्येदं प्रायश्चित्तमुत्तराणि यानि वक्ष्यामः प्रायश्चित्तानि तान्यन्येष्वपि । अपिशब्दान्मिथ्याधीतेष्वपि । दोषवत्सु पतनीयव्यतिरिक्तेषु कर्मसु येष्वाहत्य प्रायश्चित्तं नोक्तं तद्विषयाणि द्रष्टव्यानि ॥ २३ ॥

काममन्युभ्यां वा जुहुयात्कामोऽकार्षीन्मन्युरकार्षीदिति जपेद्वा ॥ २४ ॥

स्वाहान्ताभ्यामाज्यद्रव्यम् । जपेद्वा । अस्मिन्पक्षे न स्वाहाकारः । केचित्तु कामाय स्वाहा मन्यवे स्वाहेति होममिच्छन्ति । जपपक्षे तु सूत्रोपदिष्टौ मन्त्राविति । दोषाभ्यासानुरूपं च जपहोमयोरावृत्तिः ॥ २४ ॥

पर्वणि वा तिलभक्ष उपोष्य वा श्वोभूते म(हा)हानदमुदकमुपस्पृश्य सावित्रीं प्राणायामं सहस्रकृत्व आवर्तयेदप्राणायामशो वा ॥ २५ ॥

पर्वणि पौर्णमास्याममावास्यायां वा तिलानेव भक्षयति नान्यदोदनादिकमिति तिलभक्षः । महानदीभवमुदकमुपस्पृश्य स्नात्वा प्राणायामं प्राणानायम्य प्राणायामेन । एकस्मिन्प्रा

णायामे यावत्कृत्व आवर्तयितुं शक्यं तत्र तावत्कृत्व आवर्तयेत् । एवमा सहस्रावृत्तेः प्राणायामावृत्तिः । आप्राणायामशो वा ॥ २५ ॥

**श्रावण्यां पौर्णमास्यां पर्वणि वा तिलभक्ष उपोष्य वा श्वोभूते म(मा)हानदमुदकमुपस्पृश्य सावित्र्या समित्सहस्रमादध्याज्जपेद्वा ॥ २६ ॥**

गिरिप्रभवा समुद्रगा महानदी । तत्र भवं म(मा)हानदम् । सहस्रं यज्ञियस्य वृक्षस्य । आदध्यादिति वचनान्न होमधर्मः स्वाहाकारः ॥ २६ ॥

**इष्टियज्ञक्रतून्वा पवित्रार्थानाहरेत् ॥ २७ ॥**

पवित्रार्थाः शुद्धवर्था मृगाराद्या इष्टयः । यज्ञक्रतवः सोमयागाग्निष्टुदादयः । तान्येतानि षट् प्रायश्चित्तानि । एतेषु गुरुषु गुरूणि लघुषु लघूनि ॥ २७ ॥

**अभोज्यं भुक्त्वा नैष्पुरीष्यम् ॥ २८ ॥**

अभोज्यस्य मार्जारादिमांसस्य भक्षणे निष्पुरीषभावः कर्तव्यः । यावदुदरं निष्पुरीषं भवति तावदुपवस्तव्यम् ॥ २८ ॥

कियता कालेनावाप्यते तदाह—

**सप्तरात्रेणावाप्यते ॥ २९ ॥**

सप्तरात्रमुपवसेदित्येव सिद्धे नैष्पुरीष्यवचनाद्येषा त्रिरात्रेणैव तदवाप्यते तेषां तावतैव शुद्धिः । तथा च गौतमः—अभोज्यभोजने निष्पुरीषभावस्त्रिरात्रमभोजनं सप्तरात्रं वेति ॥ २९ ॥

**हेमन्तशिशिरयोर्वोभयोः संध्ययोरुदकमुपस्पृशेत् ॥ ३० ॥**

उभयोः संध्ययोः सायं प्रातश्चोदकमुपस्पृशेत् । भूमिगतास्वप्सु स्नानमुद्धृताभिर्वा शीताभिरिति ॥ ३० ॥

**कृच्छ्रद्वादशरात्रं वा चरेत् ॥ ३१ ॥**

द्वादशरात्रसाध्यो व्रतविशेषः कृच्छ्रद्वादशरात्रः ॥ ३१ ॥

तस्य विधिमाह—

**त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किंचनेति कृच्छ्रद्वादशरात्रस्य विधिः ॥ ३२ ॥**

आदितस्त्रिष्वहःसु नक्तं नाश्नीयाद्दिवैव भुञ्जीत । ततस्त्र्यहमदिवाशी रात्रावेव भुञ्जीत न दिवा । ततस्त्र्यहमयाचितमेव भुञ्जीत । याच्ञाप्रतिषेधोऽयम् । तेन स्वद्रव्य-

स्याप्रतिषेध. । ततस्त्र्यहं नाश्नीत किंचन फलादिकमपि । एव कृच्छ्रद्वादशरात्रस्य विधिः । तत्र स्मृत्यन्तरवशाद्धविष्यमन्न ब्रह्मचर्यं स्त्रीशूद्रादिभिरसभाषणम् ।। ३२ ।।

**एवमेवाभ्यस्येत्संवत्सरं स कृच्छ्रसंवत्सरः ॥ ३३ ॥**

एवमेव विधिं संवत्सरं निरन्तरमभ्यस्येत् । स एष कृच्छ्रसंवत्सरो वेदितव्यः । पूर्व· मुक्तं कृच्छ्रसंवत्सर वा चरेदिति ।। ३३ ।।

**अथापरं बहून्यप्यपतनीयानि कृत्वा त्रिभिरनश्न न्पारायणैश्चरितप्रायश्चित्तो भवति ॥ ३४ ॥**

अथापर प्रायश्चित्तमुच्यते । अनश्नन्नेव निरन्तरं त्रीणि पारायणानि । आदित आर· भ्याऽऽपरिसमाप्तेर्वेदस्याध्ययन पारायणम् । बहून्यपि । अपिशब्दात्किं पुनरेकं द्वे वा ।। ३४ ।।

**अनार्यां शयने बिभ्रद्ददद्वृद्धिं कषायपोऽब्राह्मणवदि वन्दित्वा तृणेष्वासीत पृष्ठतप् ।। ३५ ॥**

अनार्यां शूद्रां शयने बिभ्रत्–उपगच्छन् । दददृद्धिं वृद्ध्यर्थं द्रव्यं कुर्वत् । वृद्ध्या· जीव इत्यर्थ· । सुराव्यतिरिक्तकषायो मद्यकषायस्तस्य पाता कषायपः । यश्चाब्राह्मण इव सर्वान्वन्दित्वा स्तौति स सर्वोऽपि तृणेषूदयादारभ्याऽऽसीत यावदस्याऽऽदित्यः पश्चाद्भागे तपति । आदित्ये तपति तदानुगुण्याचरणात्स्वयमेव पृष्ठतपित्युच्यते । अभ्यासेऽभ्यासो यावता शुद्धिं मन्यते ।। ३५ ।।

**यदेकरात्रेण करोति पापं कृष्णवर्णं ब्राह्मणः सेवमानश्चतुर्थकाल उदकाभ्यपा(वा)यी त्रिभिर्वर्षै-स्तदपहन्ति पापम् ॥ ३६ ॥ ( ख० २९ ) ।**

कृष्णवर्णः शूद्रः । तमाज्ञाकरो भूत्वा वृत्त्यर्थं सेवमान· । शिष्टं स्पष्ट गत च । अहन्यहन्यदा शूद्रो मैथुन सेवमान इत्यस्मिन्पक्ष ऋतावुपगमनेऽपत्योत्पत्त्याभिदं द्रष्ट· व्यम्—

वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्या चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥ इति ।। ३६ ।। ( ख० २९ ) ।

**यथाकथाच परपरिग्रहमभिमन्यते स्तेनो ह भव-तीति कौत्सहारीतौ तथा काण्वपुष्कर-सादी ॥ ३७ ॥**

यथाकथाचाऽऽपद्यनापदि वा भूयांसमल्पं वा परपरिग्रहं परस्वमभिमन्यते ममेदमस्त्विति बुद्धौ कुरुते बुद्धौ कृत्वाऽऽदत्त इत्यर्थः । [स] सर्वथा स्तेनो भवतीति कौत्सादयो मन्यन्ते ॥ ३७ ॥

**सन्त्यपवादाः परिग्रहेष्विति वार्ष्यायणिः ॥ ३८ ॥**

वार्ष्यायणिस्तु मन्यते केषुचित्परिग्रहेषु स्तेनस्यापवादाः सन्तीति ॥ ३८ ॥

तानेवोदाहरति—

**शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति ॥ ३९ ॥**

शमी बीजकोशी । तस्यामुष्यन्ते दह्यन्ते कालवशेन पच्यन्त इति शम्योषाः । कोशीधान्यानि माषमुद्गचणकादीनि । युगं वहतीति युग्यः शकटवाही बलीवर्दः । तस्य घासो भक्ष्यं तृणादि युग्यघासः । एत आदीयमाना. स्वामिनो न प्रतिषेधयन्ति । स्वामिन· प्रतिषेधं न कारयन्ति । एतेष्वादीयमानेषु स्वामिनो न प्रतिषेद्धुमर्हन्तीत्यर्थः । स्वयं ग्रहणेऽपि न स्तेयदोष इति यावत् । अत्र स्मृत्यन्तरे विशेषः—

चणकव्रीहिगोधूमयवानां मुद्गमाषयोः ।
अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकोऽध्वनि स्थितै. ॥

मनुस्तु—द्विजोऽध्वग. क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥ इति ॥ ३९ ॥

**अतिव्यवहारो व्यृद्धो भवतीति ॥ ४० ॥**

शम्योषादिष्वतिव्यवहारोऽत्यपहारो व्यृद्धो दुष्टो भवति । अतिमात्रापहारे स्तेयदोषो भवतीत्यर्थ. ॥ ४० ॥

**सर्वत्रानुमतिपूर्वमिति हारीतः ॥ ४१ ॥**

सर्वेषु द्रव्येषु सर्वास्ववस्थासु स्वाम्यनुमतिपूर्वकमेव ग्रहणमिति हारीत आचार्यो मन्यते ॥ ४१ ॥

**न पतितमाचार्यं ज्ञातिं वा दर्शनार्थो गच्छेत् ॥ ४२ ॥**

पतितैः संव्यवहारो न विद्यत इत्युक्तेऽपि पुनरुच्यते-आचार्यादिषु विशेषं वक्ष्यामीति ॥ ४२ ॥

**न चास्माद्भोगानुपयुञ्जीत ॥ ४३ ॥**

अस्मात्पतितादाचार्याज्ज्ञातेर्वा पित्रादेर्भोगान्भोगसाधनानि दायप्राप्तान्यपि नोपयुञ्जीत न गृह्णीयात ॥ ४३ ॥

यदृच्छासंनिपात उपसंगृह्य तूष्णीं व्यतिव्रजेत् ॥ ४४ ॥

यदि पतितैराचार्यादिभिर्यदृच्छासंगतिः स्याद्विधिनोपयातानुपसंगृह्य तूष्णीं तैः सह किंचिदसंभाष्य व्यतिव्रजेन्न क्षणमपि सह तिष्ठेत् ॥ ४४ ॥

माता पुत्रस्य भूयाꣳसि कर्माण्यारभते तस्याꣳ
शुश्रूषा नित्या पतितायामपि ॥ ४५ ॥

पुत्रस्य कृते माता भूयांसि दृष्टादृष्टार्थानि गर्भधारणाशुचिनिर्हरणस्तन्यदानप्रदक्षिणानमस्कारोपवासादिकर्माणि करोति । तस्मात्तस्याः पतितायामपि शुश्रूषाऽभ्यङ्गस्नापनादिका नित्या नित्यमेव कर्तव्या ॥ ४५ ॥

न तु धर्मसंनिपातः स्यात् ॥ ४६ ॥

एकस्मिन्धर्मे सहानयोर्धर्मसंनिपातः स पतितया मात्रया सह न कर्तव्यः । नाम सुब्रह्मण्याया मातुर्नामग्रहणं वरुणप्रघासेषु यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त एकातिरिक्ता इत्येवमादिकमुदाहरणम् । किं पुनरेवमादिषु मातुरन्वयः शुश्रूषा ॐ इत्याह । अन्विता हि सा संमता मन्यते । निरस्ता तु विमता । वैश्वदेवार्थे च पाके सा न भोजयितव्या । मृतायाम्तु तस्याः संस्कारादिकाः क्रियाः कर्तव्या नेति प्रतिपन्नाः ॥ ४६ ॥

अधर्माहृतान्भोगानुत्सृज्य न वयं चाधर्मश्चेत्यभि
व्याहृत्याधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुद-
कमुपस्पृशन्नक्षीराक्षारलवणं भुञ्जानो द्वादश वर्षा
णि नागारं प्रविशेत् ॥ ४७ ॥

ब्राह्मणस्वर्णहराणाम्,

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो जानन्साम्यं तु गच्छति ॥

एवमादिकमुदाहरणम् । येऽधर्माहृता भोगास्तानभ्य[न]नुज्ञाय परित्यज्य न वयं चाधर्मश्चेति प्रैष ब्रूयात् । अस्यार्थः । वय चाधर्मश्च सह नवता मह्वे(?) इति । अधोनाभीत्यादि गतम् । नागारं शालीपक्षो भिक्षाचर्यं वा ॥ ४७ ॥

अथ संयोगः स्यादार्यैः ॥ ४८ ॥

प्रायश्चित्तोपदेशात्सिद्धे पुनर्वचन ज्ञानात्साम्यं तु गच्छतीत्यस्यापवादार्थम् ॥ ४८ ॥

एवमन्येष्वपि दोषवत्सु कर्मसु पतनीयेषु ॥ ४९ ॥

उक्तव्यतिरिक्तानि पतनीयानि पूर्वमुक्तानि । तेषु यत्राऽऽहत्य प्रायश्चित्तमनुक्तं तेषामप्यनन्तरोक्तमेव प्रायश्चित्तं वेदितव्यम् । उक्तविषये विकल्प इत्यन्ये । तत्र ज्ञानाज्ञानकृतो विकल्पः ॥ ४९ ॥

गुरुतल्पगामी तु सुषिरां सूर्मिं प्रविश्योभयत
आदीप्याभिदहेदात्मानम् ॥ ५० ॥

यस्तु गुरुतल्पगामी सोऽन्तःप्रवेशयोग्या सूषिरा सूर्मिं कृत्वा पविशेत् । प्रविश्यो-भयोः पार्श्वयोरादीपयेत् । आदीप्याऽऽत्मानमभिदहेत् । ज्वलितां सूर्मिं परिष्वरा(ज्य) समाप्नुयादित्यत्रैव कियानपि विशेषः । अनन्तरस्य वैकल्पिकत्वनिवृत्त्यर्थं वच-नम् ॥ ५० ॥

मिथ्यैतदिति हारीतः ॥ ५१ ॥

हारीतस्तु मन्यते । अनन्तरोक्तं मरणान्तिकं प्रायश्चित्तं मिथ्या न कर्तव्य-मिति ॥ ५१ ॥

कुत इत्याह—

यो ह्यात्मानं परं वाऽभिमन्यतेऽभिशस्त एव भवति ॥ ५२ ॥

हिशब्दो हेतौ । यस्माद्य आत्मान पर वाऽभिमन्यते मारयति सोऽभिशस्त एव भवति ब्रह्महैव भवति । नच महापातकस्य ब्रह्महत्यायाः प्रायश्चित्तं भवतीति हेत्वभिधानादभिशस्त एवेति वचनाच्चान्येषामपि मरणान्तिकाना ब्राह्मणविषये निवृत्तिः ॥ ५२ ॥

किं तर्हि तस्य प्रायश्चित्तमित्याह—

एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेन्नास्यास्मिँल्लोके
प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥ ५३ ॥

अधोनाभ्युपरिजान्वाच्छाद्येत्यादि यदनन्तरमुक्तमेतेनैव विधिना । शिष्टं ग-तम् ॥ ५३ ॥

दारव्यतिक्रमे खराजिनं बहिर्लोम परिधाय
दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि च-
रेत् ॥ ५४ ॥

दारव्यतिक्रमी खराजिनं खरस्य गर्दभस्याजिनं बहिर्लोम परिधाय वसित्वा दार-व्यतिक्रमिणे भिक्षां दत्तेति सप्तागाराणि भिक्षा चरेत् । कौमारदारपरित्यागिने भिक्षां दत्तेति वा ॥ ५४ ॥

चरवृत्तिराषण्मासात् ॥ ५५ ॥

आषण्मासं चरवृत्तिर्भवेत् । भ्रमन्नेव तिष्ठेदित्यर्थः । ततः सिद्धिः ॥ ५५ ॥

स्त्रियाश्च भर्तुर्व्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासस्तावन्तं कालम् ॥ ५६ ॥

भर्तुव्यतिक्रम इति पाठे छान्दसो रेफलोपः । व्यतिक्रमः परित्यागः । या स्त्री भर्तारं परित्यजत्यन्तरेण निमित्तं तस्याः कृच्छ्रद्वादशरात्राभ्यासः प्रायश्चित्तं तावन्तं कालमाषण्मासमिति ॥ ५६ ॥

अथ भ्रूणहा श्वाजिनं [खराजिनं] वा बहिर्लोम परिधाय (ख० २६) । खट्वाङ्गं दण्डमादाय पुरुषशिरः प्रतीपानार्थं कर्मनामधेयं प्रब्रुवाणश्चङ्क्रम्येत को भ्रूणघ्ने भिक्षामिति ग्रामवृत्तिं प्रतिलभ्योपनिष्क्रम्य शून्यागारं वृक्षमूलं वाऽभ्युपाश्रयेन्नहि म आर्यैः संप्रयोगो विद्यत एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेन्नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥ ५७ ॥

षडङ्गस्य वेदस्याध्येता तदर्थस्य प्रयोगशास्त्रस्य च सव्याख्यानस्यार्थवित्कर्मणामनुष्ठाताऽनुष्ठापयिता च ब्राह्मणो भ्रूणः । तथा च बौधायनः—वेदानां च किंचिदधीत्य ब्राह्मणः । एकां शाखामधीत्य श्रोत्रियः । अङ्गाध्याय्यनूचानः । कल्पाध्यायी ऋषिकल्पः । सूत्रप्रवचनाध्यायी भ्रूण इति । तं हतवान्भ्रूणहा । स शुनः खरस्य वाऽजिनं बहिर्लोम परिधाय पुरुषस्य कस्यचिन्मृतस्य शिरः प्रतीपानार्थं प्रतिर्धात्वर्थवादी । उपसर्गस्य घञ्यमनुष्ये बहुलमिति[1] बहुलग्रहणाद्दीर्घः । पानमेव प्रतिपानम् । पानग्रहणमुपलक्षणम् । भोजनमपि तेनैव । खट्वाङ्गं दण्डं दण्डार्थे खट्वाया अङ्गं खट्वाङ्गमीषादि, तद्धस्तेकृत्वाऽऽदाय भ्रूणहाऽस्मीत्येवं कर्मनि(नि)बन्धनं नाम(स्व)नामधेयं प्रब्रुवाणश्चङ्क्रम्येतेतस्ततश्चरेत् । कापालिकतन्त्रप्रसिद्धस्य खट्वाङ्गस्य वा ग्रहणम् । भिक्षाचरणकाले को भ्रूणघ्ने भिक्षां ददातीति चरेत् । चरित्वा ग्रामे प्राणवृत्तिं प्राणयात्रामात्रां प्रतिलभ्य शून्यागारं वृक्षमूलं वा निवासार्थमभ्युपाश्रयेत् । नहि मे आर्यैः संप्रयोगो विद्यत इत्येवं मन्यमानः । कियन्तं कालं चरितव्यमित्याह—एतेनैवेत्यादि । गतम् । श्रोत्रियं वा कर्मसमाप्तमित्यत्र यो ग्रन्थवार्थज्ञो न भवत्यनुष्ठापयिता च न भवति तस्य ग्रहणम् ॥ ५७ ॥

---

१ ( पा० सू० ६ । ३ । १२२ ) ।

यः प्रमत्तो हन्ति प्राप्तं दोषफलम् ॥ ५८ ॥

क्षत्रियं हत्वेत्येवमादिकेऽनुक्रान्ते विषये यः प्रमत्तो हन्ति प्रमादेनाबुद्धिपूर्वं हन्ति तस्यापि दोषफलं प्राप्तमेव न तु प्रमादादकृतमिति दोषाभाव. ॥ ५८ ॥

सह संकल्पेन भूयः ॥ ५९ ॥

संकल्पेन सह वधे कृते भूय. प्रभूततरं भवति । तेन प्रमादकृते लघु प्रायश्चित्तं बुद्धिपूर्वे गुर्विति । यत्पुन. पूर्वमुक्तं दोषवच्च कर्माभिसंधिपूर्वं कृत्वाऽनभिसंधिपूर्वं वेति तत्प्रायश्चित्ते विशेषाभावादुक्तम् ॥ ५९ ॥

एवमन्येष्वपि दोषवत्सु कर्मसु ॥ ६० ॥

अन्येष्वपि हननव्यतिरिक्तेषु दोषवत्सु कर्मस्वेवमेव द्रष्टव्यम् । अबुद्धिपूर्वेऽल्पदोषो बुद्धिपूर्वे महानिति ॥ ६० ॥

तथा पुण्यक्रियासु ॥ ६१ ॥

पुण्यक्रियास्वप्येवमेव न्यायः । अबुद्धिपूर्वेऽल्पं फलं बुद्धिपूर्वे महदिति । तद्यथा ब्राह्मणस्वान्यपहृत्य चोरेषु धावत्सु यदृच्छया कश्चिच्छूर आगतस्तान्हन्यात्स्वयमेव वा शूरं दृष्ट्वा चोरा अपहृतान्युत्सृज्य पलायेरंस्तदा शूरस्याल्पं पुण्यफलम् । यदा बुद्धिपूर्वं स्वयमेव चोरेभ्यः प्रत्याहृत्य स्वानि स्वामिभ्यो ददाति तदा महदिति । एवं भियाऽबुद्ध्या परदारगमनेऽल्पमन्यत्र महदिति ॥ ६१ ॥

परीक्षार्थोऽपि ब्राह्मण आयुधं नाऽऽददीत ॥ ६२ ॥

गुणदोषज्ञानं परीक्षा । तयाऽर्थ. प्रयोजनं यस्यैवंभूतोऽपि भूत्वा ब्राह्मण आयुधं नाऽऽददीत । किं पुनर्हिंसार्थमित्यपिशब्दार्थ. ॥ ६२ ॥

अस्य प्रतिप्रसव.—

यो हिंसार्थमभिक्रान्तं हन्ति स मन्युरेव मन्युं स्पृशति
न तस्मिन्दोष इति पुराणे ॥ ६३ ॥

श्रुते दोषाभावे हेतुर्यस्मान्मन्युरेव मन्यु स्पृशति न पुरुषः पुरुषम् ॥ ६३ ॥

अत्र वसिष्ठबौधायनादयोऽप्युदाहरन्तीत्याह—

अथाऽप्युदाहरन्त्यध्यापकं कुले जातं यो हन्यादा-
ततायिनम् । न तेन भ्रूणहा भवति मन्युस्तन्मन्यु
मृच्छतीति ॥ ६४ ॥

मनुस्तु—शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च विप्राणां विप्लवे कालकारितम् ॥
आत्मनश्च परित्राणे दक्षिणानां च संगरे ।
स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति ॥ इति ।

गौतमस्तु—प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत । वसिष्ठः—
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥
आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेत् । इति ॥ ६४ ॥

पतितैरकृतप्रायश्चित्तैरुत्पादितानां पुत्राणामपि पातित्यमस्तीति प्रतिपादयितुं पूर्वपक्षमाह—

**अथाभिशस्ताः समवसाय चरेयुर्धार्म्यमिति साशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः ॥ ६५ ॥**

अथशब्दोऽर्थान्तरप्रस्तावं सूचयति । अभिशस्ताः पतिताः । समवसाय । अवसानं गृहम् । समित्येकीभावे । ग्रामाद्बहिरेकस्मिन्प्रदेशे गृहाणि कृत्वा चरेयुः । धार्म्यं धर्म्यं वक्ष्यमाणवृत्तमिति साशित्य संशितां तीक्ष्णां बुद्धिं कृत्वा । निश्चित्येत्यर्थः । इतरेतरं याजयन्त इतरेतरमध्यापयन्तः परस्परं विवाहसंबन्धं कुर्वन्तश्चरेयुर्वर्तेरन्निति ॥ ६५ ॥

**पुत्रान्संनिष्पाद्य ब्रूयुर्विप्रव्रजतैवं ह्यस्मत्स्वार्याः संप्रतिपत्स्यते(न्त इ)ति ॥ ६६ ॥**

अथ ते पुत्रान्संनिष्पाद्य ब्रूयुर्हे पुत्रा अस्मदस्मत्तो विप्रव्रजत विविधं प्रकर्षेण च स्नेहमुत्सृज्याऽऽर्यसमीपं गच्छत । एवं ह्यस्मत्स्वस्मात्स्वार्या अभीष्टाः संप्रतिपत्स्यन्ते । आशंसायां भूतवच्चेति[1] भविष्यति लट् । सकारात्परो यकारश्छान्दसः । अपपाठो वा । संप्रतिपत्तिं करिष्यन्ति । आर्याणामप्येतदभिप्रेतं भविष्यति । अस्माभिरेव पतनीयं कर्मानुष्ठितं न भवद्भिः । न च पतितैरुत्पादितस्य पातित्यम् । अन्यत्वात् ॥ ६६ ॥

एतदेवोपपादयति—

---

1 ( पा० सू० ३ । ३ । १३२ ) ।

**अथापि न सेन्द्रियः पतति ॥ ६७ ॥**

न पतितो भवन्निन्द्रियेण सह पतति । पुरुष एव पतति नेन्द्रियं शुक्रमिति । अथशब्दोऽपिचेत्यस्यार्थे ॥ ६७ ॥

कथ न सेन्द्रियः पततीत्याह—

**तदेतेन वेदितव्यमङ्गहीनो हि साङ्गं जनयति ॥ ६८ ॥**

तदनन्तरोक्तमर्थजातमेतेन वक्ष्यमाणेन निदर्शनेन वेदितव्यम् । चक्षुराद्यङ्गहीनो हि साङ्गं चक्षुरादिमन्तं जनयति । एवमधिकारविकल. साधिकार जनयति । स्त्रिया अपि कारणत्वात् । अस्याश्च दोषाभावात् ॥ ६८ ॥

एतदेव दूषयति—

**मिथ्यैतदिति हारीतः ॥ ६९ ॥**

एतदनन्तरोक्तमर्थरूपं मिथ्याऽयुक्तमिति हारीतो मन्यते ॥ ६९ ॥

कुत इत्याह—

**दधिधानीसधर्मा स्त्री भवति ॥ ७० ॥**

दधि धीयते यस्या सा दधिधानी स्थाली । तया सधर्मा सदृशी स्त्री भवति ॥ ७० ॥

ततः किम्—

**यो हि दधिधान्याममयतं पय आतञ्च( च्य )मन्थति न तेन धर्मकृत्यं क्रियत एवमशुचियुक्तं यन्निर्वर्तते न तेन सह संप्रयोगो विद्यते ॥ ७१ ॥**

यो हि पुरुषो दधिधान्या स्थाल्याममयतं श्वाद्युपहतं पय आतञ्च( च्य ) तक्राद्यातञ्चनेन सस्कृत्य मन्थते, न तदुत्पन्नेन घृतादिना धर्मकृत्यं यागादिकं क्रियते । एवं पतितसंबन्धेनाशुचि शुक्रं स्त्रिया निषिक्तं शोणितेन क्रिया ( विकृतं ) निर्वर्तते येन रूपेण निष्पद्यते न तेन सह संप्रयोगो विद्यते शिष्टानाम् । अत्र चाशुचि शुक्रमित्येतत् । अथापि न सेन्द्रियः पततीत्यस्य [ न ] दूषणम् । नहि वाचनिकेऽर्थे युक्तयः क्रमन्ते । तथा च समानायामप्युत्पत्तौ पुत्र एव पतति न दुहिता । यथाऽऽह वसिष्ठः—पतितेनोत्पन्नः पतितो भवत्यन्यत्र स्त्रियाः । सा हि परगामिनी तामतिरिक्तामुपेयादिति ॥ ७१ ॥

अभीचारानुव्याहारावशुचिकरावपतनीयौ ॥ ७२ ॥

अभिचार एवाभीचारः । उपसर्गस्य घञीति दीर्घः । अभिचारः श्येनादिः । अनुव्याहारः शापः । तौ गोब्राह्मणविषये क्रियमाणावशुचिकरावेव न पतनीयौ ॥ ७२ ॥

पतनीयाविति हारीतः ॥ ७३ ॥

हारीतस्तु तावपि पतनीयाविति मन्यते ॥ ७३ ॥

पतनीयवृत्तिस्त्वशुचिकराणां द्वादश मासान्द्वादशार्धमासान्द्वादश द्वादशाहान्द्वादश सप्ताहान्द्वादश त्र्यहान्द्वादश द्व्यहान्द्वादशाहं सप्ताहं त्र्यहं द्व्यहमेकाहम् ॥ ७४ ॥

अशुचिकराणामपि कर्मणा येषामाहत्य प्रायश्चित्तं नोक्तं तेषामपि पतनीयेषु कर्मसु या वृत्तिः प्रायश्चित्तं सैव प्रायश्चित्तिः । कियन्तं कालम्—द्वादशमासाद्येकाहान्तम् ॥ ७४ ॥

किमविशेषेण सर्वेष्वेवाशुचिकरेष्वेतेषु कालविकल्पः, नेत्याह—

इत्यशुचिकरनिर्वेषो यथा कर्माभ्यासः ॥ ७५ ॥ (ख० २७) ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (धर्मसूत्रापरपर्याये) षड्विंशप्रश्ने सप्तमः पटलः ॥ ७ ॥

इत्येषोऽशुचिकरनिर्वेषो यथा कर्माभ्यासस्तथा वेदितव्यः । बुद्धिपूर्वे सानुबन्धेऽभ्यासे च भूयांसं कालम् । विपरीते विपर्यय इति ॥ ७५ ॥ ( ख० २७ ) ॥

इति श्रीसत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्याया महादेवदीक्षितविरचितायामुज्ज्वलाया वृत्तौ षड्विंशप्रश्ने सप्तमः पटलः ॥ ७ ॥

---

अथाष्टमः पटलः ।

न समावृत्ता वपेरन्स्नातेषु काल इत्यादिषु प्रसक्तस्य स्नानस्य कालमाह—

विद्यया स्नातीत्येके ॥ १ ॥

वेदविद्या विद्या । तया संपन्नः स्नानं कुर्यादित्येके मन्यन्ते । मनुरप्याह—

---

१ ( पा० सू० ६ । ३ । १२२ ) ।

वेदानधीत्य वेदौ वा वेद वाऽपि समासतः ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥ इति ॥ १ ॥

**तथा व्रतेनाष्टाचत्वारिꣳशत्परिमाणेन ॥ २ ॥**

अष्टाचत्वारिंशद्ग्रहणं गृह्योक्ताष्टाचत्वारिंशद्वर्षाणि चतुर्विंशतिरित्यादेरुपलक्षणम् । अष्टाचत्वारिंशदित्यादिपरिमाणेन व्रतेन वा सपन्नः स्नायात् । असपन्नोऽपि विद्यया ॥ २ ॥

**विद्या व्रतेन च ॥ ३ ॥**

विद्येति सुपां सुलुगित्यादिना तृतीयान्तम् । विद्यया व्रतेन चोभाभ्यां संपन्नः स्नायादिति च मन्यन्ते । एवमधीत्य वेदꣳ स्नान तद्व्याख्यास्याम इत्यत्र वेदमित्युपलक्षणम् । अत्र याज्ञवल्क्यः—

वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।
अविप्लुतब्रह्मचर्यो लक्षण्या स्त्रियमुद्वहेत् ॥ इति ।

अत्र व्रतशब्देनाऽऽचार्यकुलवास्यश्नाति क्षार लवणमित्यादयो ब्रह्मचारिधर्मा उच्यन्ते । तेषु हि कालपरिमाणस्य श्रुतत्वात्पारं नीत्वेति युज्यते । दृश्यते च तेषु व्रतशब्द. । यथा—व्रतेषु समर्थः स्याद्यानि वक्ष्याम इति । न तु सावित्र्यादीनि वेदव्रतानि । तेषा तत्प्रदेशाध्ययनशेषतया तदभावेऽभावाद्वेद व्रतानि वेति विकल्पानुपपत्तेः । अतः कालविशेषावच्छिन्नानि व्रतानि वेदमुभय पारं नीत्वेत्यर्थः ॥ ३ ॥

**तेषु सर्वेषु स्नातकवद्वृत्तिः ॥ ४ ॥**

विद्यास्नातको व्रतस्नातक उभयस्नातक इति त्रयः स्नातका उक्ताः । तेषु सर्वेषु स्नातकवत् । तदर्हमिति वतिः । स्नातकार्हा वृत्ति पूजा 'यत्रास्यापाचितिम्' इत्यादिका कार्या । नतु व्रतस्नातक ऊनोभयस्नातकेऽधिका ॥ ४ ॥

यद्यप्येवं तथाऽपि पूजयितुः फलविशेषोऽस्तीत्याह—

**समाधिविशेषाच्छ्रुतिविशेषाच्च पूजाया फलविशेषः ॥ ५ ॥**

कर्तव्येषु कर्मस्ववधान समाधिः । श्रुतिः श्रुतम् ॥ ५ ॥

**अथ स्नातकव्रतानि ॥ ६ ॥**

इत उत्तरं स्नातकव्रतान्यधिकृतानि वेदितव्यानि । यद्यपि वक्ष्यमाणेषु कानिचित्साधारणान्यपि भवन्ति तथाऽपि भूम्ना स्नातकव्रतान्यधिक्रियन्ते ॥ ६ ॥

---

१ ( पा० सू० ५ । १ । ११७ ) ।

**पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा ॥ ७ ॥**

यदा ग्रामान्निष्क्रामति ग्रामं वा प्रविशति तदा पूर्वेण द्वारेणोत्तरेण वा निष्क्रमण-प्रवेशने कुर्यान्न द्वारान्तरेण । शीलयेदिति वचनाद्यदृच्छया द्वारान्तरेण निष्क्रमणप्रवे-शयोरपि न प्रायश्चित्तम् ॥ ७ ॥

**संध्योश्च बहिर्ग्रामादासनं वाग्यतस्य ॥ ८ ॥**

अहोरात्रयोः संधान संधिः । तौ द्वौ सज्योतिषौ । ज्योतिरन्तरदर्शनात् । तयोः संध्योर्ग्रामाद्बहिरासीत वाग्यतश्च भवेत् । मनुरप्याह—

पूर्वां सध्या जपंस्तिष्ठेत्सावित्रीमाऽर्कदर्शनात् ।
पश्चिमा तु समासीत सम्यग्ग्रहविभावनात् ॥ इति ।

तद्ब्रह्मचारिविषयम् । स्नातक आसनस्य वाग्यतस्याप्यत्र विधानात् । अन्ये त्वासनग्र-हणं स्थानस्याप्युपलक्षणम् । वाग्यतस्येति लौकिक्या वाचो निवृत्तिर्न सावित्रीजपस्येति वर्णयन्ति ॥ ८ ॥

आहिताग्निविषयेऽस्यापवादः—

**विप्रतिषेधे श्रुतिलक्षणं बलीयः ॥ ९ ॥**

विरोधो विप्रतिषेधः । अग्निहोत्रिणो बहिरासनमग्निहोत्रहोमश्च विरुध्यते । तत्र श्रुतिलक्षणमग्निहोत्रमेव कर्तव्य न स्मृतिप्राप्तं बहिरासनम् । तस्य कल्प(ल्प्य)मूलत्वादि-तरस्य वल्क्षमूलत्वादिति ॥ ९ ॥

**सर्वान्रागान्वाससि वर्जयेत् ॥ १० ॥**

कुसुम्भादयः सर्वे रागा वाससि वर्जनीयाः । न केनचिद्रक्तं वासो बिभृया-दिति ॥ १० ॥

**कृष्णं च स्वाभाविकम् ॥ ११ ॥**

स्वभावतः कृष्णं कम्बलादि तदपि न वसीत ॥ ११ ॥

**अनूद्भासि वासो वसीत ॥ १२ ॥**

उद्भासनशीलमुद्भासि । तदन्यदनूद्भासि । छान्दसो दीर्घः । एवंभूतं वासो वसीताऽऽ-च्छादयेत् ॥ १२ ॥

**अप्रकृष्टं च शक्तिविषये ॥ १३ ॥**

प्रकृष्टं निकृष्टं जीर्णं मलवत्स्थूलं च । तद्विपरीतमप्रकृष्टम् । तादृशं च वासो वसीत शक्तौ सत्याम् ॥ १३ ॥

**दिवा च शिरसः प्रावरणं वर्जयेन्मूत्रपुरीषयोः कर्म परिहाप्य ॥ १४ ॥**

चकारः पूर्वापेक्षया समुच्चयार्थः । दिवा च शिरसः प्रावरणं पटादिना न कुर्यात् । किमविशेषेण । न । मूत्रपुरीषयोः कर्म परिहाप्य । मूत्रपुरीषयोः कर्म क्रिया वर्जयित्वा ॥ १४ ॥

**शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्याद्भूम्या किंचिदन्तर्धाय ॥ १५ ॥**

दिवा रात्रौ च मूत्रपुरीषे कुर्वञ्शिरः प्रावृत्य कुर्यात् । भूम्या किंचित्तृणादिकमन्तर्धाय न साक्षाद्भूमावेव । इह कामचारे प्राप्ते दिवा शिरःप्रावरणं वर्जयेदित्युक्तम् । तस्य पर्युदासः कृतः मूत्रपुरीषयोः कर्म परिहाप्येति । ततश्च मूत्रपुरीषयोः काले स एव कामचारः स्थितः । अत आरभ्यते शिरस्तु प्रावृत्येति । एवं तर्हीदमेवास्तु, न पूर्वपर्युदासः । सोऽप्यवश्यं वक्तव्यः । अन्यथा तु शिरः प्रावृत्येत्यस्य रात्रौ चरितार्थत्वाद्दिवा प्रतिषेध एव स्यात् । गौतमस्तु रात्रौ सदैव प्रावरणमाह—न प्रावृत्याहनि शिरः पर्यटेत्प्रावृत्य रात्रौ मूत्रोच्चारे चेति ॥ १५ ॥

**छायायां च मूत्रपुरीषयोः कर्म वर्जयेत् ॥ १६ ॥**

न चोपजीव्य च्छायास्विति स्मृत्यन्तरे दर्शनाद्यस्यां पथिकादयो विश्राम्यन्ति सा गृह्यते । तेन च्छत्रच्छायाद्यप्रतिषेधः । मेघादिच्छायादेरप्रतिषेधोऽवर्जनीयत्वात् । अत्राऽऽपस्तम्बे विशेषः—**स्वां तु छायामवमेहेत्** ॥ छान्दसः सु(स्स्तु)गभावः । द्वितीयाश्रुतेः प्रतिशब्दाध्याहारः । अवमेहनं मूत्रकर्म । अनुपजीव्यत्वान्नायं पूर्वप्रतिषेधस्य विषय इति प्रतिप्रसवोऽपि न भवति । तेन सति संभवे स्वामेव च्छायां प्रत्यवमेढव्यम् । अन्यच्च—**न सोपानन्मूत्रपुरीषे कुर्यात्कृष्टे पथ्यप्सु च । तथा ष्ठीवनमैथुनयोः कर्माप्सु वर्जयेदग्निमादित्यमपो ब्राह्मणं गा देवताश्चाभिमुखो मूत्रपुरीषयोः कर्म वर्जयेत्** ॥ निष्ठीवनमास्याच्छ्लेष्मादीनामुत्सर्गः । देवताः प्रतिमाः । अन्यानि स्पष्टानि । **अश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेत्** ॥ फलपाकावसाना ओषधयः । ये पुष्पैर्विना फलन्ति ते वनस्पतयः । आर्द्रानिति वचनाच्छुष्केषु न दोषः । ऊर्ध्वानिति वचनाद्वातादिनिमित्तेन भग्नेषु न दोषः । तैरश्मादिभिर्मूत्रपुरीषयोः शुन्धनं न कुर्यादिति ॥ १६ ॥

**अग्निमादित्यमपो ब्राह्मणान्देवताद्वारं प्रतिवातं च शक्तिविषये नाभिप्रसारयीत ॥ १७ ॥**

अग्न्यादीन्प्रति पादौ न प्रसारयेत् । शक्तिविषये सति ॥ १७ ॥

**अथाप्युदाहरन्ति ॥ १८ ॥ ( ख० २८ ) ।**

इदमप्युदाहरण शास्त्रान्तर उदाहरन्ति ॥ १८ ॥ ( ख० २८ ) ।
तदेवोदाहरति—

**प्राङ्मुखोऽन्नानि भुञ्जीतोच्चारे दक्षिणामुख उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनमिति ॥ १९ ॥**

उच्चारः पुरीषकर्म । पादावनेजनं पादप्रक्षालनम् । भोजनादिषु चतस्रो दिशो नियम्यन्ते । मनस्तु—

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुख ।
श्रिय प्रत्यङ्मुखो भुङ्क्त ऋतं भुक्त उदङ्मुखः ॥ इति ।

याज्ञवल्क्योऽपि—

दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुख ।
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुख. ॥ इति ॥ १९ ॥

**आराच्चाऽऽवसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ग्रामादावसथाद्वा ॥ २० ॥**

आवसथ गृहम् । तस्य दूरतो मूत्रपुरीषे कुर्यात् । दक्षिणा दिशमिति द्वितीयानिर्देशादुपनिपत्येति गम्यते । दक्षिणापरा निर्ऋति. । दक्षिणापरा वेत्युक्तम् । अत्रावधिर्ग्रामादावसथाद्वेति यथासभवम् ॥ २० ॥

**अस्तमिते च बहिर्ग्रामान्मूत्रपुरीषयोः कर्म वर्जयेत् ॥ २१ ॥**

अस्तमित आदित्ये बहिर्ग्रामान्मूत्रपुरीषयो. कर्म न कुर्यात् । आपस्तम्बे तु विशेषः—अस्तमिते च बहिर्ग्रामादाराद्दावसथाद्वा मूत्रपुरीषयोः कर्म वर्जयेत् [इति] । अन्तर्ग्रामेऽपि गृहस्य दूरतो न कुर्यादिति दृष्टार्थोऽय प्रतिषेधः । चोरव्याघ्रादिशङ्कया निर्भये देशे नास्ति दोषः ॥ २१ ॥

**अश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेत् ॥ २२ ॥**

अश्मानं लोष्टं चोत्साद्य ताभ्या गुदं वा लिङ्गं वा न परिमार्जयेत् ।

तथाऽऽर्द्रैरूर्ध्वस्थितैरोषधिवनस्पतिभिश्चोत्पाटितैः । स्वयं पतितैरार्द्रैरपि परिशोधने न दोषः । तथोर्ध्वस्थितैरपि शुष्कैः शोधने न दोषः ॥ २२ ॥

देवताभिधानं चाप्रयतः ॥ २३ ॥

अप्रयतः सन्देवतानामग्न्यादीना नामाभिधानं वर्जयेत् ॥ २३ ॥

ब्राह्मणस्य गोरिति पदोपस्पर्शनम् वर्जयेत् ॥ २४ ॥

ब्राह्मणं गा च पादेन नोपस्पृशेत् । इतिशब्द. प्रकारे । विद्यावयोवृद्धानामब्राह्मणानामपि वर्जयेत् ॥ २४ ॥

हस्तेन चाकारणात् ॥ २५ ॥

कारणमभ्यङ्गकण्डूयनादि । तेन विना हस्तेनाप्युपस्पर्शनं वर्जयेत् । पूर्वोक्तानामेव ॥ २५ ॥

देवानां सुराज्ञश्च गोर्दक्षिणानां कुमार्याश्च परीवादान्वर्जयेत् ॥ २६ ॥

अग्न्यादिदेवताना सुराज्ञश्च गोर्दक्षिणानामदक्षिणानामपि हिरण्याना कुमार्याश्च कन्यायाश्च दोषान्सतोऽपि न कथयेत् । अध्यात्मप्रकरणे योगाङ्गतया परीवादः प्रतिषिद्धः । अनन्तरं च वक्ष्यति—क्रोधादींश्च भूतदाहीयान्दोषान्वर्जयेदिति । इद तु वचनं गवादिषु प्रायश्चित्तातिरेकार्थम् ॥ २६ ॥

वत्सतनीं(न्तीं) च नोपरि गच्छेत् ॥ २७ ॥

वत्सबन्धनरज्जुं नोल्लङ्घयेत् । वत्सग्रहणं गोमात्रोपलक्षणम् ॥ २७ ॥

स्तृहतीं गा नाऽऽचक्षीत ॥ २८ ॥

स्तृहतीं सस्यधान्यादिक भक्षयन्तीं गा स्वामिने न ब्रूयात् ॥ २८ ॥

संसृष्टा च वत्सेनानिमित्ते ॥ २९ ॥ (ख०२९) ।

यथा च गोर्वत्सेन संसृज्यते तामपि न ब्रूयात् । इय ते गौर्वत्सेन पीयत इति । अनिमित्तमिति वचनादस्य हविषे वत्सा अपाकृता धयेयुरित्यादिके निमित्ते सति नास्ति दोष. ॥ २९ ॥ ( ख० २९ ) ।

नाधेनुरिति ब्रूयाद्धेनुर्भव्येत्येव ब्रूयात् ॥ ३० ॥

या च गौः पयस्विनी न भवति तामप्यधेनुरिति न ब्रूयात् । किं तर्हि धेनुर्भव्येत्येव ब्रूयात् । भविष्यद्धेनुर्धेनुर्भव्या । 'धेनोर्भव्यायाम्' मुम्वक्तव्य इति मुम भवति । वध्यत(न्ध्या)त्वेनाव्यय(भव्य)त्वात् । वक्तव्यत्वे च सति [*निर्गमेय]पुनरधे(र्धे)नुदर्शनमेव वक्तव्यम् ॥ ३० ॥

*अधिकमिव भाति ।

**न भद्रं भद्रमिति ब्रूयात् ॥ ३१ ॥**

यद्भूतं तद्भूतमिति न ब्रूयात् ॥ ३१ ॥

किंतु—

**पूर्णं (पुण्यं) प्रशस्तमित्येव ब्रूयात् ॥ ३२ ॥**

पूर्णं (पुण्य) प्रशस्तमित्यनयोरन्यतरेण शब्देन ब्रूयात् ॥ ३२ ॥

**नासौ मे सपत्न इति ब्रूयाद्यदसौ मे सपत्न इति ब्रूयाद्द्विषन्तं भ्रातृव्यं जनयेत् ॥ ३३ ॥**

असौ देवदत्तो मे सपत्न इति न ब्रूयात्सदासि । किं कारणम् । यद्यसौ सपत्न इति ब्रूयाद्द्विषन्तं क्रियाशब्दोऽयम् । द्विषाण भ्रातृव्यं जनयेत् । एवं ह्युक्तो मन्य. तेऽकस्मादसावेवं ब्रूते नूनमस्य मयि द्वेषो वर्तत इति । ततस्तत्प्रीतिकारणार्थं यतमानः सपत्न एव जायत इति ॥ ३३ ॥

**नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥ ३४ ॥**

इन्द्रधनुराकाशे पश्यन्परस्मै तेन शब्देन च न ब्रूयात् । यद्यवश्य वक्तव्य मणिध- नुरिति ब्रूयात् । गौतमीये तथा दर्शनात् ॥ ३४ ॥

**न पततः संचक्षीत ॥ ३५ ॥**

पततः पक्षिण संधाय भूमिस्थितान्न संचक्षीत न गणयेत् । इयन्त एत इति । अपर आह—पुण्यक्षयेण स्वर्गात्पततः सुकृतिन परस्मै न संचक्षीत । ज्योतींषि पतन्ति न कथयेदिति ॥ ३५ ॥

**प्रेङ्खावन्तरेण नातिक्रामेत् ॥ ३६ ॥**

प्रेङ्खौ दोलास्तम्भौ । तयोर्द्वयोर्मध्येन न गच्छेत् । तोरणस्तम्भयोरित्यपरे ॥ ३६ ॥

**उद्यन्तमस्तं यन्तमादित्य दर्शने वर्जयेत् ॥ ३७ ॥**

उदयसमयेऽस्तसमये चाऽऽदित्य न पश्येत् । मनुस्तु—

नेक्षेतोद्यन्तमादित्यं नास्तं यन्त कदाचन ।
नोपरक्त न वारिस्थ न मध्यं नभसो गतम् ॥ इति ॥ ३७ ॥

**दिवाऽऽदित्यः सत्त्वानि गोपायति नक्तं च चन्द्र- मास्तस्मादमावास्यायाꣳ रात्र्याꣳ स्वाधीय आत्मनो गुप्तिमिच्छेत्प्रायत्यब्रह्मचर्ये कालचर्य- येति ॥ ३८ ॥**

दिवाऽहन्यादित्यः सत्त्वानि गोपायति प्राणिनो रक्षत्यालोकदानेन । नक्तं चन्द्रमास्तस्मादमावास्याया रात्रौः स्वाधीयो वकारश्छान्दसः । ' अन्तिकबाढयोर्नेद-साधौ ' बाढतर भृशतरमात्मनो गुप्तिं रक्षणमिच्छेत् । केन प्रकारेण । प्रायत्यब्रह्मचर्याभ्या काले चर्यया च । अयं तु तावदर्थानुरूपः पाठ. । अधीयमानस्तु प्रमादतश्छान्दसो वा । प्रयतस्य भाव प्रायत्यम् । नित्य'त्प्रायत्याद्धिकेन प्रायत्येन स्नानादिकेन ब्रह्मचर्येण मैथुनत्यागेन काले कृतया चर्यया देवार्चनेन । इतिशब्देनान्यसत्क्रियया जपादिकया ॥ ३८ ॥

कस्मात्पुनरस्या रात्रौ चन्द्रमा न गोपयतीत्याह—

**सह ह्येतां रात्रिं सूर्याचन्द्रमसौ वसतः ॥ ३९ ॥**

एता रात्रिम् । अत्यन्तसयोगे द्वितीया । सर्वामेव सूर्याचन्द्रमसौ सह वसतः । न सूर्येण सह वसतश्चन्द्रमसः प्रकाशोऽस्ति ॥ ३९ ॥

**न कुसृत्या ग्रामं प्रविशेद्यदि प्रविशेन्नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेदन्यां वा रौद्रीम् ॥ ४० ॥**

कुसृतिः कुमार्गः । तया ग्रामं न प्रविशेत् । यदि गत्यन्तराभावात्प्रविशेन्नमो रुद्रायेत्यादिकामृचं जपेत् । अन्या वा रौद्रीमिमा* रुद्राय तवस इत्यादिकाम् । अत्र वाजसनेयिनां गृह्ये—वनं प्रवेक्ष्यन्ननुमन्त्रयते नमो रुद्राय वनसदे स्वस्ति मा संपारयेति । पन्थानमारोक्ष्यन्ननुमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा संपारयेति । अपः प्रवेक्ष्यन्ननुमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा सपारयेति । तस्माद्यत्किंचन कुर्वन्स्यान्नमो रुद्रायेत्येव कुर्यात् । सर्वो ह्येष रुद्र इति श्रुतेरिति । भरद्वाजगृह्येऽप्यस्मिन्नेव विषये कियानेव भेदः ॥ ४० ॥

**नाब्राह्मणायोच्छिष्टं प्रयच्छेद्यदि प्रयच्छेद्दन्तान्स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् ॥ ४१ ॥**

अब्राह्मणः शूद्रः । न शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यादिति वासिष्ठे दर्शनात् । तस्मा उच्छिष्टं न प्रयच्छेत् । इत्यनाश्रितविषयम् । यदि प्रयच्छेदिदमाश्रितविषयम् । दन्तान्नखेन स्कुप्त्वा विलिख्य तन्मलं तस्मिन्नुच्छिष्टे निधाय प्रयच्छेत् । स्कुप्त्वेति स्कुम्नोतेः क्त्वाप्रत्ययः । छान्दसं मकारस्य बत्वम् । स्कुम्नोतेर्वा क्त्वा । पकार उपजनः ॥ ४१ ॥

---

१ ( पा० सू० ५ । ३ । ६३ ) ।

क्रोधादींश्च भूतदाहीयान्दोषान्वर्जयेत् ॥ ४२ ॥ (ख० ३० ) ।

क्रोधाद्यो भूतदाहीया अध्यात्मपटले व्याख्याता । तद्वचन योगिविषयमित्ययोगिनोऽपि स्नातकस्य क्रोधादिनिवृत्यर्थमिद वचनम् । इदमेव तर्ह्युभयार्थमस्तु योग्यर्थमयोग्यर्थं च । एवं सिद्धे क्रोधादिवचनमस्य योगाङ्गस्य( त्व )प्रतिपादनार्थम् । तेन क्रोधाद्यनुष्ठानेन योगसिद्धिरेव न भवति, न पुन स्नातकव्रतलोपप्रायश्चित्तमिति ॥ ४२ ॥ ( ख० ३० ) ।

प्रवचनयुक्तो वर्षाशरदं च मैथुनं न चरेत् ॥ ४३ ॥

प्रवचनमध्यापनम् । तेन युक्तो वर्षासु शरदि च मैथुन वर्जयेत् ॥ ४३ ॥

मिथुनीभूय न च तया सह सर्वां रात्रिं शयीत ॥ ४४ ॥

मैथुनं कृत्वा तया भार्यया सह ता रात्रिं सर्वां न शयीत ॥ ४४ ॥

शयानश्चाध्यापन वर्जयेत् ॥ ४५ ॥

दिवा नक्तं च शयानस्याध्यापनप्रतिषेध. । स्वयं तु धारणार्थमधीयानस्य न दोषः ॥ ४५ ॥

न तस्यां शय्यायामध्यापयेत् ॥ ४६ ॥

यस्या शय्याया भार्यया सह रात्रौ शयीत तस्या शय्यायामासीनोऽपि नाध्यापयेत् ॥ ४६ ॥

अनाविःस्रगनुलेपनः स्यात् ॥ ४७ ॥

अनाविर्भूतेऽप्रकाशिते स्रगनुलेपने यस्य स एवभूतो न स्यात् ॥ ४७ ॥

निशायां दारं प्रत्यलंकुर्वीत ॥ ४८ ॥

दारं प्रतीति वचनादुपगमनार्थमलकरणम् । तेन भार्याया अशक्त्यादिनोपगमनायोग्यत्वे नायं नियमः ॥ ४८ ॥

सशिरामज्जनं चाप्सु वर्जयेत् ॥ ४९ ॥

मज्जनमवमज्जन सहशिरा वर्जयेत्सहाशिरा स्नानं न कुर्यात् । इत्यवगाहनविषयः । सर्वे स्नातकव्यतिरेके नैमित्तिका[redacted] स्नातकस्य नित्यमवगाहनरूप न भवति इत्याचार्यस्य पक्षः ॥ ४९ ॥

अस्तमिते च स्नानम् ॥ ५० ॥

अस्तमिते चाऽऽदित्ये सर्वप्रकारं( स्नानं ) वर्जयेत् ॥ ५० ॥

पालाशमासनं पादुके दन्तप्रक्षालनमिति [च] वर्जयेत् ॥ ५१ ॥

पालाशमासनादि वर्जयेत् । दन्तप्रक्षालनं दन्तकाष्ठम् । इतिशब्दः प्रकारः[ रे ] । तेनान्यदपि गृहोपकरण पालाश वर्जयेत् ॥ ५१ ॥

स्तुतिं च गुरोः समक्षं यथा सुस्नातम् ॥ ५२ ॥

सुस्नातमित्यादिका स्तुतिं गुरुसंनिधौ वर्जयेत् ॥ ५२ ॥

आ निशायां जागरणम् ॥ ५३ ॥

निशा रात्रेर्मध्यमो भाग. । आ तस्माज्जागृयान्न स्वप्यात् ॥ ५३ ॥

अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यः ॥ ५४ ॥

निशायामनध्यायोऽध्ययनमध्यापन च न कुर्याच्छिष्येभ्यस्तु धर्मोपदेशोऽनुज्ञा. यते ॥ ५४ ॥

मनसा वा स्वयम् ॥ ५५ ॥

निशायामनध्यायस्य प्रतिप्रसव· मनसा वा स्वय चिन्तयेदिति ॥ ५५ ॥

ऊर्ध्वं मध्यरात्रादध्यापनम् ॥ ५६ ॥

अयमपि प्रतिप्रसवः । निशि निशायाः षोडशनाडिका आरभ्याध्ययनं न भवति ॥ ५६ ॥

नापररात्रमुपोत्थायानध्याय इति संविशेत् ॥ ५७ ॥

रात्रेस्तृतीयोऽपररात्रम् । ऊर्ध्वं मध्यरात्रादुपोत्थायोत्थायाध्यापयेन्नापररात्रं संविशेन्न शयीत । यद्यपि तस्मिन्नष्टम्यादिरनध्यायः प्राप्तो भवति किं पुन स्वाध्यायः । तथा च मनुः—न निशान्त( न्ते ) परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् । इति ॥ ५७ ॥

काममधः शशयीत ॥ ५८ ॥

अनेन स्तम्भाद्याश्रयणेनाऽऽसीनस्य स्वापोऽनुज्ञायते । तत्र रेफलोपश्छान्दसः । तथा शकारस्य द्विर्वचनम् ॥ ५८ ॥

मनसा वाऽधीयीत ॥ ५९ ॥

अयमप्यूर्ध्वरात्रादुत्थायाध्यापयतोऽनध्यायप्राप्तावेवमुच्यते । मनसा वा प्राप्तप्रदेश· मधीयीत । स्वयं चिन्तयेत् । अपाश्रित्य वा स्वप्यादिति ॥ ५९ ॥

क्षुद्रान्क्षुद्राचरितांश्च देशान्न सेवेत ॥ ६० ॥

क्षुद्रानल्पकान्पुरुषान्न सेवेत । क्षुद्रैर्निषादादिभिरधिष्ठिताश्च देशान्न सेवेत ॥ ६० ॥

सभाः समाजांश्च ॥ ६१ ॥

सभाः समाजा व्याख्यातास्तान्न सेवेत ॥ ६१ ॥

समाजं चेद्गच्छेत्प्रदक्षिणीकृत्यापेयात् ॥ ६२ ॥

यद्यर्थात्समाजान्गच्छेत्तत. प्रदक्षिणीकृत्यापेयाद्गच्छेत् ॥ ६२ ॥

नगरप्रवेशनानि च वर्जयेत् ॥ ६३ ॥

बहुवचननिर्देशाद्बहुकृत्वो नगरं न प्रवेष्टव्यम् । यदा कदाचिद्यादृच्छिके प्रवेशे न प्रायश्चित्तम् ॥ ६३ ॥

प्रश्नं च न विब्रूयात् ॥ ६४ ॥

विविच्य वचन विवचन निर्णय. । पृष्टमर्थं न विविच्य ब्रूयादिदमित्थमिति दुर्निरूपार्थमिदं विषयमिति ॥ ६४ ॥

अथाप्युदाहरन्ति—

मूलं कूलं बृं(बृ)हति दुर्विवक्तुः प्रजां पशूनायतनं
हिनस्ति । धर्मप्रह्लादनाय कुमालनाय रुदन्हन्त(ह)
मृत्युर्व्युवाचः(च) प्रश्नमिति ॥ ६५ ॥

दुर्निरूपमर्थं राहसा निर्णय(र्णीय) यो दुर्विवक्त्यन्यथा निर्णयति तस्य दुर्विवक्तुस्त. देव दुर्विवचन मूलं कूल च बृंहति । मूल पित्रादय. । कूलमागामिनी सपत् । तदुभय मपि स बृहत्युत्पाटयति । दन्त्योष्ठ्योर्वि(ष्ठ्यो व)कारः । किमेतावदेते(व)न । प्रजा पुत्रादि पशून्गवादिकानायतन गृह च हिनस्ति । अतो दुर्विवचनं (न) सभवात्प्रश्नमात्रमेव न ब्रूयादिति । अत्रेतिहासः— कस्यचिदृषेर्धर्मप्रह्लादन कुमालनश्चेति द्वौ शिष्यावा स्ताम् । तौ कदाचिदरण्यात्समागतौ समिद्भारावाहृत्य प्रमाददृष्टिपूत एवाचार्यगृहे प्र(प्रा)क्षिपताम् । तयोरेकेनाऽऽचार्यस्य पुत्र· शिशुराक्रान्तो मृत. । ततः शिष्यावाचार्यः प्रपच्छ केनाय मारित इति । तावुभावपि न मयेत्यूचतुः । ततः पतितस्य परित्यागमदुष्टस्य च परिग्रा(ग्र)ह कर्तुमशक्नुवन्नृषिर्मृत्युमाहूय पप्रच्छ केनाय व्यापादित इति । ततो धर्मसकटपतितो मृत्यु(त्यू) रुदन्नेव प्रश्न व्युवाच विविच्य कथितवान् । प्रल्हादन-कुमालनाय षष्ठ्यर्थे चतुर्थी । कुमालनस्य नेद पतनीयमिति । प्रल्हादन त्वयेदं कृतमिति व्युवाच । दूरतरस्य नास्तीत्युक्तम् । तथाऽपि तर्षा(पीतरस्यार्था)द्गम्यते । इति रुदन्मृत्युरुवाचेति । हत(ह)शब्द ए(ऐ)तिह्यद्योतनार्थः । प्रह्लादशब्दे हकारात्परो रेफः ॥ ६५ ॥

गार्दभं यान(मा)रोहणे विषमारोहणावरो-
हणानि च वर्जयेत् ॥ ६६ ॥

गर्दभयुक्तं यान शकटाद्यारोहणे वर्जयेन्नाऽऽरोहेत् । तथा विष[मेषु] निम्नोन्नते-ष्वारोहणमवरोहण च वर्जयेत् । उन्नतेष्वारोहण निम्नेष्ववरोहणम् ॥ ६६ ॥

ब(बा)हुभ्यां च नदीतरम् ॥ ६७ ॥

तरणं तरम् । बाहुभ्यामिति वचनात्प्लवादिना न दोषः ॥ ६७ ॥

नावां(वं) च साꣳशयिकीम् ॥ ६८ ॥

भिद्यते न वेति संशयमापन्ना सांशयिकी । तां जीर्णां वर्जयेत् । नावामिति षष्ठ्यन्त. पाठे नावां मध्ये सांशयिकीं नावं वर्जयेत् ॥ ६८ ॥

तृणच्छेदनलोष्टविमर्दननिष्ठीवनानि चाकारणात् ॥ ६९ ॥

तृणच्छेदनाद्यकारणाद्वर्जयेन्न कुर्यात् । निष्ठीवनस्य कारणं प्रतिश्यायादिः । इतरत्र मृग्यम् ॥ ६९ ॥

यच्चान्यत्परिचक्षते यच्चान्यत्परिचक्षते ॥ ७० ॥ (ख० ३१) ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे(धर्मसूत्रापरपर्याये)

षड्विंशप्रश्नेऽष्टमः पटलः ॥ ८ ॥

यच्चान्यदेवं युक्तमाचार्याः परिचक्षते तदप्यक्षक्रीडादि वर्जयेत् । द्विरुक्तिः प्रश्नसमा. प्तिकृता ॥ ७० ॥ ( ख० ३१ ) ॥

इति सत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्यायां महादेवदीक्षितविरचितायामु ज्ज्वलायां वृत्तौ षड्विंशप्रश्नेऽष्टमः पटलः ॥ ८ ॥

---

इति षड्विंशः प्रश्नः समाप्तः ॥ २६ ॥

---

पूर्वस्मिन्प्रश्नेऽथातः सामयाचारिकानित्युपक्रम्य निःश्रेयसभूय इत्यन्तेन वर्णचतुष्टय. धर्मानुक्त्वोपनयन विद्यार्थस्येत्यादिपटलद्वये प्रायेण ब्रह्मचारिणो धर्मा उक्ताः । उत्तरेषु पञ्चसु सर्वाश्रमाणाम् । अष्टमे समावृत्तस्य । इदानीं पाणिग्रहणादारभ्य कर्त. व्यानि कर्माणि वक्तुं प्रतिजानीते—

पाणिग्रहणादधि गृहमेधिनोर्व्रतम् ॥ १ ॥

पाणिर्यस्मिन्कर्मणि गृह्यते तत्पाणिग्रहणम् । चतुर्थीकर्मान्तो विवाह इत्यर्थः । तद्यादिपूर्वोऽवधिर्यस्या क्रियाया सा तथा । क्रियाविशेषणत्वान्नपुंसकम् । तत्प्रभृति तदुपलक्षितकालप्रभृत्युत्तरकालमारभ्य तस्मादूर्ध्वं गृहमेधिनोर्गृहस्थाश्रमवतोर्यन्नियतं कर्तव्यम् । जातावेकवचनम् । तदुच्यते । पाणिग्रहणादिरग्निस्तमौपासनमित्याचक्षते ।

तस्मिन्गृह्याणि कर्माणि क्रियन्त इत्युक्तत्वात्तत्प्रभृति गृह्यकर्म गृहमेधशब्दवाच्यमिति दर्शनार्थं प्रथमं पदमनुवादे द्वितीय सञ्ज्ञान्तरविधानायेति । 'भार्यादिरग्निर्दायादिर्वा' इति शास्त्रान्तरोक्तो विकल्पो मा भूदिति च प्रयोजनमुक्तम् । गृहमेधिनोरिति द्विवचनमेकाधिकार लक्षणवत्[ याजवद् ]द्वित्वमात्रमाह न तु व्यक्तिद्वित्वम् । तेन बहुभार्यस्यापि कर्तुर्विशेषणं विवक्षितम् । विधेयत्वात् । एकाल्ये ऽन्यतरेण मा भूदिति । अनेकभार्यस्यैकस्यामपि सत्या भवत्येव । अनेकाश्रितस्याधिकारस्य विद्यमानत्वात् । शास्त्रान्तराच्च 'हुत्वा शाकलकैर्मन्त्रैः' इत्यादे । वैश्वदेवं तु विधुरा अपि कुर्वन्ति ॥ १ ॥

कालयोर्भोजनम् ॥ २ ॥

कर्तव्यम् । सायं प्रातश्च नान्तरा । परिसंख्येयम् । रागप्राप्तत्वात् । मानवे च स्पष्टमेतत्—

सायं प्रातर्द्विजातीनामशनं स्मृतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ इति ।

अन्ये तु नियमं मन्यन्ते । कालयोर्विहितस्य च प्राणाग्निहोत्रस्य लोपे प्रायश्चित्तदर्शनात् । बौधायनः—

गृहस्थो ब्रह्मचारी वा योऽनश्नस्तु तपश्चरेत् ।
प्राणाग्निहोम(त्र)लोपेन अवकीर्णी भवेत्तु सः ॥ इति ।

तेन भोजनाशक्तावन्नाभावे चोदकादिना लेह्येन वा प्राणाग्निहोत्रं नातिक्रामेत् । तदिदमाचार्यो गृहस्थमात्रे नियच्छति ब्रह्मचारिणि न ॥ २ ॥

अतृप्तिश्चान्नस्य ॥ ३ ॥

सुहितार्थयोगे करणे षष्ठी । पूरणगुणसुहितार्थेति सूत्रात् । अन्नेन तृप्तिं न गच्छेत् । यावत्तृप्ति न भोक्तव्यमिति ॥ ३ ॥

पर्वसु चोभयोरुपवासः ॥ ४ ॥

पक्षसंधिः पर्व । इह तद्युक्तमहर्गृह्यते । तेषु पर्वसूभयोर्दम्पत्योरुपवासः कार्यः । उपवासो भोजनलोपः । उभयोरिति यजमानमात्रेण कृतेवैश्वदेवादिवन्न भवति । किंतु 'यावदुक्त पत्न्या' इति परिभाषोक्तत्वात्पृथगुपवास एवेत्यर्थः । अनेनोभयोरपि कालयोर्भोजनमित्यप्युक्तम् । अथवा कालयोरित्यारभ्यैकं सूत्रम् ॥ ४ ॥

अविशेषेणोभयोरपि कालयो. प्राप्तावाह—

---

१ ( पा० सू० २ । २ । ११ ) ।

औपवस्तमेव कालान्तरे भोजनम् ॥ ५ ॥

यत्कालान्तर एककाले भोजनं तदप्यौपवस्तमेवोपवास एव । औपवस्तं तूपवास इति निष्ठासूत्रसा[धा]रण च च्छान्दसम् । तदपि दिवा न रात्रौ । श्रौते तथा दर्शनात् । 'नैता रात्रिमश्नाति' इति । एवं च 'तस्यौपासनेनाऽऽहिताग्नित्वं तथा पार्वणेन चरुणा दर्शपूर्णमासयाजित्वं च' इति गृह्ये यदुक्तं तत्रोपवासो व्याख्यातः ॥ ५ ॥

तृप्तिश्चान्नस्य ॥ ६ ॥

पर्वसु सकृद्भुञ्जानो(नौ) याव‍त्तृप्ति भुञ्जीयाताम् । [ते]न श्रौतेऽमावास्यायामेव तृप्ति, रत्र तूभयोरपि पर्वणोः ॥ ६ ॥

यच्चैतयोः प्रियं स्यात्तदेतस्मिन्नहनि भुञ्जीयाताम् ॥ ७ ॥

एतस्मिन्नहनीति दिवा कालान्तर इत्यत्राविशेषाभिधानाद्दिवा भोक्तव्यं रात्रौ नेत्यर्थः ॥ ७ ॥

अधश्च शयीयाताम् ॥ ८ ॥

रात्रौ खट्वादा(दौ) प्राप्ते संचष्टे स्थण्डिलशायिनौ भवतः ॥ ८ ॥

मैथुनवर्जनं च ॥ ९ ॥

मैथुनवर्जनमप्येतस्मिन्नहनि कर्तव्यम् ॥ ९ ॥

श्वोभूते स्थालीपाकः ॥ १० ॥

स्थालीपाकश्चोक्त इत्यविशेषः । उक्तं गृह्ये 'नित्यमत ऊर्ध्वं पर्वस्वाग्नेयेन स्थालीपाकेन यजते' 'पत्न्यवहन्ति' श्रपयित्वा' इत्यादिना । अपरेद्युः कर्तव्यः ॥ १० ॥

तस्योपचारः ॥ ११ ॥

तस्य स्थालीपाकस्य । उपचारः प्रयोगः प्रकारश्च ॥ ११ ॥

नित्यं लोका उपदिशन्ति ॥ १२ ॥

नित्यं सार्वत्रिकमिति शिष्टा उपदिशन्ति । नित्यग्रहणं पर्वाधिकारनिवृत्त्यर्थम् ॥ १२ ॥

यस्मिन्देशेऽग्निमुपसमाधास्यन्स्या(न्स्या)त्तत्र प्राचीरुदीचीस्तिस्रस्तिस्रो लेखा लिखित्वाऽवोक्ष्यो-

त्सिच्यैतदुदकशेषमुत्तरेण पूर्वेण वाऽन्यदुपनिद
ध्यात् ॥ १३ ॥

होमप्रसङ्गादिदमुच्यते । यत्र कुत्र गार्ह्यसामयाचारिके वा कर्मणि गृहेऽरण्ये वाऽग्निमुपसमाधास्यन्प्रतिष्ठापयिष्यन्स्यात्तत्र पूर्वं प्राचीः प्रागग्रास्तिस्रो लेखा लिखेदुद· उदगपवर्गा. । उदगग्रास्तिस्रः प्रागपवर्गा लेखा लिखित्वाऽद्भिरवोक्षेत । अवोक्ष्य । एतदवोक्षणोदकमग्नेरायतनस्य स्थण्डिलस्योत्तरतः पूर्वतो वोत्सिञ्चेत् । उत्सिचा(च्या)· न्यदुदक पात्रस्थमुपदध्यात् । ॥ १३ ॥

रिक्तपात्रेऽन्यदुदकं निदध्यादित्यस्य प्रसङ्गेनाऽऽह—

नित्यमुदधानान्यद्भिरारिक्तानि स्युर्गृहमेधिनोर्व्रतम् ॥ १४ ॥

गृहे यावन्त्युदधानान्युदकपात्राणि घटकरकादीनि तानि सदाऽद्भिररिक्तानि स्युः । एतदपि गृहमेधिनोर्व्रतम् । पुनर्गृहमेधिनोरिति वचनात्पूर्वसूत्रं ब्रह्मचारिविषये वानप्रस्थविषये च । पाके तु क्रिया न भवति । उपसमाधास्यन्निति लिङ्गस्य विव· क्षितत्वात् । ‘ आर्याः प्रयताः ’ इत्यत्र तु भवति ॥ १४ ॥

अहन्यसंवेशनम् ॥ १५ ॥

संवेशनं निद्रा । तदहनि न कर्तव्यम् ॥ १५ ॥

ऋतौ तु संनिपातो दारेणानुव्रतम् ॥ १६ ॥

रजोदर्शनादारभ्य षोडशाहोरात्रपरिमित ऋतु । तत्र संनिपातप्रयोगो दारेण कर्तव्यः । छान्दसमेकवचनम् । बहुवचनान्तो हि दारशब्दः । शास्त्रतो नियमो व्रत तदनुरोधेन ।

तत्र मनुः—ऋतुः स्वाभाविकः स्त्रीणा रात्रयः षोडश स्मृता· ।
चतुर्भिरितरैः सार्धमहोभिः सद्भिर्गर्हितैः ॥
तासामाद्याश्चतस्रस्तु निन्द्या एकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥
अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥ इति ।

याज्ञवल्क्यस्तु—एवं गच्छन्स्त्रियं क्षामा मघा मूल च वर्जयेत् ॥

आचार्यस्तु चतुर्थीप्रभृति गमनमाह—‘चतुर्थ्यां स्नाता प्रयतवस्त्रामलंकृतां ब्राह्मण- संभाषामाचम्योपह्वयते ’ इति । आपस्तम्बोऽपि—चतुर्थीप्रभृत्याषोडशीमुत्तरा[ मुत्तरा ] युग्मा प्रजानि.श्रेयसमृतुगमनमित्युपदिशतीति । तदिह षोडशरात्रिष्वादितः सर्वथा तिस्रो वर्ज्या(र्ज्याः)श्चतुर्थ्येकादशी त्रयोदश्याचार्येणानुज्ञाताः । मनुना निषिद्धाः । इतरा दश तासु युग्मासु पुत्रा जायन्ते । स्त्रियोऽयुग्मासु रात्रिषु । तत्र चोत्तरामुत्तरामिति

वचनात्षोडश्या रात्रौ मघादियोगाभावे गच्छतः सर्वत उत्कृष्टः पुत्रो भवति । चतुर्थ्यामवमः । मध्ये कल्प्यम् । एव पञ्चदश्यामुत्कृष्टा दुहिता । पञ्चम्यामवमा । मध्ये कल्प्यम् । षोडशस्वेव गमन गर्भहेतु । तत्रापि प्रथमम् । एव स्थिते नियमविधिरय योग्यत्वे सत्यृतावश्य सनिपतेत् । असनिपतन्पुत्रोत्पत्तिं निरुन्धान. प्रत्यवेयादिति । तथा च दोषस्मृतिः— ऋतुस्नाता तु यो भार्यां सनिधौ नोपगच्छति ।

तस्या रजसि तन्मास पितरस्तत्र शेरते ॥ इति ।

पुत्रगुणार्थितो वा( तया )पूर्वाः पूर्वा वर्जयतो न दोष । अन्ये तु परिसंख्यां मन्यन्ते । ऋतौ संनिपतेन्नान्यत्रेति । तेषामृतावनियमनादगमनेऽपि दोषाभावः । दोष-स्मरणमनुपपन्न स्यात्सर्वथा विधिर्न भवति रागप्राप्तत्वात्संनिपातस्य ॥ १६ ॥

*अन्तराले वि(ऽपि)दार एव ॥ १७ ॥

अन्तराले मध्ये । ऋत्वन्तरालेऽपि संनिपातस्य विदार एव सकामे सति । यथाऽऽत्मनो जितेन्द्रिय तथा(यतया) न तादृशपारवा(व)श्यम्। तथाऽपि भार्यायामेवेच्छन्त्या तद्रक्षणार्थमवश्य संनिपतेदिति वक्ष्यति । अप्रमत्ता रक्षयं(थ) तन्तुने(न्तु मे)त-मित्यादि । अनुव्रतमित्यनुवृत्ते. प्रतिषिद्धेष्वेतेषु न भवति ॥१७॥

ब्राह्मणवचनाच्च संवेशनम् ॥ १८ ॥

यदिदमनन्तरोक्त संवेशनं प्रमाणम् । 'काममाविजनितोः संभवाम ' इति ॥ १८ ॥

स्त्रीवाससैव संनिपातः स्यात् ॥ १९ ॥

एवकारो भिन्नक्रमः । स्त्रियो(या) भोगार्थं वासः तेन संनिपात एव स्यात् । तेन न सुप्रक्षालितेनापि ब्रह्मयज्ञादिकमिति ॥ १९ ॥

यावत्संनिपात चैव सहचर्या ॥ २० ॥

यावत्संनिपातमेव दम्पत्योः सहाऽऽसनम् ॥ २० ॥

ततो नाना ॥ २१ ॥

ततश्च पृथक् शयीयाताम् ॥ २१ ॥

उदकोपस्पर्शनम् ॥ २२ ॥

ततो द्वयोरप्युदकोपस्पर्शन स्नानं कर्तव्यम् । इदमृतुकाले ॥ २२ ॥

---

* अत्र ' अन्तरालेऽपि दार एव ' इत्थंकारेण सूत्रेण भाव्यमिति भाति । ' ऋत्वन्तरालेऽपि संनिपातर एव सकामे सति ' इत्यर्थस्य चारुतया संभाव्यमानत्वात् । दार इति बहुवचना-भावस्तु च्छान्दसः ।

**अपि वा लेपान्प्रक्षाल्य पादौ चाऽऽचम्य प्रोक्ष
णमङ्गानाम् ॥ २३ ॥**

यदि वा रेतसो रजसश्च ये लेपास्तानद्भिर्मृदा च प्रक्षाल्य तथा पादौ च प्रक्षाल्याऽऽचम्याङ्गाना शिरःप्रभृतीना प्रोक्षण कर्तव्यम् । अनृतौ व्यवस्था । यावता प्रयतो मन्यते ॥ २३ ॥

**सर्ववर्णानाꣳ स्वधर्मानुष्ठाने परमपरिमितꣳ सुखम् ॥ २४ ॥**

सर्वेषा वर्णाना ब्राह्मणादीना चतुर्णा ये स्वधर्मा वर्णप्रयुक्ता आश्रमप्रयुक्ता उभयप्रयुक्ता वा तेषामवैगुण्येनाऽऽन्तादनुष्ठाने सति परमपरिमित सुख परमुत्कृष्टमपरिमितमक्षयं स्वर्गाख्यं तु सुख भवति ॥ २४ ॥

न केवलमेतावत् । किं तर्हि—

**ततः परिवृत्तौ कर्मशेषेण जातिꣳ रूपं बलं मेधां
प्रज्ञां द्रव्याणि स्वधर्मानुष्ठानमिति प्रतिपद्यते तच्च-
क्रवदुभयोर्लोकयोः सुख एव वर्तते ॥ २५ ॥**

ततः सुखानुभवादनन्तर परिवृत्तिरिह लोके जन्म भवति । तस्या च कर्मणो यः फलशेषोऽननुभुक्ताशस्तेन जाति ब्राह्मणादिका विशिष्टे च कुले जन्म भजति । रूपं रूपताम् । बलं प्राणाधिक्यं प्रतिपक्षनिग्रहक्षमम । मेधां ग्रन्थग्रहणशक्तिम् । प्रज्ञामर्थग्रहणशक्तिम् । द्रव्याणि स्वर्णादीनि । धर्मानुष्ठानम् । इतिकरणाद्यत्त्वन्यदप्येव युक्तं प्रतिपद्यते । सर्वत्र धर्मशेषो हेतुः । कर्माणि भुज्यमानानि सावशेषाणि भुज्यन्ते । ऐहिकस्य शरीरग्रहणादेरपि कर्मफलत्वाद्धर्मानुष्ठान प्रतिपद्यत इत्युक्तम् । यदा चैव तदा सर्ववर्णाना स्वधर्मानुष्ठानमिति प्रतिपद्यत इत्यन्त पुनर्भवतीत्यनुक्तमिति प्रसिद्धम् । तत्तस्माच्चक्रवदुभयोर्लोकयोरिह चामुष्मिंश्च सुख एव वर्तते । न जातु दुःखे दुःखानुबन्धे नैवानुवृत्तिर्भवतीत्यर्थः ॥ २५ ॥

शरीरोत्पत्तिसंस्कारा अप्यवस्थापेक्षा इति दर्शयितुं दृष्टान्तमाह—

**यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे
फलवृद्धिरेवम् ॥ २६ ॥**

चलोपो द्रष्टव्यः । यथा चौषधीना व्रीह्यादीनां वनस्पतीना चाऽऽम्रादीना बीजस्य [च] क्षेत्रविशेषाच्च कर्मविशेषाच्च संस्कारविशेषाच्च कृष्यादेश्च विशेषे फलवृद्धिर्भवति । एवं व्रीहियवा ऊषर उप्ता न प्ररोहन्ति । कृष्यादिपरिनिर्मितसुक्षेत्र उप्ताः स्तम्बकरयो भवन्ति । एवं पुरुषेऽपि गर्भाधानादिसंस्कारसपन्ने द्रष्टव्यम् ॥ २६ ॥

एतेन दोषफलवृद्धिर्निरुक्ता ॥ २७ ॥

एतेनैव न्यायेन दुष्कर्मफलवृद्धिरप्युक्ता वेदितव्या । तत्रोहेन पठनीयम्—सर्ववर्णानां स्वधर्माननुष्ठाने परमपरिमितं दुःखम् । ततः परिवृत्तौ कर्मफलदोषेण दुष्टा जात्यादिकामद्रव्यान्तामधर्मानुष्ठानमिति प्रतिपद्यते । यथौषधिवनस्पतीना बीजस्य क्षेत्रकर्मविशेषाभावे फलहानिरेवमिति ॥ २७ ॥

दोषपरिवृद्धावुदाहरणमाह—

स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा पर-
स्मिँल्लोकेऽपरिमिते निरये वृत्ते जायते चाण्डालो
ब्राह्मणः पौल्कसो राजन्यो वैणो वैश्यः ॥ २८ ॥

स्तेनः स्वर्णचोरः । अभिशस्तो ब्रह्महा स्तेनोऽभिशस्तो ब्राह्मणादिरमुष्मिँल्लोकेऽपरिमिते निरये दोषफलमनुभूय तस्मिन्वृत्ते परिक्षीणे ब्राह्मणश्चाण्डालो जायते । राजन्यः पौल्कसः । पुल्कस एव पौल्कसः । प्रज्ञादित्वादण् । वैश्यो वैणो जायते । वेणुर्तर्नकः । स एव वैणः ॥ २८ ॥

एवमेतेन वर्णपरिध्वंसा दोषफलैः कर्मभिर्दोषफ-
लासु योनिषु जायन्ते वर्णपरिध्वंसायाम् ॥ २९ ॥

यथा वर्णपरिध्वंसा वर्णेभ्यः प्रच्यवनम् । तस्या वर्णपरिध्वसाया यथा ब्राह्मणादयश्चण्डाला जायन्ते एतेन प्रकारेण स्तेनाभिशस्ताभ्यामन्येऽपि दोषफलकर्मभिर्दोषफलासु सूकरादिषु योनिषु जायन्ते । परिध्वंसाः स्वजातिपरिभ्रष्टाः सन्त इत्यर्थः । तत्तथाऽवगन्तव्या इति ॥ २९ ॥

चाण्डालोपस्पर्शने संभाषायां दर्शने च दोषस्तत्र
प्रायश्चित्तम् ॥ ३० ॥

चाण्डालोपस्पर्शने दोषो भवति । तथा संभाषाया दर्शने च । उपसमस्तमपि चाण्डालग्रहणमभिसंबध्यते । तत्र सर्वत्र प्रायश्चित्तं वक्ष्यते ॥ ३० ॥

अवगाहनमपामुपस्पर्शने संभाषाया ब्राह्मणसंभाषा
दर्शने ज्योतिषां दर्शनम् ॥ ३१ ॥ ( ख० १ ) ।

उपस्पर्शने सत्यवगाहन प्रायश्चितम् । ऋजुनी उत्तरे । अप्रकरणे प्रायश्चित्ताभिधान स्वकर्मप्रच्युताना निन्दार्थम् । निन्दितश्चण्डालः यस्य दर्शनेऽपि प्रायश्चित्तं स वा एष जायते स्वकर्मप्रच्युतो ब्राह्मण इति ॥ ३१ ॥ ( ख० १ ) ।

आर्याः प्रयता वैश्वदेवेऽन्नꣳ सꣳस्कर्तारः स्युः ॥ ३२ ॥

अन्न भक्ष्य भोज्य पेयादिक सस्कुर्युः । न स्वय नापि स्त्रियः ॥ ३२ ॥

भाषां कास क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥ ३३ ॥

भाषा शब्दोच्चारणम् । कास कण्ठे घुरुघुराशब्द· । क्षवथु. क्षुत् । एतन्नित-यमन्नाभिमुखो न कुर्यात् । सस्कर्तारः स्युरिति बहुवचने प्रकृते वर्जयेदित्येकवचनं प्रत्येकमुपदेश्यान्( शार्थम् ) ॥ ३३ ॥

केशानङ्गं वाससाऽऽलभ्याप उपस्पृशेत् ॥ ३४ ॥

केशादीनात्मदीयानन्यदीयान्वाऽऽलभ्य स्पृष्ट्वाऽप उपस्पृशेत् । नेदं स्नानं किं तर्हि स्पर्शनम् । केशालम्भे पूर्वमप्युपस्पर्शन विहितम् । इदं तु वचन तत्रोक्तवैकल्पिकं शकृदाद्युपस्पर्शने मा भूदिति ॥ ३४ ।

आर्याधिष्ठिता वा शूद्राः सꣳस्कर्तारः स्युः ॥ ३५ ॥

त्रैवर्णिकैरधिष्ठिताः शूद्राः सस्कर्तारः स्युः । प्रकृतत्वादन्नस्येति गम्यते ॥ ३५ ॥

तेषाꣳ स एवाऽऽचमनकल्पः ॥ ३६ ॥

तेषा शूद्राणामन्नसंस्कारेऽधिकृताना स एवाऽऽचमनकल्पो वेदितव्यो यस्त्वाऽऽ पचति। यदि ब्राह्मणस्य हृदयंगमाभिरद्भिः, यदि क्षत्रियस्य कण्ठगताभिरद्भिः, यदि वैश्यस्य तालुगताभिरद्भिरिन्द्रियोपस्पर्शन च भवति ॥ ३६ ॥

अधिकमहरहः केशश्मश्रुलोमनखवापनम् ॥ ३७ ॥

शूद्राः पचन्तः प्रत्यहं केशादि वपेयुः । इदमेषामधिकमार्येभ्यः ॥ ३७ ॥

उदकोपस्पर्शनं च सह वाससा ॥ ३८ ॥

सहैव च वाससा स्नानं कुर्यु । आर्याणा तु परिहितं वासो निधाय कौपीनाच्छादनमात्रेणापि स्नान भवति। शूद्राणामपि पाकादन्यत्र । तथा च मनुः—'सवासोऽपि सहाजस्रं विज्ञायते जलाशये' इति ॥ ३८ ॥

अपि वाऽष्टमीष्वेव पर्वसु वा वपेरन् ॥ ३९ ॥

यदि वाऽष्टमीष्वेव वपेरन्केशादीन्पर्वस्वेव वा प्रत्यह वा वपेरन् । अन्तर्भावितण्यर्थो वापये(पये)युरित्यर्थः । तथा च लोमनखवापनमिति पूर्वत्रणिच( णिच् )प्रयुक्तः ( क्तम् ) ॥ ३९ ॥

**परोक्षमन्नꣳ सꣳस्कृतमग्नावधिश्रित्याद्भिरद्भो( द्भिः प्रो )क्षेत्तद्दे(द्दे)व पवित्रमित्याचक्षते ॥ ४० ॥**

यदि शूद्राः परोक्षमन्नं संस्कुर्युरार्यैरनाधिष्ठितास्तदा तत्परोक्षमन्नं संस्कृतमाहृत स्वयमग्नावधिश्रयेत् । अधिश्रित्याद्भिः प्रोक्षेत् । प्रोक्षितमन्नं भूत देवपवित्रमित्याचक्षते । देवानामपि तत्पवित्रं किं पुनर्मनुष्याणामिति ॥ ४० ॥

**सिद्धेऽन्ने तिष्ठन्भूतमिति स्वामिने प्रब्रूयात् ॥ ४१ ॥**

सिद्धे पक्केऽन्ने तिष्ठन्वा( पा )चकोऽधिष्ठितो भूतमिति प्रब्रूयात् । कस्मै । यस्य तदन्नं तस्मै स्वामिने भूतमिति निष्पन्नमित्यर्थः ॥ ४१ ॥

**तत्सुभूतमिति प्रतिवचनः ॥ ४२ ॥**

तत्सुभूतमित्यादि प्रतिवचनो मन्त्रः । तदन्नं सुभूतं सुनिष्पन्नम् ॥ ४२ ॥

**गृहमेधिनो यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः ॥ ४३ ॥**

गृहमेधिनो यदशनीयं पक्कमपक्कं वोपस्थितं तस्यैकदेशेन होमा बलयश्च वक्ष्यमाणाः कर्तव्याः । स्वर्गः पुष्टिश्च तेषां फलमिति ॥ ४३ ॥

**तेषामुपयोगे द्वादशाहं ब्रह्मचर्यमधःशय्या क्षारलवणमधुमांसवर्जनं च ॥ ४४ ॥**

तेषां होमानां च बलीनां च ये मन्त्रास्तेषामुपयोगे नियमपूर्वके ग्रहणे द्वादशाहं ब्रह्मचर्यं मैथुनवर्जमधःशय्या स्थण्डिलशायित्वं क्षारलवणादिवर्जनं च भवति । उपयोक्तुरेव व्रतम् । अन्ये तु पत्न्या अपीच्छन्ति । उपयोगः प्रथमः प्रयोगः । तत्र च पत्न्या अपि सहाधिकार इति वदन्तः ॥ ४४ ॥

**उत्तमस्यैकरात्रमुपवासः ॥ ४५ ॥**

उत्तमस्य ' उत्तमेन वैहायसम् ' इति वक्ष्यमाणस्य ' ये भूताः प्रचरन्ति ' इत्यस्यैकरात्रमुपवासः कर्तव्यः ॥ ४५ ॥

**बलीनां तस्य तस्य देशसंस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम् ॥ ४६ ॥**

बलीनां तस्य तस्य बलै(ले)र्देशसंस्कारः कर्तव्यः । कः पुनरसौ । हस्तेन परिमार्जनमवोक्षणं च । तत्कृत्वा बलीनां निवपनं न्युप्य पश्चात्परिषेचनं कर्तव्यम् । उपदेशग्रहणादेव सिद्धे पश्चाद्ग्रहणं मध्ये गन्धमाल्यादिदानार्थमित्याहुः । तस्य तस्येति वचनं

सत्यपि संभवे सकृदेव परिमार्जनमवोक्षणं च मा भूदेकस्मिन्देशे समवेतानामपि पृथक्पृथक् यथा स्यादिति ॥ ४६ ॥

औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रꣳ हस्तेनैता आहुतीर्जुहुयात् ॥ ४७ ॥

यत्र पच्यते स पचनाग्निः। औपासनवतामौपासने विधुरस्य पचन इति व्यवस्थितो विकल्पः। अन्ये तु तुल्यविकल्पं मन्यन्ते। यदैकपाकिनामपि भ्रात्रादीनां पृथक्पृथग्वैश्वदेवादिकं तदा पचन एव षड्भिराद्यैः 'अग्नये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, ध्रुवाय भूमाय स्वाहा, ध्रुवक्षितये स्वाहा, अच्युतक्षितये स्वाहा, अग्नये स्विष्टकृते स्वाहेत्येतैः। एते मन्त्रा उपनिषद्भागे पठिताः। यद्यपि सोमाय स्वाहेति पाठे न पठित तथाऽप्योषधिहविष्केषु सर्वत्र तस्य प्रवृत्तिरिति वदन्तः सोमाय स्वाहेति द्वितीयाजुह्वति। [स्विष्ट]कृत्त्वात्तमपि सप्तम जुह्वति, अग्नये स्विष्टकृते स्वाहेति। आचार्यस्तु 'अग्नये स्वाहा' इत्यादि स्विष्टकृदन्ताः षडाहुतीर्मन्यते। हस्तग्रहणं दर्व्यादिनिवृत्त्यर्थम्। केचित्तु 'सूर्याय स्वाहा, प्रजापतये स्वाहा' इति द्वे आहुती जुह्वति। 'औपासनदेवताभ्यश्च' इत्याश्वलायनस्मरणात्। उभयतः परिषेचनं यथापुरस्तात्। 'अन्वमꣳस्थाः प्रासावीः' इति मन्त्रान्तान्सन्नमतीति गृह्योक्तविधिनाऽत्रानुक्तत्वात् ॥ ४७ ॥

एवं बलीनां देशे देशे समवेतानाꣳ सकृत्सकृदन्ते परिषेचनम् ॥ ४८ ॥

यथा षण्णामाहुतीनां परिषेचनतन्त्रं विभवात्। एवं बलयोऽप्येकदेशसमवेताः 'उत्तरैर्ब्रह्मसदने' इत्यादयस्तेषां यदन्ते परिषेचनं प्राप्तं पश्चात्परिषेचनं यथा षण्णामित्यनेन विहित सकृत्सर्वान्ते सकृत्सकृत्कर्तव्यं न प्रत्येक पृथगिति। असत्यस्मिन्सूत्रे पूर्वस्य तस्य तन्त्रेति वचनाद्यथा परिमार्जनमवोक्षणं च प्रत्येक पृथग्भवति तथा परिषेचनमपि स्यात्। अत्र चोपदेशवशादेव ये एकदेशबलयस्तेषामेव सकृदन्ते परिषेचनं न याद‍ृच्छिकसम्भवे। तेन यद्यप्यगारस्योत्तरप्रदेशः श्रुत्यादेशस्तथाऽपि कामलिङ्गस्य पृथक्परिषेचनं भवति ॥ ४८ ॥

सति सूपे सꣳसृष्टेन कार्याः ॥ ४९ ॥

सति सूपे तत्संसृष्टेन(सृष्टा) बलयः कार्याः। अन्ये स्वन्नेऽपि व्यञ्जने संसर्गमिच्छन्

नि। तथा बौधायनः—'काममितरेष्वायतनेषु' इति। एष एवव्यञ्जनसंस्कारः सूपस्यापि। व्यञ्जनेन संसृष्टेनान्नेन बलयः कार्याः सति संभव इत्यमिति ॥ ४९ ॥

अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गम् ॥ ५० ॥

अपरेणाग्निमग्नेः पश्चात्सप्तमाष्टमाभ्यां 'धर्माय स्वाहा, अधर्माय स्वाहा' इत्येताभ्यां बलिहरणं कर्तव्यम्। उदगपवर्गं न प्रागपवर्गम् ॥ ५० ॥

उदधानसंनिधौ नवमेन ॥ ५१ ॥

उदकं यत्र धीयते तदुदधानं मणिकाख्यम्। तस्य संनिधौ नवमेन 'अद्भ्यः स्वाहा' इत्यनेन ॥ ५१ ॥

मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम् ॥ ५२ ॥

'ओषधिवनस्पतिभ्यः स्वाहा, रक्षोदेवजनेभ्यः स्वाहा' इत्येताभ्याम ॥ ५२ ॥

उत्तरपूर्वार्धेऽगारस्योत्तरैश्चतुर्भिः ॥ ५३ ॥

गृह्याभ्यः स्वाहा, अवसानेभ्यः स्वाहा, अवसानपतिभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहा' इत्येतैः प्रागपवर्गमित्येव ॥ ५३ ॥

शय्यादेशे कामलिङ्गेन ॥ ५४ ॥

कामाय स्वाहा' इति ॥ ५४ ॥

देहल्यामन्तरिक्षलिङ्गेन ॥ ५५ ॥

देहली द्वारस्याधस्तात्। तस्याधोवेदिकेत्येके। अन्ये त्वन्तर्द्वारस्य च ग्रहणम्। तत्र अन्तरिक्षाय स्वाहा' इति ॥ ५५ ॥

उत्तरेणापिधान्याम् ॥ ५६ ॥

येनापिधीयते द्वारं साऽपिधानी कपाटम्। तदर्गलमित्यन्ये। तत्र 'यदेजति जगति [ यच्च चेष्टति नाम्नो भागो यन्नाम्ने ] स्वाहा' इति ॥ ५६ ॥

उत्तरैर्ब्रह्मसदने ॥ ५७ ॥

अगारस्यो(स्ये)त्यनुवृत्तेः(वर्तते)। तस्य यो ब्रह्मसदनाख्यो देशो वास्तुविद्याप्रसिद्धो मध्येऽगारस्य तत्रोत्तरैर्दशभिः 'पृथिव्यै स्वा०, अन्तरिक्षाय०, दिवे०, सूर्याय०, चन्द्रमसे०, नक्षत्रेभ्य०, इन्द्राय०, बृहस्पतये०, प्रजापतये०, ब्रह्मणे स्वाहा' इत्येतैः प्रागपवर्गमित्येव। अपर आह—मध्येऽगारस्येत्यत्र देशस्योपयुक्तत्वाद्ब्रह्म( ह्मा ) यत्र सीदति गार्ह्ये[ षु ] कर्मसु, अग्नेर्दक्षिणतः स ब्रह्मसदनस्तत्रेति ॥ ५७ ॥

दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिर्दद्यात् ॥ ५८ ॥

अनन्तराणां बलीनां दक्षिणतः ' स्वधा पितृभ्य ' इत्यनेन बलिं कुर्यात् । प्राचीनावीत्यवाचीनपाणिश्च भूत्वा दक्षिणं पाणिमुत्तानं कृत्वाऽङ्गुष्ठतर्जन्योरन्तरालेन ।।९८।।

रौद्र उत्तरो यथादेवतम् ।। ५९ ।।

पितृबलेरुत्तरतो रौद्रबलिर्यथादेवतम् । प्राचीनावीत्यवाचीनपाणिरिति नानुवर्तत इत्यर्थः । ' नमो रुद्राय पशुपतये स्वाहा ' इति । तत्र यद्यपि पशुपतिलिङ्गमप्यस्ति तथाऽपि रुद्रस्यैव विशेषणमिति रौद्र इति व्यपदेश्यत्वेनोपपन्नं देवतास्मरणमपि रुद्रायेत्येव कुर्वन्ति । रुद्राय पशुपतय इत्येके । केचित्तूत्तरो मन्त्रो रौद्रः । स [ न ] पशुपतिदेवत्य इति व्याचक्षते । तेषां देय.( शः ) प्राग्वोदग्वा विज्ञ्यात् ॥ ९९ ॥

तयोर्नाना परिषेचनं धर्मभेदात् ॥ ६० ॥

तयोरनन्तरयोरन्त्ययोरेकस्मिन्देशे समवेतयोरपि नाना पृथक्परिषेचनं कर्तव्यम् । कुतः । धर्मभेदात् । पित्र्यस्याप्रदक्षिणं परिषेचनम् । इतरस्य दैवत्वात्प्रदक्षिणमिति ॥ ६० ॥

नक्तमेवोत्तमेन वैहायसः ।। ६१ ॥

उत्तमेन

' ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः ।
तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा '

इत्यनेन नक्तम् । ये भूताः प्रचरन्ति दिवा बलिमिति दिवा । एवं पदत्यागेन मन्त्रपाठः । आश्वलायनोऽपि–दिवाचारिभ्यो नक्तचारिभ्य इति नक्तमेव वैहायसो रात्रावेव वैहायसः कर्तव्य. । रात्रा आकाश एव देय. । दिवा भूमौ । तथा च बौधायनः— अथाऽऽकाश उत्क्षिपति ' ये भूताः प्रचरन्ति नक्तम् ' इति । अपर आह–एवकारो भिन्नक्रमः नक्तमुत्तमेन बलिरिति । तत्तदल्पत( त्र बल्यन्त )रार्णां रात्रौनिवृत्तिरिति ।। ६१ ॥

एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च ॥ ६२ ॥

य एताननन्तरोक्तान्होमान्बलींश्चाव्यग्रः समाहितमना भूत्वा यथोपदेशमुपदेशानतिक्रमेण कुरुते तस्य नित्य. स्वर्गः पुष्टिश्च नित्या । ' स्वर्गपुष्टिसंयुक्ताः '[1] इति यत्पूर्वमुक्तं तस्यार्थवादता मा भूदिति पुनर्वचनम् । पुष्टिस्वर्गौ नित्यावेव भवतः । न प्रबलैरपि कर्मान्तरैर्बाधनमिति ॥ ६२ ॥

---

१ ' गृहमेधिनो यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः ' इत्यत्रेति शेषः ।

अग्रं च देयम् ॥ ६३ ॥

बलिहरणानन्तरमग्रं च देयं देवं ( व ) पितृभूतमनुष्येभ्यः । चकारादेते मन्त्राः—'देवेभ्य. स्वाहा, पितृभ्यः स्वधाऽस्तु, भूतेभ्यो नमः, मनुष्येभ्यो हन्त' इति ॥ १३ ॥

अतिथीनेवाग्रे भोजयेत् ॥ ६४ ॥

अतिथीन्वक्ष्यति । तानेवाग्रे भोजयेत् । न स्वयं सहसा भुञ्जीत प्रागेव । एवमतिथिभ्यतिरिक्तानन्यानपि भोजयितव्यान्पश्चाद्भोजयेत ॥ १४ ॥

कुमारान्रोगसंयुक्तांश्चान्तर्वत्नीः ॥ ६५ ॥

ये च गृहवर्तिनः कुमारादयस्तानप्यग्रे भोजयेत् । आपस्तम्बस्तु—' बालान्वृद्धान्रोगसयुक्तान्स्त्रीश्चान्तर्वत्नीः' अन्तर्वत्नीग्रहणादेव सिद्धे स्त्रीग्रहणं स्वस्रादीनामपि ग्रहणार्थम् । अन्तर्वत्नीग्रहणं स(र्वत्र) च पूर्वा(जा)र्थम् ॥ १५ ॥

काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयाताम् ॥ ६६ ॥

काले वैश्वदेवान्तेऽन्नार्थिनमुपस्थितं स्वामिनौ गृहपती न प्रत्याचक्षीयाताम् । अवश्यं किंचित्तस्मै देयमिति ॥ १६ ॥

अभावे किं कर्तव्य(व्यमि)तामित्याह—

अभावे तृणानि भूमिरुदकं कल्याणी वागित्येतानि
वै सतोऽगारे न क्षीयन्ते कदाचनेति ॥ ६७ ॥

वैशब्दः प्रसिद्धौ । अत एव उपचाराः कर्तव्याः । इतिशब्दप्रयोगादेवं धर्मज्ञा उपदिशन्तीति ॥ १७ ॥

एवंवृत्तावनन्तलोकौ भवतः ॥ ६८ ॥

यौ गृहमेधिनावेवं तदेवंवृत्तौ भवतस्तयोरनन्ता लोका भवन्ति । ज्योतिष्टोमादिभ्योऽपि हि कतिपयदिनसाध्येभ्यो दुष्करमेवैतद्व्रतम् ॥ १८ ॥

ब्राह्मणायानधीयानायाऽऽसनमुदकं भोजनमिति
देयं न प्रत्युत्तिष्ठेत् ॥ ६९ ॥

यद्यनधीयानो ब्राह्मणोऽतिथिरागच्छेत्तदा तस्मा आसनादिकं देयम् । प्रत्युत्थानं न कर्तव्यम् । अस्मादेव ज्ञायतेऽधीयानाय प्रत्युत्थेयमिति ॥ १९ ॥

---

१ 'ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः' ॥ इति ( मार्क० पु० अ० २९ श्लो० ३७ ) अग्रप्रमाणमुक्तम् ।

अभिवादनायैवोत्तिष्ठेदि(द)त्यभिवाद्यश्चेत् ॥ ७० ॥

न प्रत्युत्थानायोत्तिष्ठेत् । अप्यत्यभिवाद्यश्चेदातिथिस्तह्यभिवादनार्थमेवोत्तिष्ठेत् ॥७०॥

राजन्यवैश्यौ च ॥ ७१ ॥ ( ख० २ )।

अधीयानावपि नोत्तिष्ठेत् । अतिथिपूजा कार्यैव ॥ ७१ ॥ ( ख० २ ) ।

शूद्रमभ्यागतं कर्मणि नियुञ्ज्यादथास्मै [ दद्यात् ] ॥ ७२ ॥

यदि शूद्रो द्विजानतिथिरभ्यागच्छति तमुदकाहरणादौ कर्मणि नियुञ्जीत । अथै-तस्मिन्कृते तस्मै भोजनं दद्यात् ॥ ७२ ॥

दासा वा स्वामिकुलादाहृत्यातिथिवच्छूद्रं भोज-
येयुः ॥ ७३ ॥

अभ्यागते(अथवा येऽस्य ) गृहमेधिनो दासास्ते स्वामिकुलादाहृत्य शूद्रमतिथिं भोजयेयुः । अतिथिवद्भोजयेयुरिति । वत्करणं सादरभोजनमात्रं न पूजा कार्येति ॥ ७३ ॥

नित्यमुत्तरं वासः कार्यम् ॥ ७४ ॥

' उपासने गुरूणाम् ' इत्यादिना केषुचित्कालेषु यज्ञोपवीतं विहितम् । इह तु प्रकरणाद्गृहस्थस्य नित्यमुत्तरं वासो धार्यमित्युच्यते । तत्र मनुः—' कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ' इति । बौधायनस्तु—कौशसूत्रं वा त्रिवृद्यज्ञोपवीतमिति ॥७४॥

अपि वा सूत्रमेवोपवीतार्थे ॥ ७५ ॥

अपि वा सूत्रमेव सर्वेषामुपवीतार्थे उपवीतकृत्ये भवति । न वाससैवेति नियमः । कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृदित्यादि मनूक्तं द्रष्टव्यम् ॥ ७५ ॥

यत्र भुज्यते तत्समू(मुं)ह्य निर्हृत्यावोक्ष्य तं देशम-
मत्रेभ्यो लेपान्संकृष्याद्भिः संसृज्य शुचौ देशे रु-
द्राय निनयेदेवं वास्तु शिवं भवति ॥ ७६ ॥

यत्र स्थाने भुज्यते तत्समू(मु)ह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपान्संकृष्य समूहन्या तत्रोच्छिष्टादिकं समूहीकृत्य निर्हरेदन्यतः । निर्हृत्य तं देशमवोक्षेत् । ततोऽमत्रेभ्यो येषु पाकः कृतस्तान्यमत्राणि तेभ्योऽन्नलेपानञ्जनलेपांश्च संकृष्य काष्ठादिनाऽपकृष्याद्भिः संमृज्योत्तरतः शुचौ देशे रुद्रायेदमस्त्विति निनयेत् । एवं कृते वास्तु शिवं समृद्धं भवति ॥ ७६ ॥

---

१ 'उपसर्गाद्ध्रस्व ऊहते ' ( पा० सू० ७।४।२३ ) इत्यनेन ह्रस्वः ।

ब्राह्मण आचार्यः स्मर्यते तु ॥ ७७ ॥

तुशब्दोऽवधारणार्थो भिन्नक्रमश्च । ब्राह्मण एव परेषामाचार्यो स्मर्यते धर्मशास्त्रेषु । इहापि वक्ष्यति ' स्वकर्म ब्राह्मणस्य ' इति । अनुवादोऽयम् ॥ ७७ ॥

आपदि राजन्यवैश्यावधीयानावपि न प्रत्युत्तिष्ठेद्ब्राह्मण आसनादिकं तु देयमिति कल्पान्तरं वक्तु तदाह—

आपदि ब्राह्मणेन राजन्ये वैश्ये वाऽध्ययनम् ॥ ७८ ॥

कर्तव्यमित्यध्याहारः । ब्राह्मणस्याध्यापयितुरलाभ आपत् । तत्र ब्राह्मणेन राजन्ये वैश्ये वाऽध्ययनं कर्तव्यं न त्वनधीयानेन स्थातव्यम् । [ ब्राह्मणे ने]ति वचनाद्राजन्यवैश्ययोर्नायमनुकल्पः ॥ ७८ ॥

अनुगमनं च पश्चात् ॥ ७९ ॥

पृष्ठतः कर्तव्यं यावदध्ययनम् । पश्चाद्ग्रहणं लज्जादिना कियत्यपि पार्श्वगतिर्मा भूदिति । सर्वशुश्रूषाप्रसङ्गे नियमः । ब्राह्मणस्यानुगमनमेव शुश्रूषेति । गौतमः—अनुगमनं शुश्रूषेति ॥ ७९ ॥

अ(त)त ऊर्ध्वं ब्राह्मण एवाग्रगतौ स्यात् ॥ ८० ॥

ततोऽध्ययनादूर्ध्वं समाप्तेऽध्ययने ब्राह्मण एवाग्रतो गच्छेत् ॥ ८० ॥

सर्वविद्यानामप्युपनिषदामु(मु)पाकृत्यानध्ययनं तदहः ॥ ८१ ॥

कर्मणि षष्ठी । सर्वविद्या अप्युपनिषद उपाकृत्याध्येतुमारभ्य तदहरनध्ययनम् । तस्मिन्नहन्यध्ययनं न कर्तव्यम् । उपनिषद्ग्रहणं प्राधान्यख्यापनार्थम् । ब्राह्मणा आयाता वसिष्ठोऽप्यायात इतिवत् ॥ ८१ ॥

अधीत्य नाभिक्रमणꣳ सद्यः ॥ ८२ ॥

अधीत्य 'अधीत्य वेदꣳ स्नानम्' इत्यवसर आचार्यसकाशात्सद्योऽभिक्रमणं न कर्तव्यं नापगन्तव्यम् । प्रायेण तु मकारात्परमिकारमधीयते । तत्राप्येष एवार्थः । इकारस्तु च्छान्दसोऽपपाठो वा उपाकरणात्परमिति ॥ ८२ ॥

यदि त्वरेत गुरोः समीक्षायाꣳ स्वाध्यायमधीत्य कामं गच्छेदेवमुभयोः शिवं भवति ॥ ८३ ॥

यदि त्वरा तदाऽऽचार्यस्य समीक्षाया संदर्शने संश्रवे स्वाध्याय प्रश्नावरमधीत्य यथाकामं गच्छेत् । एवं कृत उभयोः शिष्याचार्ययोः शिवं भवति ॥ ८३ ॥

समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्या-
गम्योपसंगृह्य न बीभत्समान उदकमुपस्पृशेत्सा-
न्त्वयित्वा पूजयेत ॥ ८४ ॥

समावृत्तं चेच्छिष्यं कृतदरमाचार्योऽभ्यागच्छेदतिथिधर्मेण तमभिमुखोऽभ्यागम्य तमुपसंगृह्य यद्यपि तस्य चाण्डालादिस्पर्शः संभाव्यते] तथाऽपि न बीभत्समान उदकमुपस्पृशेन्न स्नायात् उपसंग्रहणे यौ धूलिधूसरौ पादौ स्पृष्ट्वा न बीभत्समान उदकमुपस्पृशेत् । सान्त्वयित्वा पूजयेत् । आपस्तम्बे विशेषः—ततस्तं पुरस्कृत्य गृहप्रवेशोऽग्रे कृत्वा पूजासाधनान्युपस्थाप्येति स्पष्टम् ॥ ८४ ॥

यथोपदेशम् ॥ ८५ ॥

गृह्योक्तेन मार्गेण मधुपर्केण पूजयेत् । पूजाविधानं गृह्योक्तस्यानुवादः ॥ ८५ ॥

आसनादिषु विशेष वक्तुमाह—

आसने भोजने भक्ष्ये शय्यायां वाससि वा संनिहि-
ते हीनतरवृत्तिः स्यात् ॥ ८६ ॥

सनिहित आचार्ये तस्मिन्नेव गृहेऽय(पे)वरकादिकं प्रविष्ट आसनादिषु हीनतरवृत्तिः स्यात् । तरनिर्देशान्नीच आसने गुणतोऽपि निकृष्ट आसीत । एवं भोजनादिष्वपि द्रष्टव्यम् ॥ ८६ ।

तिष्ठन्सव्येन पाणिना दक्षिणं बाहुमुपसंगृह्याऽऽचार्यमाचामयेत् ॥ ८७॥

तिष्ठन्निति प्रह्व उच्यते । स्थानयोगात् । न हि साक्षात्तिष्ठन्नाचमयितुं प्रभवति । सव्येन पाणिना दक्षिणमालभ्य दक्षिणेन करकादि गृहीत्वाऽऽचार्यमाचामयेत्स्वयमेव शिष्यः । एवं हि सधर्मता भवति । आचार्ये प्रकृते पुनराचार्यग्रहणमातिथ्यादन्यत्रा-प्याचार्यमाचामयते(न्ने)वमाचामयेदिति ॥ ८७ ॥

अन्यं वा समुदेतम् ॥ ८८ ॥

वाशब्दः समुच्चये । अन्यमप्येवमाचामयेत् । चेत्समुदेतः कुलशीलविद्यावृत्तै-रुपेतो भवति ॥ ८८ ॥

स्थानासनचङ्क्रमणस्मितेष्वनुचिकीर्षन् ॥ ८९ ॥

व्यवहितमपि स्यादित्यपेक्षते । चिकीर्षया करणं लक्ष्यते । स्थानासनादिष्वाचार्यस्य पश्चाद्भावी स्यान्न पूर्वभावी न युगपद्भावी ॥ ८९ ॥

---

१ अपव्रियन्ते संभज्यन्ते लोका अत्र, अपवरकोऽन्तर्गृहम् । 'ग्रहवृदृनिश्चिगमश्च' (पा॰ सू॰ ३।३।५८) इत्यप् । तत स्वार्थे क । 'दीपोऽपवरकस्यान्ते वर्तते तत्प्रभा बहिः' ।

संनिहितोच्चै मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठीवनदन्तस्कवननिःशृङ्खणभ्रूक्षेपतालनिष्ठ्यानीति ॥९०॥

वातकर्मापानवायोरुत्सर्गः। उच्चैर्भाषा महता स्था(स्व)नेन संभाषण केनापि। हासो हसनम्। ष्ठीवनं श्लेष्मादिनिरसनम्। दन्तस्कवनं दन्तमलापकर्षणम्। परस्परं घट्टनमित्यन्ये। निःशृङ्खणं स्वनासिकामलनिःसारणम्। भ्रूक्षेपण भ्रु(भ्रू)विक्षेपः। तालं हस्तयोरास्फालनम्। निष्ठ्यमङ्गुलिस्फोटण(नम्)। इतिशब्दादन्यदपि स्वैरासनादिकं वर्जयेदित्यपेक्षते। एतानि मूत्रकर्मादीन्याचार्यस्य संनिधौ न कुर्यादिति ॥ ९० ॥

दारे प्रजायां चोपस्पर्शनभाषविस्रम्भपूर्वाः परिवर्जयेत् ॥९१॥

उपस्पर्शनमालिङ्गनाघ्राणादि। भाषाः संभाषा वादप्रभृतयः। एता अप्याचार्ये संनिहिते दारे पु(प्र)जाविषयो(ये)ऽपि विस्रम्भ न कुर्यात्, ज्वरादिपरीक्षाया न दोषः॥९१॥

वाक्येन वाक्यस्य प्रतीघातमाचार्यस्य वर्जयेत् ॥ ९२ ॥

समीचीनस्येतरस्य वाऽऽत्मीयेन वाक्येन तादृशेन प्रतीघातं न कुर्यात् ॥ ९२ ॥

श्रेयसा च ॥ ९३ ॥

अन्येषामपि प्रशस्ततराणा [वाक्यं]वाक्येन न प्रतिहन्यात् ॥ ९३ ॥

ब्राह्मणदेवतासर्वभूतपरीवादाक्रोशांश्च वर्जयेत् ॥ ९४ ॥

ब्राह्मणदेवताग्रहणमादरार्थम्। अधिकदोषख्यापनाय सर्वेषामेव भूतानामपि तिरश्चा परीवादान् दोषवादानाक्रोशानश्ली(श्ली)लवादांश्च वर्जयेत्। परीवादस्य पुनःपुनर्वचनमतिशयेन वर्जनार्थम् ॥ ९४ ॥

विद्यया च विद्यानाम् ॥ ९५ ॥

परीवादाक्रोशांश्च वर्जयेत्। ऋग्वेद एव श्रोत्रसुखः। अन्ये श्रवणकटुका इति परीवादः। तैत्तिरीयकमुच्छिष्टशाखा। याज्ञवल्क्यादीनि ब्राह्मणानीदानींतनानीत्यादय आक्रोशाः ॥ ९५ ॥

यया विद्यया न विरोचेत पुनराचार्यं गत्वा नियमेन साधयेत् ॥ ९६ ॥

यया विद्ययाऽधीतया श्रुतया वा न विरोचेत न यशस्वी स्यात्तामित्यर्थाद्गम्यते तां विद्यां पुनः साधयेत्। यथा सम्यक् सिद्धो(द्धा) भवति तथा कुर्यात्। कथम्। आचार्यं तमेवान्यं वा गत्वाऽपूर्वाधिको[गमे] विद्यार्थस्य यो नियम उक्तस्तेन शुश्रूषादिना पुनस्तां विद्यां साधयेत् ॥ ९६ ॥

न चास्य समीपे अप्याग्निपरिमृजने कुर्यात् ॥ ९७ ॥

अस्याऽऽचार्यस्य संनिधौ जप्यमग्निकार्यादिकमग्निशुश्रूषा न कुर्यात् । परिमृजन-शब्देन परिचर्या लक्ष्यते ॥ ९७ ॥

अस्मिन्विषयेऽध्यापयितुर्नियममाह—

**उपाकरणाद्योत्सर्जनादध्यापयितुर्नियमो न नख-लोमापाकरणं श्राद्धं माꣳसं मैथुनमिति वर्ज-येत् ॥ ९८ ॥**

लोमोपाकरण लोमवापनम् । इदमनाहिताग्निविषयम् । आहिताग्नेस्तु 'अप्यस्पलो-मानि वापयेत' इति वाजसनेयकमित्यापस्तम्बोक्तेः ॥ ९८ ॥

**ऋत्वे वा जायाम् ॥ ९९ ॥**

ऋतुकाले वा जायामुपेयात् । छान्दसत्वाद्यलोप ऋत्व इति रूपसिद्धिः ॥ ९९ ॥

**यथागमꣳ शिष्येभ्यो विद्यासंप्रदाने वर्तमाने नियमेषु च युक्तः स्यात्तथा गृहमेध एवं वर्त-मानः पूर्वापरान्संबन्धानात्मान च क्षेमे युनक्ति ॥ १०० ॥**

पूर्वोक्तप्रकारेण शास्त्रान्तरप्रकारेण च नियमे वर्तमाने सति नियमान् कुर्यात् । तद्व-देव गृहस्थाश्रमे नियमान्कुर्यात् । एव युक्तो वर्तमानः पूर्वापरान्पूर्वाश्च पितृपितामहप्र-पितामहानपराश्च पुत्रपौत्रनप्तॄन्सबन्धान्सबन्धिनः पुरुषानात्मान च क्षेमेऽभयस्थाने नाकस्य पृष्ठे युनक्ति स्थापयति ॥ १०० ॥

**मनसा वाचा प्राणेन चक्षुस्त्वक्शिश्नोदराꣳ(र)म्भ-णान्यास्रावान्परिमृजानोऽमृतत्वाय कल्पते ॥ ॥ १०१ ॥ ( ख० ३ ) ।**

यैः पुरुष(ष)आस्राव्यते बहिराकृष्यते त आस्रावाः शब्दादयो विषयाः । तान्म-नसा वाचा वागिन्द्रियेण प्राणेन प्रयत्नेन परिमृजान. परिहरन्नसपादयन्मोक्षाय कल्पते । विषयानासक्तस्यैवान्तःकरणैकाग्र्येण ज्ञानलाभान्मुक्तिरित्यर्थः । तेषा विषयाणा बहिः-सारणहेतुमाह चक्षुरित्यादिना—चक्षुषि त्वचि शिश्न उदरे चाऽऽत्मत्वमारोप्य तदर्थ-

---

१ अत्र ऋतुशब्दाद्भवार्थे 'भवे छन्दसि । पा० सू० ४ । ४ । ११० ) ।' इत्यनेन यप्रत्यये 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ( पा० सू० ६ ४ । १७५ ) ' इति सूत्रेण ऋत्व्यमिति प्राप्त परं यकारलोपश्छान्दस इत्यर्थः ।

तयाऽऽरभ्यन्ते । ततस्तानि चक्षुरादीन्यारम्भणानि प्रापकानि(णि) येषां तान् । शरीराशि-श्नोदरार्था न( हि )विषयाकाङ्क्षा । नाऽऽत्मार्थम् । तस्याऽऽत्मन. प्राप्तये तत्त्यागः कार्य इत्यर्थः ॥ १०१ ॥ ( ख० ३ )।

**येन कृतावसथः स्यादतिथिर्न त प्रत्युत्तिष्ठेदनु ( नू )त्तिष्ठेद्वा पुरस्तादभिवादितः ॥ १०२ ॥**

येन गृहस्थेनातिथिः कृतावसथ. स्यात्कृतावासो दत्तावासः स्यात्सोऽतिथिस्तस्मिन्नहनि त गृहस्थ न प्रत्युत्तिष्ठेन्न प्रतिगच्छेन्नाप्यनूत्तिष्ठेत् । तमनुलक्षीकृत्य न तिष्ठेत् । द्वितीययाऽन्तरिक्ष्यानिति वचनाद्यद्द्वितीयादिद्व्य( ष्व )ह.सु च तं ( न )प्रत्युत्तिष्ठेन्ना-प्यासनात् । योऽतिथिस्तस्मिन्नहनि पूर्वमेवाभिवादितः । अ[ न ]भिवादिते तु प्रत्य-भिवादनाय प्रत्युत्तिष्ठेदनूत्तिष्ठेच्च ॥ १०२ ॥

**शेषभोज्यतिथीनां स्यात् ॥ १०३ ॥**

अतिथीनेवाग्रे भोजयेदित्येव सिद्धे वचनमिदं प्रमादाद्यदन्नं न दत्तमतिथये तन्न भुञ्जीतेत्येवमर्थम् ॥ १०३ ॥

**न रसान्गृहे भुञ्जीतानवशेष्य(ष)मतिथिभ्यः ॥१०४॥**

आगामिभ्योऽतिथिभ्यो यथा न किंचिद्गृहेऽवशिष्यते तथा गव्यादयो रसा न भोज्या. । सद्य. संपादयितुमशक्यत्वात् ॥ १०४ ॥

**नाऽऽत्मार्थमभिरूपमन्नं पाचयेत् ॥ १०५ ॥**

आत्मार्थमुद्दिश्याभिरूपमन्नमपूपादि न पाचयेत् ॥ १०५ ॥

**विशेषेणापुमान् ॥ १०६ ॥**

गृहस्थपुरुषादन्यो न सर्वथा पाचयेत् ॥ १०६ ॥

**गोमधुपर्कार्हो वेदाध्यायः समुदेतः ॥ १०७ ॥**

साङ्गवेदस्याध्येता वेदाध्यायः । समुदेतः कुलशीलसंपन्नः । स मधुपर्कमर्हति । गां च दक्षिणाम् ॥ १०७ ॥

**आचार्य ऋत्विक् स्नातकः श्वशुरो राजा वा धर्म-युक्तः ॥ १०८ ॥**

अवेदाध्याय(या) अप्याचार्यादयो मधुपर्कार्हाः । अत एव ज्ञायत एकदेशाध्यायि-नावप्यृत्विगाचार्यौ भवत इति । धर्मयुक्त इति राज्ञो विशेषणम् । वाशब्दः समुच्चये ॥ १०८ ॥

**आचार्यायर्त्विजे स्नातकाय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च ॥ १०९ ॥**

आचार्यादिभ्यः कृतमधुपर्केभ्यः संवत्सरादूर्ध्वमागतेभ्यो मधुपर्को गौर्दक्षिणा च। पूर्वमागतेभ्यो न तत्र गौर्दक्षिणा विधीयते ॥ १०९ ॥

कोऽसौ मधुपर्क इत्याह—

**दधिमधुसꣳसृष्टं मधुपर्कः पयो वा मधुसꣳसृष्टम् ॥ ११० ॥**

गृह्योक्तयोस्त्रिवृत्पाङ्क्तयोरभावेऽत्रापूर्वयोर्विधानम् ॥ ११० ॥

**अभाव उदकम् ॥ १११ ॥**

दधिपयसोरभाव उदकमपि देयम् । मधुसंसृष्टमित्येके । नेत्यन्ये । पूर्वत्र पुनर्मधुसंसृष्टग्रहणात् ॥ १११ ॥

वेदाध्याय इत्यत्र विवक्षितं वेदमाह—

**षडङ्गो वेदः ॥ ११२ ॥**

षड्भिरङ्गैर्युक्तो वेदोऽत्र गृह्यते ॥ ११२ ॥

कानि तान्यङ्गानीत्याह—

**छन्दःकल्पो व्याकरणं ज्योतिषं निरुक्तं शीक्षा छन्दोविचितिरिति ॥ ११३ ॥**

छन्दो वेदस्तं कल्पयती(ति) प्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन स्वाङ्गकलापेनोपेतस्य कर्मणः प्रयोगकल्पनयोपस्कुरुत इति च्छन्दःकल्पः सूत्राणि । व्याकरणं, अर्थविशेषमाश्रित्य पदमन्वाचक्षाणाना पदपदार्थप्रतिपादनेन वेदस्योपकारक विद्यास्थानम् । सूर्यादिज्योतींष्यधिकृत्य प्रवृत्तं शास्त्रं ज्योतिषम् । आदिवृद्ध्यभावे यत्नः कर्तव्यः । तदप्यध्ययनोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयदुपकारकम् । निरुक्तमपि व्याकरणस्यैव कार्त्स्न्यम् । शीक्षा वर्णाना स्थानप्रयत्नादिकमध्ययनकाले कर्मणि च मन्त्राणामुच्चारणप्रकार च दर्शयति । पृषोदरादित्वादार्दिदीर्घः । गायत्र्यादीनि च्छन्दांसि यया विचीयन्ते विचित्य ज्ञायन्ते सा छन्दोविचितिरिति । एतान्यङ्गान्यङ्गसमत्वादङ्गत्वम् ।

---

१ संज्ञापूर्वकशास्त्रस्यानित्यत्वादत्र वृद्ध्यभावोऽभ्युपगन्तव्यः ।

' मुख व्याकरण तस्य ज्योतिषं नेत्रमुच्यते ।
निरुक्त श्रोत्रमुद्दिष्टं छन्दसा विचितिः पदे ॥
शीक्षा घ्राणं तु वेदस्य हस्तौ कल्पान्प्रचक्षते ' ॥ इति ।

उपकारकत्वाच्च, उक्त उ[प]कारः ॥ ११३ ॥

अत्र चोदयति—

**शब्दार्थारम्भणानां तु कर्मणा॰ समाम्नायसमाप्तौ वेदशब्दस्तत्र संख्या विप्रतिषिद्धा ॥ ११४ ॥**

शब्दार्थतया यान्यारभ्यन्ते न प्रत्यक्षादिप्रमाणगोचरतया तानि शब्दार्थारम्भणानि कर्माणि वैदिकान्यग्निहोत्रादीनि । तेषा समाम्नाय उपदेशः । तस्य समाप्तौ स यावता ग्रन्थजातेन समाप्तोऽनुष्ठानपर्यन्तो भवति । तत्र वेदशब्दो वर्तते । वेदयति धर्मं वि-न्दन्त्यनेनेति वा धर्ममिति । न च ब्राह्मणमात्रेणानुष्ठानपर्यन्त उपदेशो भवति । किं तु कल्पसूत्रैरपि सह । ततश्च तेषामपि वेदस्वरूप एवानुप्रवेशात्षडेवाङ्गानि ॥ ११४ ॥

अत्र षट्संख्या विप्रतिषिद्धेति परिहरति—

**अङ्गानां च प्रधानैरव्यपदेश इति न्यायवित्समयः ॥ ११५ ॥**

अङ्गान्येव कल्पसूत्राणि न वेदरूपाणि । पौरुषेयत्वस्मरणात् । कतिपयान्येव हि तेषु ब्राह्मणवाक्यानि । भूयिष्ठानि स्ववाक्यानि । अङ्गाना च तेषा प्रधानवाचिभिः शब्दैश्छन्दो वेदो ब्राह्मणमित्यादिभिर्व्यपदेशो न न्यायवित्सिद्धान्तः । ताविमौ पूर्वपक्षसिद्धान्तौ कल्प-सूत्राधिकरणे स्पष्टं द्रष्टव्यौ यत्तूक्तं न मन्त्रब्राह्मणमात्रेण पूर्व(र्ण) उपदेश इति । नैष स्था-णोरपराधो यदेनमधो(न्धो) न पश्यति । पुरुषापराधः स भवति । अङ्गं तु(ङ्गत्वं) भवानाचष्ट कल्पसूत्राणामिय प्रयोगकल्पना कृतस्येति न्यायोपबृंहिताभ्या मन्त्रब्राह्मणाभ्यामिति वक्तव्यम् । नान्या गतिः । एव सति भवानपि यतता तादृश(श॰) स्यामिति । ततो मन्त्रब्राह्मणाभ्यामेव पूर्णमे(म)वमो(भो)त्स्यत इति ॥ ११५ ॥

**अतिथिं निराकृत्य यत्रगते भोजने स्मरेत्ततो विरम्योपोष्य श्वोभूते यथामनसं तर्पयित्वा स॰ साधयेत् ॥ ११६ ॥**

अतिथिमागत केनचित्कारणेन निराकृत्य भोजने प्रवृत्तो यत्रगते यदवस्थाप्राप्त-भोजनेऽविद्यया योऽसौ निराकृत इति तत्रैव भोजनाद्विरम्य तस्मिन्नहन्युपोष्य परेद्युस्त-मन्विष्य यथामनसं यथेच्छ तर्पयित्वा ससाधयेत् ॥ ११६ ॥

आ कुत इत्याह—

यानवन्तमा यानात् ॥ ११७ ॥

स चेदतिथिर्यानवान्भवति न(त) प्राकृतस्याऽऽरोहणादनुव्रजेत् ॥ ११७ ॥

यावन्नानुजानीयादितरः ॥ ११८ ॥

इतरो यानरहितः स यावन्नानुजानीयाद्गच्छति तावदनुव्रजेत् ॥ ११८ ॥

अप्रतीहा(भा)याः सीम्नो निवर्तेत ॥ ११९ ॥

यदि तस्यान्यपरि(र)तयाऽनुज्ञायामप्रतीहा(भा)बुद्धिर्न जायते ततः सीम्नि प्राप्तायां ततो निवर्तेत । प्रतेर्दीर्घश्छान्दसः । ससाधयेदित्यादि सर्वातिथिसाधारण त(न) निराकृत. विषयमात्रम् ॥ ११९ ॥

सर्वान्वैश्वदेवे भागिनः कुर्वीताऽऽश्वचाण्डालेभ्यः ॥ १२० ॥

वैश्वदेवान्ते भोजनार्थमुपस्थितान्सर्वानेव भागिन कुर्वीताऽऽश्वचाण्डालेभ्यः । अभि. विधावाङ् । तेभ्यः किंचिद्देयम् । तथा च मनुः–

' शुना च पतितानां च श्वपचा पापरोगिणाम् ।

वायसाना कृमीणा च शनकैर्निक्षिपेद्भुवि ॥ इति ॥ १२० ॥

नानर्हद्भ्यो ददातीत्येके ॥ १२१ ॥

अनर्हद्भ्यश्चण्डालादिभ्यो न दद्यादित्येके मन्यन्ते । तत्र दानेऽभ्युदय. । अदानेऽअ. प्रत्यवायः ॥ १२१ ॥

उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् ॥ १२२ ॥

उपेतः कृतोपनयनः (नोऽ)समावृत्तः । स्त्रीणामनुपनीतस्य चोच्छिष्ट न भुञ्जीत । एवं सति समावृत्तस्य चोच्छिष्टं भुञ्जानस्य न दोषः स्यात् । एव तर्ह्युपेत आऽन्तात्कृत दारश्च स्त्रीणामनुपेतस्य चोच्छिष्ट वर्जयेत् । एवमप्युपेतस्य कस्यचिदपि यदुच्छिष्ट तद्भोजने न दोषः स्यात् । पितुर्ज्येष्ठस्य चोच्छिष्ट भोक्तव्यमित्येतन्नियमार्थं भविष्यति पितुरेवेति भ्रातुरेवेति । यद्येवं सूत्रमेवेदमनर्थक तस्मादेव नियमादन्यत्राप्रसङ्गः। इद तर्ह्य (र्हि) प्रयोजनम् । यथा पिताऽनुपेत पुत्रस्तु प्रायश्चित्तं कृत्वा कृतोपनयनस्तदा सप्रति पितुरनुपेतस्य चोच्छिष्टं प्रतिषिध्यते । एव ज्येष्ठेऽपि द्रष्टव्यम् । एतदपि नास्ति प्रयो. जनम् । उक्त हि–'धर्मविप्रतिपत्तावभोज्यम् ' इति । 'तेषामभ्यागमन भोजन विद्या. (वा)हमिति वर्जयेत् ' इति । तथा स्त्रीणामित्येतत्तु मातुरुच्छिष्टस्य प्रतिषेधार्थम् । कथं प्रसङ्गः––'मातरि पितर्याचार्यवच्छ(च्छु)श्रूषा ' इति वचनात् । ' यदुच्छिष्ट प्राश्नाति हविरुच्छिष्टमेव तत्' इत्याचार्योच्छिष्टस्य हविष्ट्वेन संस्तवाच्च । एवमपि ' पितुर्ज्येष्ठस्य

च' इत्यत्र पितृग्रहणादेव सिद्धम् । तस्मात्केषुचिज्जनपदेषु भार्यया सह भोजनमाचरन्ति तस्य दुराचारत्वमनेन प्रतिप(पा)द्यते ॥ १२२ ॥

**सर्वाण्युदकपूर्वाणि दानानि ॥ १२३ ॥**

सर्वाणीति वचनाद्भिक्षाऽप्युदकपूर्वैव देया ॥ १२३ ॥

**यथाश्रुति विहारे च ॥ १२४ ॥**

एव चार्थ. । विहारे यज्ञकर्मणि यानि दानानि दक्षिणादीनि तानि यथाश्रुत्येव नोदकपूर्वाणि ॥ १२४ ॥

**ये च भृत्या नित्यास्तेषामनुपरोधेन संविभागो विहितः ॥ १२५ ॥**

ये नित्या नियता भृत्या दासकर्मका(कै)रादयस्तेषामुपरोधो न यथा भवति तथा वैश्वदेवान्त आगतेभ्य. सविभाग. कर्तव्यः ॥ १२५ ॥

**काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्नत्वेव दासं कर्मकार(क)रम् ॥ १२६ ॥**

दासो भूत्वा यः कर्म करोति स दासकर्मका(क)र. । तमात्माद्युपरोधेनापि नोपरुन्ध्यात् । किं पुनरागता(मा)र्थे तम(मु)परुन्ध्यादिति ॥ १२६ ॥

**तथा चाऽऽत्मन उपरोधं कुर्वीत यथा कर्मसु समर्थः स्यात् ॥ १२७ ॥**

कर्मस्वग्निहोत्रादिष्वार्जनेषु च यथा स्वयं समर्थो भवति तथाऽऽत्मानमुपरुन्ध्यात्कुटुम्बी ॥ १२७ ॥

**अथाप्युदाहरन्ति—अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।**
**द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥**
**आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रय. ।**
**अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥**

**इति ॥ १२८ ॥ ( ख० ४ ) ॥**

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे(धर्मसूत्रापरपर्याये) सप्तविंशप्रश्ने प्रथमः पटलः ॥ १ ॥

---

१ 'कर्मणि भृतौ '( पा० सू० पा० ३।२।२२ ) इति करोतेष्ट । ' भृतको भृतिभुक्कर्मकरो-वैतानिकोऽपि स. ' इत्यमर· ।

अथैतस्मिन्नात्मान नोपरुन्ध्यादिति विषये श्लोकावुदाहरन्ति । मुनेः सन्यासिनो भक्ष्या अष्टौ ग्रासाः । अ( आ )स्याविकारेण। अरण्यवासी वानप्रस्थ. । तस्य षोडश । द्वात्रिंशत द्वात्रिंशत्प्रथमार्थे द्वितीया । ग्रहस्थस्य ग्रासा द्वात्रिंशत् । ब्रह्मचारिणो विद्यार्थस्य नैष्ठिकस्य च ग्रासनियमो नास्ति । द्वितीयेन श्लोकेन कालयोर्भोजनमित्ययमपि नियमो नास्तीति पठ्यते । अनडुद्ग्रहण दृष्टान्तार्थः( र्थम् ) । सिध्यति( न्ति ) स्वकार्यक्षमा भवन्ति ॥ १२८ ॥ ( ख० ४ ) ॥

इति सत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्यायां महादेवदीक्षितविरचितायामुज्ज्वलाया वृत्तौ सप्तविंशप्रश्ने प्रथम. पटलः ॥ १ ॥

---

अथ द्वितीय पटल ।

जात्याचारसंशये धर्मार्थमागतमग्निमुपसमाधाय जातिमाचारं च पृच्छेत् ॥ १ ॥

अविज्ञातपूर्वो यो धर्मार्थमध्ययनार्थमागच्छेदुपासन्नोऽस्मि भगवन्मैत्रेण चक्षुषा पश्य शिवेन मनसा मे गृहाण प्रसीद मामध्यापयेति तज्जात्याचारसंशये सत्यग्निमुपसमाधाय यत्र क्वचाग्निमुपसमाधास्यन्त्स्यादन्यदुपनिदध्यादित्यन्त कृत्वा गृह्योक्तं न्युप्योपसमादधातीत्यन्त च कृत्वा तत्सनिधौ जातिमाचार च पृच्छेत्—किंगोत्रोऽसि सोम्य कमाचार चरसीति ॥ १ ॥

साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता साधुतां प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत ॥ २ ॥

एतस्मात्केवलमनधीतवेद इति ततोऽग्निरुपद्रष्टेत्यादि कर्मान्तमुक्त्वा शास्तुं शासितुमध्यापयितु धर्मा( र्मां )श्चोपदेष्टु प्रतिपद्येतोपक्रमेत ॥ २ ॥

अग्निरिव ज्वलन्नतिथिरभ्यागच्छति ॥ ३ ॥

पञ्चयज्ञान्तेऽतिथीनेवाग्रे भोजयेदित्युक्तम् । तत्सप्रकारं वक्तु तस्यावश्यं( श्य ) कर्तव्यतामनेनाऽऽह—अतिथिर्गृहानभ्यागच्छत्, अ( ग्न )ग्निरिव ज्वलन्नतिथिरभ्यागच्छति । तस्मादसौ भोजनादिभिरवश्य तर्पयितव्यः । निराशस्तु गच्छन्गृह दहेदिति ॥ ३ ॥

इदानीमतिथिलक्षणं वक्तुं तदुपयोगि श्रोत्रियलक्षणमाह

धर्मेण वेदानामेकां शाखामधीत्य श्रोत्रियो भवति ॥ ४ ॥

विद्यार्थस्य यो नियम. स धर्म । तेन वेदाना या काचन शाखामधीत्य श्रोत्रियो भवति । पुरुषस्य हि प्रतिवेदमेका शाखा भवति । याः (या) पूर्वै. परिगृहीताऽध्ययनानुष्ठानाभ्या सा प्रतिवेद स्वशाखा । तामधीत्य श्रोत्रियो भवतीति ननु(तु) प्रतिवेदमेकैक(का)मधीत्य श्रोत्रिय इति । लोकविरोधात् । लोके हि या काचनैकामधीयानः श्रोत्रिय इति प्रसिद्धः ॥ ४ ॥

अतिथिलक्षणमाह—

**स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छन्धर्मपुरस्कारो नान्नप्रयोजनः सोऽतिथिर्भवति ॥ ५ ॥**

आदितो यच्छब्दो द्रष्टव्यः । अन्ते स इति दर्शनात् । मध्ये श्रोत्रियलक्षणोपदेशात्तदुपजीवनेन सूत्र योज्यम् । यः श्रोत्रिय. स्वधर्मयुक्तः स्वधर्मनिरतं कुटुम्बिनं भार्यया सह वसन्तम् । गृहस्थाश्रमान्तरनिरासार्थमिदमुक्तम् । न हि ते पच्य(च)माना भवन्ति । भिक्षवो हि ते । अभ्यागच्छन्नुद्दिश्याऽऽगच्छन्धर्मपुरस्क(स्का)रः । आचार्यस्या(याद्य)र्थं भिक्षणं धर्मः । तत्पुरस्कारः । कर्मण्यण् । धर्मप्रयोजनो नान्नप्रयोजनः । य एवंभूतः सोऽतिथिर्भवतीति ॥ ५ ॥

**तस्य पूजायां शान्तिः स्वर्गश्च ॥ ६ ॥**

तस्यातिथेः पूजाया कृताया शान्तिरुपद्रवाणामभाव इति । मर्त्ये(प्रेत्य) च स्वर्गभावः ॥ ६ ॥

**तमभिमुखोऽभ्यागम्य यथावयः समेत्योपस्थाप्याथ तमाहारयेत् ॥ ७ ॥**

तमतिथिमभिमुखोऽभ्यागच्छेत् । अभ्यागम्य यथा वयसोऽनुरूपं समेत्य प्रत्युत्थानाभिवादना[दिना] समेयात्सह गच्छेत् । समेत्य च शिष्यान्वोपस्थाप्य तं प्रति तस्मिन्नागते तस्याऽऽसनमाहारयेच्छिष्यादिभिः । अभावे स्वयमेवाऽऽहरेत् ॥ ७ ॥

**न बहुपादमासनं भवतीत्येके ॥ ८ ॥**

शक्तौ सत्या बहुपादमासनं न देयम् । बहुपादमेव पीठादिकं न देयं मन्यन्ते स्वयं बहुपादं मन्यते ॥ ८ ॥

**अथास्य पादौ प्रक्षालयेच्छूद्रमिथुनावित्येके ॥ ९ ॥**

अथ गृह्योक्तविधेरनन्तरमस्य पादौ स्वय प्रक्षालयेत् । शूद्रा(द्रौ) प्रक्षालयेतामित्येके मन्यन्ते । दासवत इदमुक्तम् ॥ ९ ॥

अत्र विशेष.—

**अन्यतरोऽभिषेचने स्यात् ॥ १० ॥**

अभिषेचनं करकादिना जलावसेकः । तमेकः कुर्यादितरः प्रक्षालनम् ॥ १० ॥

**अथास्योदकमाहारयेन्मृन्मयेनेत्येके ॥ ११ ॥**

मृन्मयेन पात्रेण तस्योदकमाहर्तव्यमित्येके मन्यन्ते । स्वमतं तु तैजसेन ॥११॥

**नोदकमाहारयेदसमावृत्तः ॥ १२ ॥**

असमावृत्तो ब्रह्मच(चा)र्याचार्यप्रेषितः । स्वयमेव वाऽतिथिरागच्छति तदा नासावुदकमाहारयेत् । नासावुदकाहरणस्य प्रयोजके(कोऽ)स्मा उदकमाहर्तव्यमिति ॥१२॥

**अध्ययनसांवृत्तिश्चात्राधिका ॥ १३ ॥**

अत्रासमावृत्तेऽतिथावध्ययनसंवृत्तिश्चाधिका तस्मादतिथेः । अध्ययनस्य सह निष्पादनमध्ययनसंवृत्तिः । यः प्रदेशस्तस्याऽऽगच्छति स तेन सह कियन्तचित्कालं वक्तव्य इति । प्रसिद्धे तु पाठे पूर्वपादान्तस्य समोऽकारस्य च्छान्दसो दीर्घः ॥ १३ ॥

प्रसङ्गादाह—

**नास्तमित आदित्य उदकानयनं विद्यते ॥ १४ ॥**

नद्यादिभ्योऽहोरात्रपर्याप्तमुदकं दिवैव संभरणीयमित्यर्थोऽस्सिध्यति ॥ १४ ॥

**सान्त्वयित्वा भोजयेच्छक्तिविषयेणाद्भिरवरार्ध्येन ॥ १५ ॥**

ततः पादप्रक्षालनस्य समध्ययनस्य वाऽनन्तरमतिथिं प्रियवचनेन सान्त्वयेत् । सान्त्वयित्वा गव्यादिभी रसैः फलादिभिश्च भक्ष्यैस्तस्याशक्तावन्ततोऽद्भिरपि तावद्भोजयेत्तृप्तिं कुर्यात् । अवरार्ध्येनेति जघन्यकल्पना(ना) सूचयति । अप्यन्तत इत्यर्थः॥१५॥

**आवसथं दद्यादुपरिशय्यामास्तरणोपधानं सावस्तरणमभ्यञ्जनं च ॥ १६ ॥**

आवसथो विश्रमस्थानम् । उपरिशय्या खट्वा । आस्तरणं तूलिका । उपधानमुपबर्हणम् । अवस्तरणमुपपट. । तत्सहितमुपधानमास्तरणं च । अभ्यञ्जनं पादयोस्तैलं घृतं वा । एतत्सर्वं दद्यात् । भोजनात्पूर्वमूर्ध्वं वाऽपेक्षिते काले ॥ १६ ॥

**अन्नसंस्कर्तारमाहूय व्रीहीन् यवान्वा तदर्थान्निर्वपेत् ॥ १७ ॥**

य. पचति तमन्नसंस्कर्तारमाहूय तदर्थानतिथ्यर्थान्व्रीहीन्यवान्वा निर्वपेत्पृथग्दद्यादमुष्मै पचेति । व्रीहियवग्रहणमुपलक्षणम् । इदं भुक्तवत्सु सर्वेष्वतिथावुपस्थिते द्रष्टव्यम् ॥ १७ ॥

भोजनकाले त्या(त्वा)ह—

उद्धृतान्यन्नान्यवेक्षेतेदं भूया(यः३) इदं भूया(यः३) इति ॥ १८ ॥

यावन्तो भोक्तारस्तावन्त्यन्नान्युद्धृत्य पृथक्पात्रेषु कुर्यात् । स्वय सविभाग कृत्वा तान्यन्नान्यवेक्षेत किमिदं प्रभूतमिद वेति । विचारे प्लुतः । पूर्वे तु भाषायामिति ॥ १८ ॥

भूय उद्धरेत्येव ब्रूयात् ॥ १९ ॥

पूर्वोक्त प्रकारेणोऽऽतिथ्यमवेक्ष्य भुय. सुष्ठुत उद्धरेत्येव ब्रूयात् ॥ १९ ॥

द्विषन्द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमाᳪसमानस्य मीमाᳪसितस्य वा ॥ २० ॥

यः स्वयमतिथि द्विषन्भवति यो वाऽऽत्मानं द्वेष्टि यो वाऽऽत्मानं दोषेण मीमाᳪसमान आत्मनि दोष समावयति यो वा दोषेण मीमासितो यत्र लौकिको दोष संभावयति तस्य सर्वस्यान्न नाश्नीयात् ॥ २० ॥

अत्र हेतुः—

पाप्मानᳪ हि स तस्य भक्षयतीति ब्राह्मणम् ॥ २१ ॥ ( ख० ५ ) ।

[य] एवंविधस्यान्नमश्नाति स तस्य पाप्मानमेव भक्षयतीति श्रुतिः ॥२१॥ (ख०५) ।

स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यं प्रततः ॥ २२ ॥

स एष भक्षितो मनुष्ययज्ञ. प्राजापत्यः प्रजापतिना दृष्टस्तद्देवत्यो वा । कुटुम्बिनो नित्यं प्रततो यज्ञो नाग्निष्टोमादिवत्कादाचित्कः ॥ २२ ॥

तस्याग्नीनापादयति—

योऽतिथीनामग्निः स आहवनीयो यः कुटुम्बे स गार्हपत्यो यस्मिन्पच्यते सोऽन्वाहार्यपचनः ॥ २३ ॥

योऽतिथिना जाठराग्निः स आहवनीयः । तद्धि ( तत्र हि ) हूयते । यः कुटुम्बे गृहेऽग्निरौपासनः स गार्हपत्यः । नित्यधार्यत्वात् । यस्मिन्पच्यत एवाग्नौ सोऽन्वाहार्यपचनः दक्षिणाग्नि. । तत्रान्वाहार्यः पच्यते ॥ २३ ॥

ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥ २४ ॥

योऽतिथेः पूर्वमश्नाति स गृहाणा कुलस्य सबन्ध्यूर्जादिकमश्नाति भक्षयति विनाशयति । ऊर्गन्नम् । इष्टमग्निहोत्रादि । पूर्तं स्मार्तकर्म तथा कूपखननादि । अन्ये प्रसिद्धाः ॥ २४ ॥

---

( १ पा० सू० ८ । २ । ३८ )

पयसोपसिक्तमन्नमग्निष्टोमसंमितं मधुनाऽतिरात्रस
मितं मांसेन द्वादशाहसंमितमुदकेन प्रजावृद्धिरा
युषश्च ॥ २५ ॥

पयसोपसिक्तं यदन्नमग्निष्टोमसम तुल्यम् । सर्पिषोपसिक्तमन्नमिति प्रकृतमनुवर्तते । मांसेन सह दत्तमुदकेन प्रजावृद्धिर्भवति । आयुषश्च । समस्तमपि वृद्धिरिति सब- ध्यते ॥ २५ ॥

प्रिया अप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति ॥ २६ ॥

अप्रिया उदासीनाः । अद्विषन्तो( द्विषतो ) निषिद्धत्वात् ॥ २६ ॥

यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि ॥ २७ ॥

त्रिषु कालेषु दीयमानान्यन्नान्यस्य यज्ञस्य प्रातःसवनादीनि त्रीणि भवन्ति । तस्मात्सर्वेषु कालेषु दातव्यमिति ॥ २७ ॥

यदनुतिष्ठत्युदवस्यत्येव तत् ॥ २८ ॥

यद्गन्तुमुत्तिष्ठन्तमनूत्तिष्ठति तदुदवस्यत्येव । उदवसानीया साऽस्य यज्ञस्येति । प्रायेणोच्छब्द न पठन्ति । केवलमनुशब्दमेव पठन्ति । तत्राप्ययमर्थः । स एव ॥ २८ ॥

यत्सान्त(न्त्व)यित्वा भोजयति सा दक्षिणा प्रशस्ता ॥ २९ ॥

यत्सान्त( न्त्व )यित्वा प्रशसन्ति सा दक्षिणा ॥ २९ ॥

यत्संसाधयति ते विष्णुक्रमाः ॥ ३० ॥

संसाधनमनुव्रजनम् ॥ ३० ॥

यदुपावर्तते सोऽवभृथ इति हि ब्राह्मणम् ॥३१॥

उपावर्तनमनुव्रज्य प्रत्यावर्तनम् । इति ब्राह्मणमित्यस्य सर्वेण सबन्ध ॥ ३१ ॥

आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्यु-
देत्य ब्रूयाद्व्रात्य क्वावात्सीरिति व्रात्योदकं
व्रात्य तर्पयन्त्स्त्वति ॥ ३२ ॥

यद्याहिताग्निमुद्दिश्यातिथिरागच्छेत्तत एनमतिथिं स्वयमेवाभिमुखमुपसर्पेत् । अत्र स्वयमिति वचनादनाहिताग्निरन्येन शिष्यादिना कारयन्नपि न दुष्यति । अभ्युदेत्य ब्रूयात् । व्रात्य क्वावात्सीरिति कुशलप्रश्नः । व्रते साधुः व्रात्य । एष एव व्रात्य इति पूजाविधानम् । क पूर्वस्या रात्रौ स्थितोऽवात्सीरिति । व्रात्योदकमित्युदकदानम् । व्रात्य तर्पयन्त्स्त्वति रसादिभिस्तर्पयति । अनुस्वारमकारौ छान्दसौ । क्रियाभेदात्प्रतिमन्त्रमितिकारः । एतत्सर्वेषु कर्तव्यम् ॥ ३२ ॥

पुराऽग्निहोत्रस्य होमादुपांशु जपेद्व्रात्य यथा ते प्रियं तथाऽस्त्विति व्रात्य यथा ते वशस्तथाऽस्त्विति व्रात्य यथा ते कामस्तथाऽस्त्विति व्रात्य यथा ते निकामस्तथाऽस्त्विति ॥ ३३ ॥

स यदि होमकालेऽप्यासीत तदा पुरा होमादु( द् )परेणाग्निं दर्भेषु सादयित्वा व्रात्य यथा ते प्रियमित्यादिकान्मन्त्रानुपांशु जपेत् ब्रूयात् । तत्र प्रियमिति मन्त्रः । इतिशब्दप्रयोगादर्थभेदाच्चतुर्णां विकल्पः । समुच्चय इत्यन्ये । अत्र चाध्वर्युर्यजमानो वा यो होता स जपेत्ततो जुहुयात् ॥ ३३ ॥

यदि सायमहुतेऽग्निहोत्रेऽतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् । व्रात्य( त्या )तिसृज होष्यामीत्यतिसृष्टेन होतव्यम् । अनतिसृष्टश्चेज्जुहुयाद्दो( द्दो )षं ब्राह्मणमाह ॥ ३४ ॥

सायमहुतेऽग्निहोत्रे सति यद्यतिथिरागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्यातिसृजानुजानीहि होष्यामीति । ततो व्रात्योऽतिसृजेत् । अतिसृष्टेन होतव्यम् । यदि पुनरनतिसृष्टो नानुज्ञातो जुहुयात्तस्य दोष ब्राह्मणवाक्यमाह । तत्र पठितं प्रत्येतव्यम् । अत्र पक्षे स्वयं होमो नियतः ॥ ३४ ॥

एकरात्रं चेदतिथीन्वासयेत्पार्थिवाँल्लोकानभिजयति द्वितीययाऽन्तरिक्ष्यांस्तृतीयया दिव्यांश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमिताँल्लोकानभिजयतीति ब्राह्मणम् ॥ ३५ ॥

[य] एकरात्रमतिथीन्गृहे वासयति स पृथिव्यां भवा(वा)ँल्लोकानभिजयति । द्वितीयया रात्र्याऽन्तरिक्ष्यान् । तृतीयया दिव्यान् । चतुर्थ्या परावत. । सुखस्य परा मात्रा येषु लोकेषु तानभिजयति । अपरिमिताभि( भी ) रात्रीभिरपरिमिताँल्लोकानभिजयति । स्वयमनीरितत्वाद्ब्राह्मण भवतीति ॥ ३५ ॥

असमुदेतश्चेदतिथिरभ्यागच्छेदासनमुदकं भोजनं श्रोत्रियाय ददामीति दद्यादेवमस्य समृद्धं भवति ॥ ३६ ॥ ( ख० ६ )॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (धर्मसूत्रापरपर्याये) सप्तविंशप्रश्ने द्वितीयः पटलः ॥ २ ॥

विद्यया कुलशीलाभ्यां चासंपन्नोऽसमुदेतः । स चेदतिथिधर्मेणाऽऽगच्छति तस्यासनादिकमेव देयं न मधुपर्कादिकम् । आसनादिक तदपि श्रोत्रियाय ददामीति दद्यात् । एवमश्रोत्रियाय दत्तं तदपि समृद्धमधिकगुण भवति ॥ २६ ॥ ( ख० ६ ) ॥

इति सत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्यायां महादेवदीक्षितविरचितायामुज्ज्वलायां वृत्तौ सप्तविंशप्रश्ने द्वितीयः पटलः ॥ २ ॥

अथ तृतीय पटल. ।

सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिः संबन्धः ॥ १ ॥

सवर्णा चापूर्वा च शास्त्रविहिता चेति कर्मधारयः । सवर्णा सजातीया । ब्राह्मणस्य ब्राह्मणीत्यादि । अपूर्वाऽन्यस्मा अदत्ता न विद्यते पूर्वं पतिरस्या इति । शास्त्रविहिता या शास्त्रोक्तेन विवाहसंस्कारेण सस्कृता । असगोत्राय दुहितरं प्रयच्छेदित्यादि शास्त्रानुगुणा वा । एवंभूतायां यथर्तु गृह्योक्तेन ऋतुगमनकल्पेन गच्छतो ये पुत्रा जायन्ते तेषां 'स्वकर्म ब्राह्मणस्य' इत्यादिना पूर्वमुक्तैः कर्मभिः संबन्धो भवति । गच्छत(थ) इति थकारोऽपपाठ. ॥ १ ॥

दायेन चाव्यतिक्रमश्चोभयोः ॥ २ ॥

उभयोर्मातापित्रोर्दायेन च तेषां संबन्धो भवति । अव्यतिक्रमश्च ।[च इति] चेदर्थे । अव्यतिक्रमश्चेद्यदि ते मातरं पितरं न व्यतिक्रमेयुः । व्यतिक्रमे तु दायहानिरिति । अपर आह—उभयोरपि दायेन तेषां व्यतिक्रमो न कर्तव्योऽवश्यं देयो दाय इति ॥ २ ॥

पूर्ववत्यामसंस्कृतायां वर्णान्तरे च मैथुने दोष· ॥ ३ ॥

पूर्ववती, अन्येन पाणिग्रहणेन तद्वि(द्व)ती या । असस्कृता विवाहसंस्कारविरहिता । वर्णान्तर ब्राह्मणादेः क्षत्रियादि । पूर्ववत्यादिषु मैथुने सति दोषो भवति । कस्य तयोरेव मिथुनीभवि(व)तोः ॥ ३ ॥

तत्रापि दोषवान्पुत्र एवोत्पादि(दयि)तुः पुत्र एवेति ब्राह्मणम् ॥ ४ ॥

पञ्चम्यास्तसिल् । ' इतराभ्योऽपि दृश्यन्ते ' इत्याभ्यामप्युभाभ्यां पुत्र एवातिशयेन दोषवान् । तत्र पूर्ववत्यामुत्पन्नौ कुण्डगोलकौ । ' पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः । असंस्कृतायामुत्पन्नस्य नामान्तरं नास्ति । किंतु दुष्टत्वमेव । वर्णान्तरे तु जात्यन्तरम् । तत्र गौतम.—अनुलोमा(मा अ)नन्तरैकान्तराभ्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवा· । प्रतिलोमास्तु सूतमागधायोगवक्षत(त्तृ)वैदेहकचण्डाला इति । एवकारो दुहितृनिवृत्त्यर्थ. । तथा च वसिष्ठ.—पतितेनोत्पन्न· पतितो भवत्य· न्यत्र स्त्रियाः । सा हि परगामिनी । तामतिरिक्तामुपेयादिति । स्त्रीरत्नं दुष्कलाद्पीति मनु. ॥ ४ ॥

पुत्रेभ्यो दायविभाग वक्ष्यन्नन्यस्य भार्यायामन्येनोत्पादित. पुत्र किमुत्पादयितु· राहोस्विदुज्झितक्षेत्रिण इति विचारे निर्णयमाह—

उत्पादयितुः पुत्र इति ब्राह्मणम् ॥ ५ ॥

न केवल ब्राह्मणमेव यै(वै)दिकीगाथामप्युदाहरन्ति । विचार्यम् ॥ ९ ॥

इदानीमेवाहमीर्ष्यामि स्त्रीणां जनको नो पुरा
यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् ।
रेतोधाः पुत्र नयति परेत्य यमसादने तस्माद्भार्याः
रक्षन्ति बिभ्यन्तः पररेतसः । अप्रमत्ता रक्षथ
तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुर्जनयितुः
पुत्रो भवति सांपराये मोघं वेत्ता कुरुते तन्तु-
मेतमिति ॥ ६ ॥

जनयितु. क्षेत्रिणो वा पुत्र इति विवादे पराजितस्य क्षेत्रियं(णो) वचनम् । एता· वन्त कालमहं जनको मन्यमान इदानीमेव स्त्रीणामीर्ष्यामि । परपुरुषसंसर्गेण संभवेत् । कदा, इदानीं यमस्य सादने पितृलोके जनयितुः पुत्रो भवति । पुत्रकृत्यं परलोक गतस्य जनयितुरेव न क्षेत्रिण इत्यब्रुवन्धर्मज्ञाः । मृषा र(स) नार्थ. । किंचिद्विशेषेणोच्यन्ते(ते) रेतोधा बीजप्रदः पुत्र नयति । पुत्रदत्तपिण्डादिकमात्मानं प्रत्येति(प्राययति) परेत्य मृत्वा । यमसा· दने पितृलोके । तस्मात्कारणाद्भार्या रक्षन्ति पररेतसो बिभ्यन्तः । छान्दसोऽनुस्वारः । अतो यूयमप्यवहिता भूत्वा, एव(त) तन्तुं प्रजासतानं रक्षथ । लोडर्थे लट् । रक्षथ(त) कोऽर्थः । वो युष्माकं क्षेत्रे परेषा बीजानि [ मा ] वाप्सुः । व्यत्ययेन कर्मणि कर्तृ· प्रत्ययः । मा वप्सत, उप्तानि मा भूवन् । यस्मात्सांपराये परलोके जनयितुरेव पुत्र·

१ ( पा॰ सू॰ ५ । ३ । १४ ) ।

फलं भवति। वेत्ता तु भार्याया लब्धा क्षेत्री व्यर्थमेव तन्तुमेतं कुरुते, आत्मसात्करोति । इतिशब्दो गाथासमाप्तौ । एतच्च क्षेत्रिणोऽनुज्ञानमन्तरेण पुत्रोत्पादनविषयम् । यदा तु क्षेत्री वन्ध्यो रुग्णो वा प्रार्थयते मम क्षेत्रे पुत्रमुत्पादयतेति यदा वा सतानक्षये विधवा नियुङ्क्ते यथा विचित्रवीर्यस्य क्षेत्रे सत्यवतीवाक्याद्व्यासेनोत्पन्नः पुत्र उभयोरपि पुत्रो भवति बीजिनः क्षेत्रिणश्च । तथा चाऽऽचार्योऽपि गृह्य आह— यदि द्विपिता स्यादेकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेदिति । याज्ञवल्क्योऽप्याह—

अपुत्रेण परक्षेत्रे ति(नि)योगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ इति ।

नारदोऽपि—द्व्यामुष्यायणको दद्याद्द्वाभ्यां पिण्डोदके पृथक् ।
रिक्थयादर्धं समादध्याद्बीजक्षेत्रियो(त्रवतो)स्तथा ॥ इति ।

यदि पूर्ववत्यादिषु दोषः कथं तर्हि [उतथ्य]भारद्वाजौ व्यत्यस्य भार्ये जग्मु.(ग्मतुः) । वसिष्ठश्चाण्डालीमक्ष(क्ष)मालाम् । [प्रजापतिश्च] स्वां दुहितरम् ॥ ६ ॥

**दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम् ॥ ७ ॥**

सत्यं दृष्टोऽयमाचारः पूर्वेषाम् । स तु धर्मव्यतिक्रमो न धर्मः । गृह्यमाणा(ण)कारणत्वात् ॥ ७ ॥

न चैतावदेव साहसं च पूर्वेषां दृष्टम् । यथा जामदग्न्येन रामेण पितृवचनादविचारेण मातुः शिरश्छिन्नमिति किमिदानीं तेषामपि दोषः । नेत्याह—

**तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥ ८ ॥**

तादृशा(श) तेषां तेजः । सदैवविवैरपि पाप्मभिर्न प्रत्यवयन्ति । तद्यथैषीकातूलमग्नौ प्रहूयत एवं ह्येषां पाप्मानः प्रहूयन्ते ॥ ८ ॥

न चैतावताऽर्वाचीनानामपि तथा प्रसङ्ग इत्याह—

**तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः ॥ ९ ॥**

तदिति 'नपुंसकमनपुंसकेन' इत्येकशेष एकवद्भावश्च । तं व्यतिक्रमं तत्र(च्च) साहसमन्वीक्ष्य प्रयुञ्जानोऽवर इदानीतनः सीदति प्रत्यवैति । न ह्यग्निः सर्वं दहतीत्यस्माकमपि तथा शक्तिरिति ॥ ९ ॥

अत्र प्रसङ्गेनाऽऽह—

---

१ 'अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा' इति ( म० स्मृ० ९ । २३ ) । २ ( पा० सू० १ । २ । ६९ ) ।

दानं च क्रयधर्मश्चापत्यस्य च न विद्यते ॥ १० ॥

दानग्रहणेन विक्रयोऽपि गृह्यते । त्यागसाम्यात् । क्रयधर्म इति च प्रतिग्रहस्यापि ग्रहणम् । धर्मग्रहणात्स्वीकारसाम्याच्च । अपत्यस्य दानप्रतिग्रहक्रयविक्रया न कर्तव्या इति । द्वादशविधपुत्रविषये दत्तक्रीतयोरपि पुत्रयोर्मन्वादिभिः पठितत्वान्नायं सामान्येन प्रतिषेधः । किं तर्हि । ज्येष्ठपुत्रविषय एकपुत्रविषयः स्त्रीविषयो वा । तथा वसिष्ठः—न ज्येष्ठं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषाम् । न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः । पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चाऽऽवेद्य निवेशनस्य मध्ये व्याहृतेषु । याज्ञवल्क्यः—'नासि(स्ति)क्य व्रतलोपश्च सुतानां चैव विक्रयः' इति । बह्वृचब्राह्मणो(णे)ऽपि शुनःशेपाख्याने दृश्यते—'स ज्येष्ठं पुत्रं निगृह्णीत (ह्णान) उवाच ' इत्यादि । पुत्रप्रकरणेऽपत्यशब्दोपादाने(नं) च ज्येष्ठपुत्रविषयत्वस्य लिङ्गम् । न पतत्यनेनेत्यपत्यमिति ।

ऋणमस्मिन्स नय[ त ]त्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ इति ॥ १० ॥

विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते तस्माद्दुहितृमतेऽधिरथं शतं देयं तन्मिथुया कुर्यादिति तस्यां क्रयशब्दः संस्तुतिमात्रं धर्मार्थं संबन्धः ॥ ११ ॥

आर्षे विवाहे दुहितृमते दानं क्वचिद्वेदे श्रूयते । तस्माद्दुहितृमते रथेनाधिकं गवां शतं देयम् । तच्च दुहितृमान्मिथुया कुर्यान्मिथ्या कुर्यात् । मा देवानां मिथुयाकर्भागधेयमिति हि श्रूयते । मिथ्या कुर्यादिति कोऽर्थः । वरायैव पुनर्दद्यादिति । तदिदं दानं काम्यं कामनिमित्तं ' यथा युक्तो विवाहस्तथा युक्ता प्रजा भवति ' इति ऋषितुल्याः पुत्रा यथा स्युरिति । ततश्च धर्माश्च( र्थं ) न क्रमार्थम् । वस्तुतस्तस्या विवाहक्रियायां क्रयशब्दः क्वचित्स्मृतौ दृश्यते [स] संस्तुतिमात्रम् । द्रव्यप्रधानसाम्यात् । न मुख्यक्रयप्रतिपादनार्थम् । कुतः । यस्माद्धर्मार्थे संबन्धः । अत्र शेषः पूरणीयः (दं)पत्योरिति । आर्षेयदुहितृमते मिथुनौ गावौ देयाविति । अत्राप्येष एव न्यायः । अत्र मनुः—

यासामाददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं नव( तत् )कुमारीणामान( नृ )शंस्यं च केवलम् ॥ इति ।

---

१ आद्यान्तिमचकारद्वयं क. पुस्तके न दृश्यते ।

एतच्च सर्वदानं क्रये धर्मस्य विद्यत इत्यत्र व्यभिचारनिवृत्त्यर्थमित्युक्तम् ॥ ११ ॥

अथ दायविभागः—

एकधनेन ज्येष्ठं तोषयित्वा जीवन्पुत्रेभ्यो दायं विभजेत्समं क्लीबमुन्मत्तं पतितं च परिहाप्य ॥ १२ ॥

एकेन प्रधानेन केनचिद्धनेन गवादिना ज्येष्ठपुत्रं तोषयित्वा तृप्तिं कृत्वा जीवन्नेव पुत्रेभ्यो दायं विभजेत् । समं क्लीबमुत्प( न्म )त्त. पतितं च परिहाप्य । आत्मना परस्परं च । तेषा सामान्याभिधानात् । क्रम( मा )गतं च स्वयमावर्जितं च क्लीबादीन्वर्जयित्वा । क्लीबादिग्रहणं जात्यन्धादीनामप्युपलक्षणम् । यथाऽऽह मनुः—

अनर्हौ( नशौ ) क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये केचन निरिन्द्रियाः ॥ इति ।

अन्धादीना पुत्रसद्भावे तेंऽशहराः । एवमुन्मत्तपतितौ । क्लीबादयस्तु भर्तव्याः । अत्र विभागकालः स्मृत्यन्तरवशाद्ग्राह्यः । तत्र नारदः—

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृत्ते वाऽपि मर(रम)णात्पितर्युपरतस्पृहे ॥ इति ।

यदा च पुत्राणा पृथक्धर्मानुष्ठाने शक्तिसंबन्धस्ततः सोऽपि कालः । तस्मिन्याः (न्धर्माः) पृथक् क्रियते(न्त) इति दर्शनात् । जीवन्निति वचनाज्जीवन्नेवावश्यं पुत्रान्विभजेत् । एष धर्म इति प्रतिपादनाय । अन्यथा तदनर्थकम् । अजीवतोऽप्रसङ्गात् । स्मृत्यन्तरेषु स्वयमार्जिते पितुरिति(च्छ)या विषमविभागो दर्शितः । न स धर्म इत्याचार्यस्य पक्ष. । भार्याया अप्यंशो न प्रदर्शितः । आत्मन एवांशस्तस्या [अ]पीति मन्यते । वक्ष्यति च ' जायापत्योर्न विभागो विद्यते ' इति । केचित्तु पितुर्द्वावंशावित्याहुः—' द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ' इति । दृष्ट्या(र्शना)त् । अयमप्याचार्यपक्षो न भवति । यथा पुत्राणामेक एवांशः सभार्याणां तथा पितुरपीति । यद्वा पुत्राणामेवांशसाम्यमात्मनस्त्वधिको न दोषाय । अत्र हारीतः—पिताऽऽग्रयणः पुत्रा इतरे ग्रहाः, यदाऽऽग्रयणः स्कन्देदुपदस्येदितरेभ्यो गृह्णीयादिति । विभागादूर्ध्वं पित्रोर्जीवनाभावे पुत्रभागेभ्यो ग्राह्यमित्युक्तं भवति । इति वा विभागः ॥ १२ ॥

मृते कुटुम्बिनि तद्धनस्य [ गतिमाह ]—

**पुत्राभावे सपिण्डो यः प्रत्यासन्नः ॥ १३ ॥**

पुत्राभाव इति वचनात्सत्सु पुत्रेषु त एव गृह्णीयुरविशेषात्समम् । तत्र नारदीये विशेष.—

यच्छिष्टं प्रीतिदायेभ्यो दत्त्वर्णं पैतृकं च यत् ।
भ्रातृभिस्तद्विभक्तव्यमृणी स्यादन्यथा पिता ॥ इति ।

कात्यायनस्तु—

भ्राता(त्रा) पितृव्यमातृभ्या कुटुम्बार्थमृणं कृतम् ।
विभागकाले देयं तद्रिक्थिभिः सर्वमेवहि ॥ इति ।
पितुरूर्ध्वं विभजता माताऽप्यंशं समं हरेत् ॥

इति याज्ञवल्क्यवचनं तदत्र नोक्तम् । पुत्रैरेव वृत्तिरस्या इति । तथा च मनुः—

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ इति ।

एवं मातुरप्यभावे तद्धनं भर्तुः कुललब्धं स्वयमर्जितं पुत्रा अप्रत्ताश्चेद्दुहितरः समं गृह्णीयुः ।

स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते सा न मातृकम् ॥ इति ।

बृहस्पतिः—पितृकुललब्धं च (चा)प्रत्ता एव दुहितरः ।
मातुस्तु पैतृकं यत्स्यात्कुमारीभाग एव सः ॥ इति मनुः ।
अथ प्रत्ता दुहितरः पुत्राश्च व्यचर(भज)स्तदा ।
जनन्यां संस्थितायां तु समं सर्वे सहोदराः ॥
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥ इति च मानवे ।

अत्र व्यास.—असंस्कृतास्तु ये पुत्राः पैतृकादेव ते धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च तथाविधाः ॥ इति ।

अत्र क्रमविवाहे बृहस्पति.—

ब्रह्मक्षत्रियविट्शूद्रा विप्रोत्पन्नास्त्वनुक्रमात् ।
चतुस्त्रिद्व्येकभागेन भजेयुस्ते यथाक्रमम् ॥
क्षत्रजास्त्रिद्व्येकभागा विट्शूद्रौ द्व्येकभागिनौ ॥ इति ।

मानवे च स्पष्टमुक्तम्—

सर्वं वा रिक्थजात तद्दशधा प्रविभज्य तु ।
सम्यग्विभागं कुर्वीत विधिनाऽनेन धर्मवित् ॥
चतुरोंऽशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ।
वैश्यपुत्रो हरेद्द्व्यंशमंश शूद्रसुतो हरेत् ॥
यस्य तु ब्राह्मणी वन्ध्या मृता वा तत्र तु प्रजाः ।
क्षत्रियादिसुतास्त्रीणि क्रमाद्वि(त्रि)द्वे(द्व्ये)कभागतः ॥

यस्य-त्वेकस्यामेव पुत्रः स सर्वं हरेच्छूद्रा पुत्रवती। यथाऽऽह देवलः—

अ(आ)नुलोम्येकपुत्रस्तु पितु· सर्वस्वभाग्भवेत् ।
निषाद एकपुत्रस्तु विप्रस्यैव तृतीयभाक् ॥
द्वौ सकुल्प (ल्य.) सपिण्डो वा स्वधादाता स्वय हरेत्॥ इति ।

निषादः पारशव. । क्षेत्रविषये बृहस्पति.—

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् ॥
शूद्रो द्विजातिभिर्जातो न भूमेर्भागमर्हति ।
स्वजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥ इति ।

याज्ञवल्क्योऽपि—

जातो हि दास्या शूद्रेण कामतोंऽशो(श)हरो भवेत् ।
मृते पितरि कुर्युस्ते(त) भ्रातरस्त्वर्धभागिन.(कम्) ॥ इति ।

भार्याविषये विष्णुः—

मातरः पुत्रभागानुसारतो भागहारिणः (ण्यः) ॥ इति ।
औरसः पुत्रिकाबीजः क्षेत्रज. पुत्रिकासुत. ।
पौनर्भवश्च कानीनः सहोढो गू(गू)ढसंभवः ॥
दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापि विद्धकः ।
यत्र क्वचोपा(त्पा)दितश्च पुत्राख्या दश पञ्च च ॥
अनेनैव क्रमेणैषा पूर्वाभावे परः पर ।
पिण्डदोंऽशहरश्चेति प्रयाणे(प्रायेण) स्मृतिषु स्थिति· ॥

तत्रौरसो धर्मपत्नीजः 'सवर्णापूर्वशास्त्रविहितायाम्' इति पूर्वमुक्तः । गौतम.—
।पितोत्सृजेत्पुत्रिकामनपत्ये(त्यो)ऽग्निं प्रजापतिः(ॽ) चीष्माऽस्मदर्थमपत्यमिति सवाद्येति ।

बृहस्पतिः—एक एवौरसः पित्र्ये धने स्वामी प्रकीर्तितः ।
तत्तुल्या पुत्रिका प्रोक्ता भर्तव्यास्त्वपरः(रे) स्मृताः ॥ इति ।

अत्र मनुः—पुत्रिकायां कृतायां तु यदि पुत्रो न (ऽनु)जायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥ इति ।

याज्ञवल्क्य.—अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ इति ।
अयमेक एवोत्पादयितुर्बीजक्षेपस्तु क्षेत्रजः ।

बृहस्पतिः—पौत्रो यः पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
रिक्थे पिण्डाम्बुदाने च समौ संपरिकीर्तितौ ॥ इति ।

कश्यपः—सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूप्रसवा च या ॥ इति ।

कात्यायनः—क्लीबं विहाय पतितं या पुनर्लभते पतिम् ।
तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः ॥ इति ।

मनुः—पुत्र(पितृ)वेश्मनि कन्या तु य पुत्रं जनयेद्रहः ।
त कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवः ॥ इति ।

नारदः—कानीनश्च सहोढश्च गूढाया यश्च जायते ।
तेषां वोढा पिता ज्ञेयस्ते च भागहराः पितुः ॥ इति ।

वसिष्ठः—अप्रत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः ।
पौत्री मातामहस्तेन नू(द)द्यात्पिण्डं हरेद्धनम् ॥ इति ।

अनूढायामेव मृताया मातामहस्यासौ पुत्रः । अन्यथा वोढुः ।

मनुः—या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाता सती पुनः ।
वोढुः स गर्भे(र्भो) भवति सहोढ इति वोच्यते ।
उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ इति ।

दत्तः पूर्वमेवोक्त. । पैठीनसिः—'अथ दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहण(णे) प्रायेण(आर्षेयेण) जातास्तेऽसंग(ह)तकुलीना द्व्यामुष्यायणा भवन्तीति ।

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥
क्रीणीयाद्यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥
मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
समान(आत्मान) स्पर्शयेद्यस्य स्वयंदत्तस्तु स स्मृतः ॥ इति ।
सदृशं तु प्रकुर्यात्तं(द्य) गुणदोषविवर्जितम् ।
पुत्र पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
स( य ) पुत्र परिगृह्णीदपि(प)विद्धः स उच्यते ॥

सर्वे एते सजातीयाः । ' सजातीयेष्वय प्रोक्तस्तनयेषु मया विधिः ' इति याज्ञवल्क्यवचनात् । विष्णुः—

यत्र क्वचनोत्पादितस्तु द्वादश इति ।

याज्ञवल्क्यः—पिण्डदोंऽशहरश्चैषा पूर्वाभावे परः परः ॥ इति ।

मनुः—श्रेयसः श्रेयसोऽभावे पापीयान् रिक्थमर्हति ॥ इति ।

नारदः—क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने ।
ज्यायसोऽज्यायसो भावे जघन्यस्तदवाप्नुयात् ॥

देवलः—सर्वे ह्यनौरसस्यैते पुत्रा द( दा )यहराः स्मृताः ।
औरसेषु न तुल्यं ते तेषु ज्येष्ठा ( ज्यैष्ठ्यं ) न तिष्ठति ।
तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः ।
शेषास्तमुपजीवेयुर्ग्रासाच्छादनसंभृताः ॥ इति ।

मनुः—षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।
औरसो विभजन्दायं पित्र्य पञ्चममेव वा ॥ इति ।

बृहस्पतिः—क्षेत्रजाद्याः सुतास्त्वन्ये पञ्चषट्सप्तभागिनः ॥ इति ।

हारीतः—विभजिष्यमाणा एकविंशं कानीनाय दद्यादन्तिमं( द्विंशं ) पौनर्भवायैकोनविंशं द्व्यामुष्यायणायाष्टादशं क्षेत्रजाय सप्तदशं पुत्रिकागर्भपुत्रायेत्यरानौरसायेति । वसिष्ठः—पुत्रं प्रतिग्रहीष्यन्निति प्रक्रम्य तस्मिंश्चित्प्रतिगृहीत औरस उत्पद्यते चतुर्थभागिति । एवमेतेषु शास्त्रेषु विद्यमानेषु यदाचार्येण पूर्वमुक्तं ' तेषां कर्मभिः

संबन्धो दायेनाव्यतिक्रमश्च ' इति तद्धर्मपत्नीजेष्विति क्षेत्रजादीनां समाशहरत्वप्रतिषेधपरं वेदितव्यम् । अथाविभज्यम् । मनुः—

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जितम् ।
स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ॥ इति ।

कात्यायनः—न( ना )विद्याना [ तु ] वैद्येन देयं विद्याधनात्क्वचित् ।
समं विद्याधिकाना तु देयं वैद्येन तद्धनम् ॥
परभक्तप्रदानेन प्राप्तविद्यो यदाऽन्यतः ।
तथा प्राप्तं तु विधिना विद्याप्राप्तं तदुच्यते ॥ इति ।

व्यासः—पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत् ।
तस्य तन्नापहर्तव्यं शौर्यभार्याधनं भवेत् ॥ इति ।

याज्ञवल्क्यः—क्रमादभ्यागतं द्रव्यं ह्रु(हृ)तमभ्युद्धरेत्तु यः ।
दायादेभ्यो [न] तद्दद्याद्विद्यया लब्धमेव च ॥
येभ्यो(पत्यौ) जीवति यत्स्त्रीभिरलंकारो ध्रु(धृ)तो भवेत् ।
न तं भजेरन्दायादा भज्ज(भज)मानाः पतन्ति ते ॥

व्यासः—साधारणं समाश्रित्य यत्किंचिद्वाहनायुधम् ।
शौर्यादिनाऽऽप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः ॥ इति पुत्रविभागः ।

तदभावे तु मृतस्य यः प्रत्यासन्नः सपिण्डः स किं दायं लभेतेति वक्ष्यमाणेन संबन्धः । "[1] लेपभागाश्चतुर्थाद्याः पिण्डदस्तेषां साष्टादश क्षेत्रजाय सप्तदशं पुत्रिकागर्भपुत्रायेतरानौरसायेति । वसिष्ठः—पुत्रं प्रतिग्रहीष्यन्निति प्रक्रम्य तस्मिंश्चेत्प्रतिगृहीते चौरस उत्पद्यते चतुर्थभागिति । एवमेतेषु शास्त्रेषु विद्यमानेषु यदाचार्येण पूर्वमुक्तं तेषां कर्मभिः संबन्धो दायेनाव्यतिक्रमश्चेति " ।

लेपभागाश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
सप्तमः पिण्डदस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥ इति । सपिण्डलक्षणम् ।

तेषु यो यः प्रत्यासन्नः स स गृह्णीयात् । भार्यां तु रिक्थग्राहिणः सपिण्डा रक्षेयुर्न तु दायाद्या(दा) इत्याचार्यस्य पक्षः । श्रूयते हि तस्मात्स्त्रियो निरिन्द्रिया अदायादी(दा) इति । मनुरपि—

---

१ इत आरभ्य 'दायेनाव्यतिक्रमश्चेति' इत्यन्तो ग्रन्थो द्विर्लिखित इति । भाति अप्रासङ्गिकत्वात् ।

निरिन्द्रिया अदायादाः स्त्रियो नित्यमिति श्रुतिः ॥ इति ।

अत्र सपिण्डाद्यभावे बृहस्पति·—

अपु(न्य)त्र ब्राह्मणात्किंतु राजा धर्मपरायणः ।
तत्स्त्रीणा जीवनं दद्यादेष न्या(दा)यविधिः स्मृतः ॥
अन्नार्थं तण्डुलप्रस्थमपराह्णे तु साधनम् ।
वसन द्विपणक्रीतं देयमेतत्रिमासतः ॥
एतावदेव साध्वीना चोदितं विधवाश(ध)नम् ।
वसनस्याशनस्यैव [तथैव] रजकस्य च ॥
व्ययं व्यपोह्य तच्छिष्टं दायदानं प्रकल्पयेत् ।
धूमावसानिक श्राद्ध संध्याया स्नानतत्परा ॥
वसनाशनवासांसि विगणस्य(व्य)[धवे] मृते ॥ इति ।

व्यासः—द्विसाहस्रात्परो दायः स्त्रियै दद्याद्धनस्य तु ।
यत्तद्भर्त्रा धन दत्त सा यथाकाममाप्नुयात् ॥

पणाना द्वे सहस्रे तु परिमाणाय द्विसाहस्रः । एवं वरो दायः स्त्रिया नाधिक इति। एतदग्रभूते ज्ञातयश्च न रक्षेयुरिति ए(शङ्काया) पत्नी दुहितरश्चेत्यादि यानि पत्न्या दायप्राप्तिपराणि तान्यप्येवमेव द्रष्टव्यानि । अत्र पितरि भ्रातरि च सोदर्ये जीवति सोदर्यो भ्राता गृह्णीयादित्येके । तथा च शङ्खः—'अपुत्रस्य स्वर्यातस्य भ्रातृगामी द्रव्यं तदभावे मातापितरौ लभेयातां पत्नी वा ज्येष्ठा ' इति ।

देवलः—ततो दायमपुत्रस्य विभजेरन्सहोदराः ।
तुल्या दुहितरो वाऽपि ह्री(ध्रि)यमाणः पिना(ताऽ)पि च ॥
सवर्णा भ्रातरो माता भार्या चेति त(य)थाक्रमम् ॥ इति ।

याज्ञवल्क्यः—संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च ॥
अन्योदर्यस्तु संसृष्टी नान्योदर्यधनं हरेत् ।
असंसृष्टयपि च आदद्यात्सोदर्ये नान्यमातृकः ॥ इति ।

सोदर्येऽपि विशेषवचनात्पत्नीदुहितरश्चेत्यत्र भ्रातृग्रहणमपि भिन्नोदरविषयमपि प्रत्यासत्तिविषयात्पितैवेति वयम् । तदभावे भ्राता सोदर्यः । तदभावे तत्पुत्राः । तदभावे भिन्नोदरा. । तदभावे पितृव्य इत्यादि द्रष्टव्यम् । मात्रादयोऽपि स्त्रियो जीवनमात्रं लभेरन्निति ॥ १२ ॥

**तदभाव आचार्य आचार्याभावेऽन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् ॥ १४ ॥**

सपिण्डाभाव आचार्यो धनं हरेत् । तस्याभावेऽन्तेवासी हरेत् । हृत्वा च तदर्थेषु धर्मकृत्येषु तटाकखननादिषूपयोजयेत् । वाशब्दात्स्वयं नोपभुञ्जीत ॥ १४ ॥

**दुहिता वा ॥ १५ ॥**

[ दुहिता वा ] दाय हरेत् । पुत्राभाव इत्येके । अनन्तरोक्तविषयमित्यन्ये ॥१५॥

**सर्वाभावे राजा दायं हरेत् ॥ १६ ॥**

सर्वग्रहणाद्बन्धूना सगोत्राणा चाप्यभावे ॥ १६ ॥

**ज्येष्ठो दायाद इत्येके ॥ १७ ॥**

एके मन्यन्ते ज्येष्ठ एव पुत्रो दायहरः । इतरे तमुपजीवेयुः । सोऽपि तान् बिभृयात् पितेव परिपालयेदिति । तथा च गौतमः—सर्वां( वैं ) पूर्वजस्येतरान्बिभृयात् । इति ॥ १७ ॥

**देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य ॥ १८ ॥**

क्वचिद्देशे सुवर्णादि ज्येष्ठस्य भाग इत्याहुः । भूमौ जातं भौमं धान्यं माषादि । कृष्णायसमित्यन्ये ॥ १८ ॥

**रथः पितुः परिभाण्डं च गृहे ॥ १९ ॥**

रथः पितुरंते( शः ) गृहे च यत्परिभाण्डमुपकरण पीठादि तदपि ॥१९॥

**अलंकारो भार्याया ज्ञातिधनं चेत्येके ॥ २० ॥**

भार्यायास्तु धृतालंकारोंऽशो ज्ञातिभ्यः पितृभ्यश्च यल्लब्धं धनं तच्चेत्येके मन्यन्ते ॥ २० ॥

**तच्छास्त्रैर्विप्रतिषिद्धम् ॥ २१ ॥**

॥ २१ ॥

ज्येष्ठो दायाद इत्युक्तं तच्छास्त्रविरुद्धं दर्शयति—

**मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते ॥ २२ ॥**

पुत्रेभ्य इति बहुवचननिर्देशादविशेषश्रवणं तत्र चोद्यम् ॥ २२ ॥

**अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीत्येकवच्छ्रूयते ॥ २३ ॥**

अथापीति ननु चेत्यर्थ. । ज्येष्ठं पुत्रं धनेन निरवसाययन्[ न्ति पृथक्कुर्व ]न्तीत्ये कवच्छ्रूयते यथैक एव ज्येष्ठो दायादस्तदनुरूपमपि श्रूयत इति ॥ २३ ॥

परिहरति—

तथाऽपि नित्यानुवादमविधिमाहुर्न्यायविदो यथा
तस्मादजावयः पशूनां सह चरन्तीति तस्मात्स्ना-
तकस्य मुखं रेफायतीव तस्माद्बस्त[ श्च ]
श्रोत्रियश्च स्त्रीकामतमाविति ॥ २४ ॥

तथेति परिहारोपक्रमे । पशूना मध्येऽजाश्चावयश्च जातिभेदेऽपि सह चरन्ति । रेफा शोभा । इह तु तद्वत्यवे(मे)दोपचारः । तत्स्पष्टं स्नातकस्य मुखं कुण्डलादिना शोभते । इवशब्दो वाक्यालकारे । श्रोत्रियस्य स्त्रीकामतमत्व[माचा]र्यकुले चिरकाल ब्रह्मचारि-वासात् । यथैतानि वाक्यानि दृष्टमावमनुतिष्ठन्ति न किंचिद्विदधति । तथा तस्माज्ज्ये-ष्ठं पुत्रमित्यादिकमपीति न्यायविद आहु. । न च केवलमयमेवानुवाद. किं तर्हि ' मनु. पुत्रेभ्यः ' इत्यप्यनुवाद एव ॥ २४ ॥

सर्वे हि धर्मयुक्ता भागिनः ॥ २५ ॥

हिशब्दो हेतौ । यस्मादेतावनुवादौ न कस्यचिद्विधायकौ तस्माद्ये धर्मयुक्ताः पुत्राः सर्व एव ते भागिनः ॥ २५ ॥

यस्त्वधर्मेण द्रव्याणि प्रतिपादयेज्ज्येष्ठोऽपि तम
भागं कुर्यात्[1] ॥ २६ ॥ ( ख० ७ ) ।

यस्तु ज्येष्ठोऽप्यधर्मेण प्रतिपादयति द्रव्याणि विनियुङ्क्ते तावद्विभागेऽपि न दद्यात् । ऊर्ध्वं विभागे तु भ्रातरः । अपिशब्दात्किं तु नान्यमिति ज्येष्ठस्य प्राधान्यं ख्या-प्यते ॥ २६ ॥ ( ख० ७ ) ।

' जीवत्पु( न्पु )त्रेभ्यो दायं विभजेत् ' इत्यत्र भार्याया भागो न प्रदर्शितस्तत्र कारणमाह—

जायापत्योर्न विभागो विद्यते पाणिग्रहणाद्धि सहत्वं कर्मसु ॥ २७ ॥

कर्मार्थं द्रव्यम् । जायायाश्च न पृथक्कर्मस्वधिकारः । किं तर्हि । सहभावेन । ' य. स्त्वयां धर्मश्च[ रित ]व्यः सोऽनया सह ' इति वचनात् । तत्किं पृथग्द्रव्येणेति ॥ २७ ॥

---

१ क पुस्तके 'कुर्वीत ' इति पाठ. ।

**तथा पुण्यक्रियासु(फलेषु) ॥ २८ ॥**

पुण्यफलेषु स्वर्गादिष्वपि तथा सहत्वमेव । 'दिवि ज्योतिरजरमारभेताम्' इत्या॰दिभ्यो मन्त्रलिङ्गेभ्य. ॥ २८ ॥

**द्रव्यपरिग्रहेषु च ॥ २९ ॥**

द्रव्यार्जनेष्वपि सहत्वमेव । तत्पतिरार्जयति जाया गृहे निर्वहतीति योगक्षेमावुभावा. घ( भयाय )नाविति द्रव्यपरिग्रहे सहत्वम् ॥ २९ ॥

एतदेवोपपादयति—

**न हि भर्तृविप्रवासे स्त्रियो( स्त्रिया ) नैमित्तिके**
**दाने स्तेयमित्युपदिशन्ति ॥ ३० ॥**

हि यस्माद्भर्तुर्विप्रवासे सति च्छिन्दत्प्राणि दद्यादित्यादिकदाने कृते भार्याया न स्तेयमित्युपदिशन्ति धर्मज्ञाः । यदि भर्तुरेव द्रव्य स्यात्स्यादेव स्तेयम् । नैमित्तिके दान इति वचनाद्द्रव्यान्तरे स्तेय भवत्येव । एतदेव द्रव्ये साधारणेऽपि दम्पत्योर्वैषम्यं यत्प॰तिर्यथेष्ट विनियुङ्क्ते जाया त्वेतावदेवेति । न च पत्यु. स्त(स्व )द्रव्यस्य विनियोगः(गे) जायाया अनुग( म )त्यपेक्षा । स्वतन्त्रत्वात् । स्वतन्त्रोऽप्ययमौ गृहे यथा राजा राष्ट्रे । अत एव भार्याया न स्तेयशङ्का न भर्तु. ॥ ३० ॥

**एतेन देशकुलधर्मा व्याख्याताः ॥ ३१ ॥**

'ज्येष्ठो दाया[ दः ' इत्या ]दिकं शास्त्रविप्रतिषेधादप्रमाणकमित्युक्तम् । एतेन देशकुलधर्माश्च व्याख्याताः । शास्त्रविप्रतिषिद्धा मातुलसुतापरिणयनादयोऽप्रमाण विप_रीताः प्रमाणमिति । गौतमोऽप्याह—देशकुलधर्माश्चाऽऽम्नैरेव( र्मा: शास्त्रैरवि )रुद्धाः प्रमाणमिति ॥ ३१ ॥

**मातुश्च योनिसंबन्धेभ्यः पितुश्चाऽऽसप्तमात्पुरुषा-**
**द्यावता वा संबन्धो ज्ञायते तेषा प्रेतेषूदकोप**
**स्पर्शनं गर्भान्वर्जयित्वा परिसंवत्सरान् ॥ ३२ ॥**

मातुर्योनिसंबन्धा मातुलादय । पितुश्चाऽऽसप्तमात्पुरुषात्सबन्धाः सपिण्डाः । यावता वा सापिण्ड्यान्तरेण संबन्धो ज्ञायते स्मर्यते तज्जन्म( ना )नाम्ना चामुष्मायमस्मा(स्म)॰त्कूटस्थस्य वश्यः । एवमेवनामेति । तथा च मनुः—

सपिण्डता नु ( तु ) पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदत ( ने ) ॥ इति ।

तेषां प्रेतेषु मृतेषूदकोपस्पर्शनं मरणनिमित्तं स्नानं कर्तव्यम् । गर्भान्बालान्परिसंव-त्सरान्वर्जयित्वा । बालेषु मृतेषु स्नान न कर्तव्यमिति ॥ ३२ ॥

मातापितरावेव तेषु ॥ ३३ ॥

तेषु बालेषु मृतेषु मातापितरावेवोदकोपस्पर्शन कुर्याताम् ॥ ३३ ॥

हर्तारश्च ॥ ३४ ॥

ये च तान्बालान्मृतान्हरन्ति निर्हरन्ति तेऽप्युदकोपस्पर्शन कुर्युरिति ॥ ३४ ॥

भार्यायां परमगुरुसꣳस्थायां चाऽऽकालमभोजनम् ॥ ३५ ॥

भार्या पत्नी । परमगुरव आचार्यमातापितरः । संस्था मरणम् । भार्यायां संस्थितायां परमगुरूणां च संस्थायां सत्यां न केवलमुदकोपस्पर्शन किं तर्ह्यपरेद्युरा तस्मात्कालादभोजनम् ॥ ३५ ॥

आतुरव्यञ्जनानि कुर्वते ॥ ३६ ॥

आतुरत्वं व्यज्यते यैस्तानि कुर्वीरन्भार्यादिमरणे ॥ ३६ ॥

कानि पुरस्तानि—

केशान्प्रकीर्य पाꣳसूनोप्यैकवाससः सकृदवगाह्य
तत्संस्थमुदकमुत्सिच्योत्तीर्योपविशन्ति ॥ ३७ ॥

केशान्प्रकीर्य पांसूनावपन्ति । ओप्यैकवाससोऽनुत्तरीयाः । सकृदवमज्य( ज्ज्य ) प्रेतदिक्संस्थमुदकमूर्ध्वमुत्सिच्यामुकगोत्रायामुष्मै प्रेताय तिलोदकमुपतिष्ठत्वित्युत्सिञ्चेयुराचारात् । उदकादुत्तीर्य तीर उपविशन्ति दक्षिणामुखा एव ॥ ३७ ॥

एवं त्रिः ॥ ३८ ॥

एवमुक्तप्रकारेण त्रिरवमज्यो( ज्ज्यो )पविशेयुः ॥ ३८ ॥

अप्रतीक्षा ग्राममुपयन्ति यत्तत्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ ३९ ॥

अप्रतीक्षमाणाः पृष्ठतोऽनिरीक्षमाणा ग्राममुपयन्ति । अनेन बहिरिदं कर्मेत्यम्वगयने । यत्तत्र मृतविषये स्त्रियः कर्तव्यमाहुस्तत्कुर्वन्ति । अग्न्युपस्पर्शनं गवालम्भनादि । स्त्रियः [इति] स्मृतीना ग्रहणमिति प्रामाणिका व्याचक्षते ॥ ३९ ॥

इतरेषु चैक एतदेवोपदिशन्ति ॥ ४० ॥

आकालमभोजनमित्यादि यदुक्तमेतदितरेषु भार्यादिभ्योऽन्येष्वपि सपिण्डेषु मृतेषु कर्तव्यमित्येक आचार्या उपदिशन्ति ॥ ४० ॥

**एतस्मिन्कालेऽमात्याः केशश्मश्रूणि वापयन्ते ॥ ४१ ॥**

अमात्याः सपिण्डाः । स्पष्टमन्यत् ॥ ४१ ॥

**न समावृत्ता वापयेरन् ॥ ४२ ॥**

पूर्वापवादोऽयम् । अमात्येष्वपि गुरुकुलात्समावृत्ताः स्नातका न केशादि वापयेरन् ॥ ४२ ॥

**न विहारिण इत्येके ॥ ४३ ॥**

विहारिणो बालाः । तेऽपि न ॥ ४३ ॥

**अनशनानध्ययनोदचःशय्योदकस्पर्शनान्याकाल- मनूचानेषु द्व्यहं त्र्यहं षडहं द्वादशाहं वा गुरुष्व- म(न)शनं(न)वर्जं संवत्सरं मातापितर्याचार्य इत्ये के ॥ ४४ ॥**

अत्र व्याख्यानं त्रुटितं भाति ॥ ४४ ॥

**ब्राह्मणाञ्छुचीन्मन्त्रवतः सर्वकृत्येषु भोजयेत् ॥ ४५ ॥**

एकान्ते विधिप्रतिषेधानुसारिणः शुचयः । तान् । मन्त्रवतोऽधीतवेदान् । श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु दैवेषु पित्र्येषु मानुषेषु भोजयेत् । ‘ अन्ते ततो ब्राह्मणभोजनम् ’ इति स्मृत्यन्तरे दर्शनात् ॥ ४५ ॥

**देशतः कालतः शौचतः सम्यक्प्रतिगृ(ग्र)हीतृत इति दानानि प्रतिपादयेत् ॥ ४६ ॥**

सप्तम्यर्थे तसिल् । देशः प्रयागादिः । कालः सूर्यग्रहणादिः । शौचं कृच्छ्रादिसमाप्तिः । समीचीनः प्रतिग्रहीता ‘ तुल्यगुणेषु [व]योवृद्धः श्रेयान् ’ इत्यादिः । एतेषु दानानि देयानि प्रतिपादयेद्दद्यादिति ॥ ४६ ॥

**यस्याग्नौ न हूयते यस्य चाग्रं न दीयते न तद्भोक्तव्यम् ॥ ४७ ॥**

यस्यान्नस्यैकदेशोऽग्नौ न हूयते यस्य चोद्धृतस्याग्रं न दीयते न तद्भोक्तव्यम् ॥ ४७ ॥

**न क्षारलवणहोमो विद्यते ॥ ४८ ॥**

यद्भक्ष्यमाणमन्नं पश्यतो लालोत्पद्यते तत्क्षारं मुष(धा)लिकुचादि । क्षारलवणसंसृष्टं न तद्धोतव्यम् ॥ ४८ ॥

तथाऽयज्ञसंसृष्टस्य ॥ ४९ ॥

प(अव)रान्नमित्यापस्तम्ब. । अयज्ञ कुलत्थान्नम् । तत्संसृष्टस्यान्नस्य होमो न विद्यते ॥ ४९ ॥

अथ यस्यैवंविधमेव भोज्यमुपस्थितं तस्य कथ भोजन तत्राऽऽह—

अहविष्यस्य होम उदीचीनं [उष्णं] भस्मापोह्य तस्मि-
ञ्जुहुयाद्धुतमहुतं चाग्नौ भवति ॥ ५० ॥

औपासनात्पचनाद्वाऽग्नेरुदीचीनं भस्मापोह्योष्ण तस्मिन्भस्मनि जुहुयाद्वैश्वदेवहोमोक्त-मन्त्रक्रम इति ॥ ५० ॥

उत्तरे द्वे सूत्रे स्पष्टार्थे—

न स्त्री जुहुयात् ॥ ५१ ॥

नानुपेतः ॥ ५२ ॥

॥ ५१ ॥ ५२ ॥

आऽन्नप्राशनाद्गर्भा नाप्रयता भवन्ति ॥ ५३ ॥

अन्नप्राशनात्प्राक् गर्भा बाला अप्रयता न भवन्ति रजस्वलादिस्पर्शेऽपि । गौतम-स्त्वपा मार्जनमिच्छति । यथाऽऽह—अपा मार्जनं(न)प्रधावनावोक्षणेभ्य इति ॥ ५३ ॥

आ परिसंवत्सरादित्येके ॥ ५४ ॥

यावत्संवत्सरो न पूर्येत तावन्नाप्रयता गर्भा इत्येके मन्यन्ते ॥ ५४ ॥

यावता वा दिशो न प्रजानीयुः ॥ ५५ ॥

यावद्दिग्भागज्ञानं नास्ति तावन्नाप्रयता भवन्ति ॥ ५५ ॥

ओपनयनादित्येके ॥ ५६ ॥

उपनयनादर्वाङ् नाप्रयता इत्यपरे मन्यन्ते ॥ ५६ ॥

तत्रोपपत्तिः—

अत्र ह्यधिकारः शास्त्रैर्भवतीति ॥ ५७ ॥

यस्मादत्रोपनयने विधिनिषेधशास्त्रैरधिकारो भवति । इतिकरणं हेतौ ॥ ५७ ॥

सा निष्ठा ॥ ५८ ॥

उपनयनमपि परामृशतः स्वशब्दस्य निष्ठाशब्दसामानाधिकरण्यात्स्त्रीलिङ्गता । सा निष्ठा तदुपनयनमवसानमनधिकारस्येति ॥ ५८ ॥

स्मृतिश्च ॥ ५९ ॥ ( ख॰ ८ ) ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे(धर्मसूत्रापरपर्याये) सप्तविंशप्रश्ने तृतीयः पटलः ॥ ३ ॥

अस्मिन्नर्थे स्मृतिरपि भवति—प्रागुपनयनात्कामचारवादभक्षइति ॥५९॥(ख०८)॥

इति सत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्यायां महादेवदीक्षितविरचितायां मुज्ज्वलाया वृत्तौ सप्तविंशप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

अथ चतुर्थः पटलः ।

---

भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो माता पित्रोर्बुभूषा( र्षा )त्मभे(भै)षज्यमिच्छतश्चार्हतश्च नियमाविलोपे ॥ १ ॥

भिक्षणं याचनम् । तत्राऽऽचार्यो निमित्तम् । बुभूषा(र्षा) पोषणेच्छा । स्वस्य व्याध्या दिप्रतीकारमिच्छतः । अर्हतो विद्यावतोऽग्निहोत्रादौ नियमे योग्यस्यार्थाभावस्तल्लोप. ॥ १ ॥

तत्र गुणान्समीक्ष्य यथाशक्ति देयम् ॥ २ ॥

तत्रैवभूते भिक्षणे याचमानानां श्रुतवित्तादिकान्गुणान्समीक्ष्य शक्त्यनुरूपमवश्यं देयम् । अदानेन प्रत्यवायात् । गौतमस्तु निमित्तान्तरमप्याह—' गुर्वर्थनिवेशौषधार्थ वृत्तं क्षीणं यक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदिभिक्षमाणेषु कृतान्नमितरेषु ' इति । वैश्वजितो विश्वजिद्यागस्य कर्ता सर्वस्वदक्षिणः ॥ २ ॥

इन्द्रियप्रीत्यर्थस्य तु भिक्षणमनिमित्तं न तदाद्रियेत ॥ ३ ॥

इन्द्रियद्वाराऽऽत्मनः प्रीतिरिन्द्रियप्रीति. । तामर्थयमानो यो भिक्षेत स्रक्चन्दनादि तन्मूल्यं वा । तस्य तद्भिक्षणं नियमेन दानस्य निमित्त न भवति । तस्मान्न तदाद्रियेत । अन्नदानेऽपि न प्रत्यवायः । अन्नप्राप्त्यभावात् । विवाहो द्वि[ती]यो न निमित्तम् । तस्या प्रथमाया धर्मप्र[जा]ऽ(सं)पन्नायाम् । तदर्थमिदं वचनम् ॥ ३ ॥

स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः ॥ ४ ॥

सर्ववर्णाना स्वधर्मानुष्ठानं( न ) इत्युक्तम् । ते स्वधर्मा उच्यन्ते । पुत्रादिभ्यो दीयत इति दायः । तमादत्त इति दायादः । तस्य भावो दायाद्य दायस्वीकारः । क्षेत्रादिषु पतितानि मञ्जरीभूतानि ततश्च्युतानि वा ध(धा)न्यानि शिलशब्दार्थः । तेषामुञ्छनमङ्गुलीभिर्नखैर्वाऽऽदान शिलोञ्छः । एतान्यप्यध्ययनादीन्यष्टौ ब्राह्मणस्य स्वकर्म । तेषु यज्ञदानाध्ययनानि त्रिणि द्विजातिसमानकर्तव्यानि नियम्यन्ते । इतरा- ण्या(ण्य)र्थितया द्रव्यार्जन( ने ) प्रवृत्तस्योपायान्तरानिवृत्त्यर्थान्युपदिश्यन्ते । अध्या पनादिभिरेव द्रव्यमार्जयेन्न चौर्यादिभिरिति ॥ ४ ॥

अन्यच्चापरिगृहीतम् ॥ ५ ॥

यच्चाप्यन्यत्केनाप्यपरिगृहीतमारण्य मूलफलादि तेनापि जीवेदिति प्रकरणाद्गम्यते । एतेन विधिर्व्याख्यानः ॥ ५ ॥

एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानी ति परिहाप्य दण्डयुद्धाधिकानि ॥ ६ ॥

एतान्येव क्षत्रियस्य स्वकर्म , अध्यापनादीनि त्रीणि वर्जयित्वा दण्डलब्धयुद्धं चाधिकम् ॥ ६ ॥

क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष(क्ष्य) वणिज्याधिकम् ॥ ७ ॥

गवा रक्ष्यं गोरक्ष्यम् । भाव ष्यत् । वणिजो भावो वणिज्या क्रयविक्रयव्यवहारः । कुसीदं [च] । 'दूतवणिग्भ्या च ' इति यः ॥ ७ ॥

ना[न]नूचानमृत्विजं वृणीते न पणमानम् ॥ ८ ॥

साङ्गस्य वेदस्याध्येता प्रवक्ता चानूचानः । ए(अ)तादृशमृत्विजं न वृणीते । नाप्ये- तावद्देयमिति परिभाषा भाष(रिभाष)माणम् ॥ ८ ॥

अयाज्योऽनधीयानः ॥ ९ ॥

अनधीतवेदं न याजयेत । तदानीमपेक्षितं मन्त्रं यथाशक्ति वाचयन् ॥ ९ ॥

क्षत्रियस्य युद्धं स्वकर्मेत्युक्तं तत्कथ कर्तव्यमित्याह—

युद्धे तद्योगा यथोपायमुपदिशन्ति तथा प्रति पत्तव्यम् ॥ १० ॥

युद्धविषये तथा तथा प्रतिपत्तव्यं यथा तद्योगा इत्युपायमुपदिशन्ति । तस्मिन्युद्धक- र्मणि युद्धशास्त्रे येषा येषामभियोगाः ॥ १० ॥

न्यस्तायुधप्रकीर्णकेशप्राञ्जलिपराश(ङ्)वृत्तानामार्या वधं परिचक्षते ॥ ११ ॥

न्यस्तायुधस्त्यक्तायुधः। प्रकीर्णकेशः केशानपि नियन्तुमक्षमः। प्राञ्जलिः कृताञ्जलिः। पराशवृत्तः पराङ्मुखः। सर्व एते हीना.। एतेषा युद्धे वधमार्याः स(सं)गर्हते(न्ते)। परिगणनादन्येषा वधे न दोषः। तथा च गौतमः—'न दोषो हिंसायामाहवे' इति। न्यस्तायुधः प्रकीर्णकेश इति केचित्पठन्ति सोऽपपाठः ॥ ११ ॥

शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेषमुपदिशेद्यथाकर्म यथोक्तम्॥१२॥

यथाशास्त्रं गर्भाधानादिभिः सस्कारै. संस्कृता. शास्त्रैरधिगता अधिकृतास्तेषामिन्द्रियदौर्बल्यादजितेन्द्रियतया विप्रतिपन्नाना स्वकर्मतश्च्युताना निषिद्धेषु च प्रवृत्ताना शास्ता शासिताऽऽचार्यादिर्निर्वेष प्रायश्चित्तमुपादिशेत्। यथाकर्म कर्मानुरूपम्। यथोक्तं धर्मशास्त्रेषु ॥ १२ ॥

तस्य चेच्छास्त्रमतिप्रवर्तेरन् राजानं गमयेत् ॥ १३ ॥

तस्य चेच्छास्त्र शासनमतिप्रवर्तेरन्ननि(ति)वर्तेरन्(न्न) तत्र तिष्ठेयुः। स राजानं गमयेत्। एवमसौ करोतीति ॥ १३ ॥

राजा पुरोहितं धर्मार्थकुशलम् ॥ १४ ॥

स राजा धर्मशास्त्रेषु चार्थशास्त्रेषु च कुशल पुरोहित गमयेत्। विनीयतामसाविति ॥ १४ ॥

स ब्राह्मणान्नियच्छेत् ॥ १५ ॥

स पुरोहितो ब्राह्मणाश्चेदतिक्रमकारिणस्तान्नियच्छेत्। अनुरूपेषु प्रायश्चित्तेषु नियुञ्ज्यात् ॥ १५ ॥

अथ यदि तत्र ते न तिष्ठेयुस्तदा किं कर्तव्यमित्यत आह—

बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥ १६ ॥

नियमैस्ततस्तान्बन्धनोपवासादिभिरुपशोषयेत्। बलविशेषेण बलानुरूपम्। वधदास्यवर्जम्। वधस्ताडनादिः। वधं दास्यं च वर्जयित्वा। सर्वमन्यद्बन्धनादिकं बलानुरूपं कारयेत्। यावत्ते मन्येरञ्श्चरेम प्रायश्चित्तम् ॥ १६ ॥

एवं ब्राह्मणविषयमुक्त्वेतरेष्वाह

इतरेषां वर्णानामाप्राणवियोगात् समवेक्ष्य तेषां कर्माणि दण्डाय प्रतिपद्येत ॥ १७ ॥

इतरेषां ब्राह्मणव्यतिरिक्तानां राजा पुरोहितेनोक्तं दण्डं स्वयमेव प्रतिपद्येत । तेषां कर्माणि समवेक्ष्य तदनुरूपमाप्राणवियोगात् । अभिविधावाकारः ॥ १७ ॥

**न संदेहे दण्डं कुर्यात् ॥ १८ ॥**

अपराधसंदेहे राजा दण्डं न कुर्यात् ॥ १८ ॥

किंतु—

**सुविचितं कृत्वा दण्डं दैवप्रश्नेभ्यो दण्डाय प्रतिपद्येत ॥ १९ ॥**

आ दैवप्रश्नेभ्यः साक्षिप्रश्नादिभिः शपथान्तैः सुविचितं यथा भवति तथा विचार्य निरूप्य राजा दण्डाय प्रतिपद्येतोपक्रमेत् ॥ १९ ॥

एवं कुर्वतः फलमाह—

**एवं वर्तमानो राजोभौ लोकावभिजयति ॥२०॥**

एवं पूर्वोक्तेन धर्मेण वर्तमानः । अत्र मनुः—

अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति प्रेत्य स्वर्गात्प्रहीयते ॥ इति ॥ २० ॥

गच्छता प्रतिगच्छता मृदि(?) पथि च समवाये केन कस्मै पन्था देय इत्याह—

**राज्ञः पन्था ब्राह्मणेनासमेत्य ॥ २१ ॥**

राजा चाभिषिक्तः । स यदि ब्राह्मणेन समेतो न भवति तदा तस्य पन्था दातव्यः । क्षत्रियैरप्यनभिषिक्तैः । एतदर्थमेवेदं वचनम् । अन्यत्र वर्णज्यायसो वक्ष्यमाणेनैव सिद्धम् ॥ २१ ॥

**समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ २२ ॥**

आपदि शिष्यभूतब्राह्मणाविषयमिदम् । शिष्यभूतेन ब्राह्मणेन समेत्य तस्यैव राज्ञा पन्था देय इति ॥ २२ ॥

**यानस्यान्धस्य भाराभिनिहितस्याऽऽतुरस्य स्त्रिया**
**इति सर्वैर्दातव्यः ॥ २३ ॥**

इतिशब्दात्स्थविरबालकृशादिभ्यश्च ॥ २३ ॥

**अशिष्टपतितमत्तोन्मत्तानां[मात्म]स्वस्त्ययनार्थेन**
**दातव्यः ॥ २४ ॥ ( ख० ९ ) ।**

अशिष्टो मूर्ख· । अन्ये प्रसिद्धाः । एतेषा सर्वैरेव जातीयैरुत्कृष्टैरपकृष्टैर्वर्णैश्च दातव्य· । आत्मस्वस्त्ययनमात्मत्राणम् । तेन प्रयोजनेन तदर्थं न त्वदृष्टार्थमित्यर्थः । अत्र कौण्डिन्येन देशस्य पथ प्रमाणमुक्तम्—' पञ्चारत्नी रथपथश्चत्वारो हस्तिपथः । द्वौ क्षुद्रपशुमनुष्याणाम् ' इति ।। २४ ।। ( ख० ९ ) ।

**धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥ २५ ॥**

धर्मचर्यया स्वधर्मानुष्ठानेन जघन्यो वर्णः शूद्रादिः पूर्वं पूर्वं वैश्यादिमापद्यते प्राप्नोति । जन्मपरिवर्तनेन शूद्रो वैश्यो जायते । तत्रापि स्वधर्मनिष्ठ. क्षत्रियो जायते । तत्रापि स्वधर्मपरो ब्राह्मण इति । एव क्षत्रियवैश्ययोरपि द्रष्टव्यम् ॥ २५ ॥

**अधर्मचर्यया पूर्वो जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ २६ ॥**

पूर्वेण गतम् । महापातकव्यतिरिक्ताधर्मानुष्ठानविषयमेतत् । महापातकेषु ' स्तेनोऽभिशस्त. ' इत्यादिना नीचजातिप्राप्तेरुक्तत्वात् ॥ २६ ॥

**धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत ॥ २७ ॥**

श्रौतेषु गार्ह्येषु स्मार्तेषु कर्मसु श्रद्धा शक्तिश्च धर्मसपत्ति । प्रजासंपत्तिः पुत्रवत्त्वम् । एवभूते दारे सति नान्याम् । दार इति प्रकृतम् । अन्यामिति स्त्रीलिङ्गो निर्देशः । तत्रार्थाद्भार्यामिति गम्यते । नान्या भार्यां कुर्वीत नोद्वहेत् ॥ २७ ॥

**अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥ २८ ॥**

धर्मप्रजयोरन्यतराभावे कार्योद्वाह्या । तत्रापि प्रागग्न्याधेयान्नोर्ध्वमाधानात् । एतदर्थमेवेद वचनम् । उभयसपत्तौ [ न ] कार्येत्युक्तेऽन्यतराभावे कार्येत्यस्याशस्य प्राप्तत्वात् । यदा चान्यतराभावेऽपि कार्या तदा का शङ्कोभयाभावे ॥ २८ ॥

कार्या प्रागग्न्याधेयादित्यत्र हेतु —

**आधाने सती कर्मभिः संबध्यते येषामेतदङ्गम् ॥ २९ ॥**

आधाने सती विद्यमानकर्मभि सपद्यतेऽधिक्रियते । कैः । येषामग्निहोत्रादीनामेतदाधानमङ्गमुपकारक तै· । आधानेऽत्र ' दारे सति ' इति वचनात् । मृते तस्मिन्प्रागूर्ध्वं चाऽऽधानात्सत्यामपि पुत्रसंपत्तौ धर्मसपत्त्यर्थं दारग्रहण कर्तव्यमेव । तथा च मनुः—

भार्यायै पूर्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्मणि ।
पुनर्दारक्रिया कुर्यात्पुनराधानमेव च ॥ इति ।

याज्ञवल्क्योऽपि—आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ इति ।

वाचनिकेनैव [ च ]कारार्थेन युक्तः क्रमः । तेनैव त न( तन्न ) चोदनीयम् । यजमान. पूर्वमेवान्वारम्भणी[य]यासंस्कृतो न तस्याय संस्कार पुनरापादयितु शक्य· । भार्या च पूर्वमेव संस्कृता न तस्या( स्या ) दर्शपूर्णमासादिष्वविकार. । स कथं तया तैर्यष्टुमर्हतीत्यन्वारम्भणीयाजन्यश्च संस्कारो यदि संयोगवदुभयनिष्ठस्तदा भार्या विनाशे नश्यतीति पुरुषस्यापि पुन. संस्कारो न लोपपर. । यान(न्य)न्वारम्भणीयाना· (म)पेक्षते(न्ते) स्य(स्मा)र्तानि गार्ह्याणि तैरधिकारस्तस्या अप्यविरुद्ध. ।

ननु च प्रागप्यग्न्याधानात्कर्मभि. संबध्यते गार्ह्यैस्तस्मा ( र्ह्यैः स्मा )र्तैश्च तत्कि· मुच्यते, आधाने हि सती कर्मभि. संबध्यत इति । सत्यम् । तस्मादेव हेतुनिर्देशा· दवसीयते प्रागाधानात्सत्यामपि धर्मसंपत्तौ प्रजासंपत्तौ च रागान्धस्य कदाचिद्दार· ग्रहणे नातीव दोष इति । अथ यस्याऽऽहिताग्नेर्भार्या सत्येव कर्मसु श्रद्दधाना शक्ता वा न भवति पुत्राश्च मृता अनुत्पन्ना वा तस्य कथम् । परेषा युक्तो धर्मप्रजासंपन्न इति कर्मभि संबध्यत इति च तदा कर्तव्यो विवाह । भारद्वाजसूत्रस्याप्ययमेव विषयः । अथ यद्याहिताग्निरक्रिया कुर्वीत यदग्नीन्नो त्यजेयुर्लौकिका संपद्येरन्तस्य पुनरग्न्याधेयं कुर्वीतेत्याश्मरथ्यः । पुनराधेयमित्यालेखन. । पुनराधानमेव कुर्यादित्यौडुलोमिरि· ति ॥ २९ ॥

**सगोत्राय दुहितरं न प्रयच्छेत् ॥ ३० ॥**

कन्यागोत्रमेव गोत्रमस्य तस्मै कन्या न देया । [यथा] हारीताय हारीती वात्स्या· यनाय वात्स्यायनीत्यादि ॥ ३० ॥

**मातुश्च योनिसंबन्धेभ्यः ॥ ३१ ॥**

मातुश्च योनिसंबन्धा ये कन्याया मातुलादयः । चकारात्परेऽप्येव (पितुरप्येवम्) । तेभ्यो न देया कन्या । अत्र मनु·—

असपिण्डा च या मातुरसगोत्रा च या पितु ।
सा प्रशस्ता द्विजातीना दारकर्मणि मैथुने ॥
स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम् ।
यवीयसीं भ्रातृमतीमसगोत्रा प्रयत्नत ॥
मातु सगोत्रामप्येके नेच्छन्त्युद्वाहकर्मणि ।

जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कितः ॥
मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ॥ इति ।

गौतम.—असमानप्रवरैर्विवाह ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः ' । बसिष्ठः—ग्रहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वाऽसमानार्षेयामस्पृष्टमैथुनामव[र]वयसीं सदृशीं भार्यां विन्देत पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्य. इति । हारीतः—चि(श्वि)त्री कुष्ठु(ष्ठ्यु)दरी यक्ष्मामह्य (याव्य)ल्पायुरनार्षेयब्रह्मसमानार्षेयामित्येतानि, अपतितान्यपि कुलानि वर्जनीयानि भवन्ति । कुलानुरूपाः प्रजा भवन्तीत्यादितः ष(ष)ढमज्ञा(याज्ञि)यत्वादनार्षेयमवेदत्वादब्राह्ममेवकुलत्वात्समानार्षेयमिति । तस्मात्सप्त पितृतः परीक्ष्य पञ्च मातृतो नग्निकामश्रेष्ठा भ्रातृमतीं भार्यां विन्देत । पैठीनसिः—असमानार्षेया [कन्या वरयेत्] । पञ्च मातृतः परिहरेत्सप्त पितृत इति । त्रीन्मातृतः पञ्च पितृतो वा । याज्ञवल्क्यः—

अविप्लुतब्रह्मचर्यो लक्षण्या स्त्रियमुद्वहेत् ।
अनन्यपूर्विका कान्तामसमानार्षगोत्रजाम् ॥
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥

विष्णुः—असगोत्रायमसमानवप्ररा विन्देत मातृतः पञ्चमात्पितृतः सप्तमात् ।

नारदः—स(आ)सप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।
अविवाह्याः सगोत्राः स्युः समानप्रवरास्तथा ॥

शातातपः—परिणीय सगोत्रां तु समानप्रवरामथ ।
कृत्वा तस्या. समुत्सर्गमतिकृच्छ्रं विशोधनम् ॥
मातुलस्य सुतामूढा(ढ्वा) मातृगोत्रा तथैव च ।
समानप्रवरां चैव द्विजश्चान्द्रायण चरेत् ॥

मनुः—पैतृष्वसेयीं भगिनीं स्वस्रीया मातुरेव तु ।
मातुश्च भ्रातृसबन्धा(तुस्तनया) गत्वा चान्द्रायणं चरेत् ॥
एतास्त्रिय(स्तिस्र)स्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् ।
द्वितीये(ज्ञातित्वे)नानुपेयास्ताः पतन्ति(ति) स्वयंधन(ह्युपयन्नधः) ॥

सगोत्रा चेदुपयच्छेदमत्या मातृवदेता बिभृयात् । सगोत्रा च गत्वा चान्द्रायणमुपदिशेत् । व्रते परिनिष्ठिजे(ते) चाब्राह्मणीं त्यजेत् । मातृवद्भगिनीवद्धर्मे न दुष्यति काश्यप (?) इति विज्ञायते । अथ संपातेऽविवाहः । तस्यायं (?) वर्जयेत् । बौधायनस्य तु प्रमाणं हि कर्तव्यम् । मानव्यो हि प्रजा इति च विज्ञायते ।

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
एतेन * (ऊनपञ्चाश)देवैषा प्रवरा ऋषिदर्शनात् ॥
एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वमन्यत्राङ्गिरसा भृगोः ॥ इति ।

सुमन्तुः—' पितृपत्न्यः सर्वा मातरः । तद्भ्रातरो मातुलाः । तत्सुता मातुलसुताः । तस्मात्ता नोपगन्तव्या इति ॥ २१ ॥

कन्यादानप्रसङ्गाद्विवाहभेदमाह—

**बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजा सहत्वकर्मभ्यः प्रतिपादयेद्ब्राह्मे विवाहे शक्तिविषयेणालंकृत्य दद्यात् ॥ ३२ ॥**

ब्राह्मणा सृष्टो ब्राह्मः । तस्मिन्विवाहे वरस्य बन्ध्वादीन्बुद्ध्वा परीक्ष्य प्रजा दुहितरं सहत्वकर्मभ्यः सहकर्तव्यानि यानि कर्माणि तेभ्यः तानि कर्तुं प्रतिपादयेत् । शक्तिविषयेण विभक्तिविषयेण । विभक्तिप्ररूपकोऽयं निपातः । यथाशक्ति तस्यार्थे द्रष्टव्यः । यथाशक्त्यलंकृत्य दद्यादित्येष ब्राह्मो विवाहः । प्रजासहत्वकर्मभ्य इति पाठे प्रजार्थं सहत्वकर्मार्थं चेति ॥ ३२ ॥

**आर्षे दुहितृमते मिथुनौ गावौ देयौ ॥ ३३ ॥**

ऋषिभिर्दृष्टविवाहे मिथुनौ गावौ देयौ । स्त्रीगवी पुंगवश्च दुहितृमते मिथुनौ देयौ । एष आर्षो विवाहः ॥ ३३ ॥

**दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् ॥ ३४ ॥**

देवैर्दृष्टविवाहे यज्ञतन्त्रे वितत ऋत्विजे कर्मकुर्वते कन्या दद्यात् । एष दैवो विवाहः ॥ ३४ ॥

**मिथः कामात्सांवर्तेते स गान्धर्वः ॥ ३५ ॥**

यत्र कन्यावरौ मिथो रहसि कामाद्रागात्परस्परं सावर्तेते मिथुनी भवतः स गान्धर्वो विवाहः । समो दीर्घः पूर्ववत् । पु(अ)त्र सयोगादुत्तरकालं विवाहसंस्कारः कर्तव्यः ॥ ३५ ॥

**यथाशक्ति द्रव्याणि दत्त्वा वहेरन्स आसुरः ॥ ३६ ॥**

यत्र विवाहे कन्यावते यथाशक्ति द्रव्याणि दत्त्वा वहेरन्कन्या स आसुरो विवाहः ।

' वित्तेनाऽऽनतिः[ स्त्री ] मना( ता )मासुरः ' इति गौतमः। कन्यायै गृहक्षेत्रादिदानेन विवाहो नाऽऽसुरः ॥ ३६ ॥

**दुहितृमतः प्रोथयित्वा वहेरन्स राक्षसः ॥ ३७ ॥**

प्रमथ्य यत्र वहेरन्स राक्षसो विवाहः। ' हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षसः ' इत्याश्वलायनः । अत्रापि विवाहसंस्कारः । द्वौ चापरौ विवाहौ शास्त्रान्तरेषूक्तौ। तत्राऽऽश्वलायनः -' सह धर्मं चरत इ( मि )ति प्राजापत्यः। सुप्तानां सुप्तां प्रमत्तानां( प्रमत्तां ) वाऽऽहरेत्स पैशाचः ' इति । ताविह पृथङ्नोक्तौ । ब्राह्मराक्षसयोरन्तर्भावात् ॥ ३७ ॥

**तेषां त्रय आद्याः प्रशस्ताः ॥ ३८ ॥**

तेषां विवाहानां मध्य आद्यास्त्रयो ब्राह्मार्षदैवाः प्रशस्ताः। तत्रापि विशेषमाहाऽऽप-स्तम्बः—पूर्वः पूर्वोऽतिशयेन प्रशस्त इति ॥ ३८ ॥

**यथा युक्तो विवाहस्तथा युक्ताः प्रजा भवन्ति ॥ ३९ ॥**

प्रशस्ते विवाहे जाताः प्रजाः प्रशस्ता भवन्ति । निन्दिते निन्दिताः। अत्र मनुः—

ब्र( ब्रा )ह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः।
ब्रह्मवर्चसिनः पुत्रा जायन्ते शिष्टसंमताः ॥
रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥
इतरेषु च जायन्ते नृशंसानृतवादिनः।
तनया दुर्विवाहेषु ब्रह्मधर्मजुगुप्सिताः ॥ इति।

प्राजापत्येन सह ब्राह्माद्याश्चत्वारः [ ब्राह्मणस्य ] । गान्धर्वराक्षसौ क्षत्रियस्य। आसुरस्तु वैश्यशूद्रयोः। पैशाचो न कस्यचिदिति ॥ ३९ ॥

उत्पादयितुरपि फलमाह—

**पुत्रेण लोकाञ्जयति पौत्रेणामृतं सूतेऽथ पुत्रस्य पौत्रेण प्राप्नोति ब्रध्नस्य विष्टपं दौहित्रस्तत्प्रति मुञ्चति यत्प्राप्तं महद्भयम् ॥ ४० ॥**

लोकान्भूरादींस्त्रीन् । अमृतं महर्लोकः । ब्रध्नस्य विष्टपं जनलोकादि । सांसारिकं महद्भयं यत्तद्दुहितृपुत्रो नाशयति । स्पष्टमन्यत् ॥ ४० ॥

**ब्राह्मदेवास्त्वधिकारिणः पाणिमूढं ब्राह्मणेन नाप्रोक्षि-
तमभितिष्ठते ॥ ४१ ॥**

ब्राह्मणस्य पाणि[ना स]मूढ,मुपलिप्त संमृष्ट वा प्रदेशमप्रोक्षित नाभितिष्ठेत्। प्रोक्ष्यैवाधितिष्ठते(ष्ठेत्) ॥ ४१ ॥

**अग्निं ब्राह्मणं चान्तरेण नातिक्रामेत् ॥ ४२ ॥**

अग्नेर्ब्राह्मणस्य च मध्ये न गच्छेत् ॥ ४२ ॥

**अनुज्ञाप्य वाऽतिक्रामेत् ॥ ४३ ॥**

स्पष्टम् ॥ ४३ ॥

**ब्राह्मणाꣳश्च न ॥ ४४ ॥**

अग्निमध्ये नातिक्रामेत् । अग्नेर्ब्राह्मणस्य मध्य इत्यर्थ ॥ ४४ ॥

**अग्निमपश्च न युगपद्धारयेत् ॥ ४५ ॥**

अग्निमुदक च न युगपद्धारयेत् ॥ ४५ ॥

**अग्नीनाꣳ संनिवापं च वर्जयेत् ॥ ४६ ॥**

पृथगवस्थितानामग्नीनामेकत्र समावपनं न कुर्यात् । अग्नावग्निं न क्षिपेदित्यन्ये ॥ ४६ ॥

**अवचनात् ॥ ४७ ॥**

विना वचनम् । वचने सति तु कुर्यात ॥ ४७ ॥

**प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रद-
क्षिणी कुर्वीत ॥ ४८ ॥**

यदास्व(ऽस्य) गच्छतः प्रतिमुखमग्निराह्रियते तदा न तं प्रदक्षिणी कुर्यात् । स चेद्भूमौ प्रतिष्ठितो न भवति । प्रतिष्ठिते त्वग्नौ प्रदक्षिणी कुर्यात् ॥ ४८ ॥

**पृष्ठतश्चाऽऽत्मनः पाणी न सꣳश्लेषयेत् ॥ ४९ ॥**

स्वे पृष्ठभागे स्वपाणिद्वयं न संश्लेषयेत् । न बध्नीयात्स्वयम् ॥ ४९ ॥

**सूर्याभ्युदितोऽहनि नाश्नीयाद्वाग्यतोऽह
स्तिष्ठेत् ॥ ५० ॥**

सूर्योदयकाले सुप्तस्तत्र दिवा नाश्नीयात् । वाचयमो दिवा च स्यात् । रात्रावेवाश्नीयादित्यर्थः ।

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्मुक्तोऽभ्युदितश्च यथाक्रमम् । इत्यमरः ॥ ५० ॥

**सूर्याभिनिम्रुक्तो नाश्नन्वाग्यत आसीत श्वोभूत उदकमुपस्पृश्य वाचं विसृजेत् ॥ ५१ ॥**

सूर्याभिनिम्रुक्तो नाश्नन्, अभुञ्जानस्तूष्णींभूतो रात्रिं सर्वामासीत । अथापरेद्युः प्रातः स्नात्वा वाच विसृजेत् । अयमस्य निर्वेष. ॥ ५१ ॥

**आ तमितोः प्राणमायच्छेदित्येके ॥ ५२ ॥**

यावदङ्गाना ग्लानिर्भवति तावत्प्राणमायच्छेत्प्राणवायुमाकृष्य धारयेत् । प्राणायामं कुर्यादित्येके मन्यन्ते । शक्यप(क्ल्पे)क्षो विकल्पः । अत्र मनुः—

सव्याहृतिका सप्रणवा गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः [ प्राणायामः ] स उच्यते ॥ इति ।

एवमावर्तयेद्यावद्ग्लानिः ॥ ५२ ॥

**स्वप्नं वा पापकं दृष्ट्वा ॥ ५३ ॥**

पापकः स्वप्नो दु.स्वप्नः । मर्कटास्कन्दनादिः । त दृष्ट्वा ॥ ५३ ॥

**अर्थं वा सिसाधयिष्यन् ॥ ५४ ॥**

अर्थः प्रयोजनम् । तं दृष्टमदृष्टं च वा साधयितुमिच्छन् ॥ ५४ ॥

**नियमातिक्रमे चान्यस्मिन् ॥ ५५ ॥**

नियमानामुदङ्मुखो मूत्रं कुर्यादित्येवमादीना व्यतिक्रमे चाऽऽ तमितोः प्राणमायच्छेदिति सर्वशेषः ॥ ५५ ॥

**दोषफलसंशये न तत्कर्तव्यम् ॥ ५६ ॥**

यस्मिन्कर्मणि कृते पक्षे दोषफल संगृह्यते न तत्कुर्यात् । यथाऽसहाये देश एकाकिनो गमनमिति ॥ ५६ ॥

**एवमध्यायानध्यायसंशये ॥ ५७ ॥**

इत्युपसमस्तमप्यपेक्षते । अध्यायोऽनध्याय इति संशये न तत्कर्तव्यमिति । संधावन(नु)स्तनितमित्याद्युदाहरणम् । पूर्वस्यायं प्रपञ्चः ॥ ५७ ॥

---

१ 'अनाश्वान्' इति क पुस्तके पाठ ।

न सꣳशये प्रत्यक्षवद्ब्रूयात् ॥ ५८ ॥

संशये(यि)तमर्थमात्मनोऽज्ञानपरिहाराय प्रत्यक्षवन्निश्चितवन्न ब्रूयात् ॥ ९८ ॥

अभिनिम्रुक्ताभ्युदितकुनखी(खि)या(श्या)वदग्र(ग्रे)दिधिषुदिधिषूपतिपर्याहितपराष्टिपरिवेत्तृपरिवित्तृ(त्ति)परिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान् ॥ ५९ ॥

आदित्यौ(तो) द्वौ गतौ । कुनखी कृष्णनखः । श्यावा दन्ता यस्य श्यावदन् विवर्णदन्त. । 'विभाषा श्यावारोकाभ्याम्'[1] इति दत्रादेशः । तस्यान्तलोपश्छान्दसः । ज्येष्ठायाम(नू)ढाया पूर्वं [कनीय]स्या वोढा, अग्र(ग्रे)दिधिषुः । पश्चादितरस्या वोढा दिधिषूपतिः । ज्येष्ठेऽकृताधाने कृताधानः कनिष्ठः पर्याधाता ज्येष्ठः पर्याहितः । ज्येष्ठेऽकृतसोमयागे कृतसोमयागः कनिष्ठ. पर्यष्टा(ष्टा) । ज्येष्ठः परीष्टः । अकृतविवाहे ज्येष्ठे कृतविवाहः कनिष्ठः परिवेत्तेति प्रसिद्धः । ज्येष्ठः परिवित्ति. । ज्येष्ठभार्यायामुपग(य)च्छमानः परिवित्ततरः । यस्मिन्नगृहीतभागे वा कनिष्ठे(ष्ठो) भागं गृह्णाति स ज्येष्ठः परिविविद । न चकारो विदानपर्याधातृप्रभृतीना समुच्चयार्थ. । एतेष्वभिनिम्रुक्तादिषु योऽयमु(उ)त्तरस्तस्मिंस्तस्मिन् द्वादशमासादिमास्यादि(सादि)रशुचिकरनिर्वेषो यः पूर्वमुक्तस्तत्र गरीयान्गरीयान्भवति । पूर्वत्र पूर्वत्र लघीयान् अभिनिम्रुक्ताभ्युदितयोरनन्तरोक्त प्रायश्चित्तद्वयमपि विकल्पेन भवति ॥ ९९ ॥

तच्च लिङ्गं चरित्वोद्धार्यमित्येके ॥ ६० ॥ ( ख० १० ) ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (धर्मसूत्रापरपर्याये) सप्तविंशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

यस्मिन्कौनख्यादिके लिङ्गे यत्प्रायश्चित्तमुक्तं तच्चरित्वा तत्कौनख्यादिकं लिङ्गमुद्धरेदित्येके मन्यन्ते । अन्यत्र दाराग्निभ्य इति स्मृत्यन्तरम् ॥ ६० ॥ ( ख० १० ) ॥

इति सत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्याया महादेवदीक्षितविरचिताया-मुज्ज्वलाया वृत्तौ सप्तविंशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

---

१ ( पा० सू० ५ । ४ । १४४ ) ।

अथ पञ्चम पटल ।

---

**सह देवमनुष्या अस्मिँल्लोके प(पु)रा बभूवुरथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्यास्तेषां कर्माणि तथाऽऽरभन्ते सह देवैर्ब्रह्मणा चामुष्मिँल्लोके भवन्त्यथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच ॥ १ ॥**

तत्र श्राद्धविधित्समानस्य प्ररोचनार्थमयमर्थवादः–पुरा किल देवाश्च मनुष्याश्चामुष्मिन्नेव लोके परा (सह) बभूवु. । अथ त(तं)सह सा(मा)[व]मसहमाना देवाः कर्मभिः श्रौतैर्गार्ह्यैः स्मार्तैश्च यथावदनुष्ठितैर्दिव जग्मुः । मनुष्यास्तु तथा कर्तुमसमर्था अहीयन्त हीना अभवन् । इहैव लोके स्थिताः। एवं कर्मणा सामर्थ्यम् । अत इदानीमपि तेषा मनुष्याणा मध्ये ये तथा कर्माण्यारभन्ते कुर्वन्ति यथाऽऽरमन्ते(त) देवास्तै(ते) देवैर्ब्रह्मणा च सहामुष्मिँल्लोके भवन्ति । अथैव हीनान्मनुष्यान्दृष्ट्वा मनुर्वैवस्वतः श्राद्धशब्दं श्राद्धमिति शब्दजात(ब्दचमान)मेतत्कर्म प्रोवाच ॥ १ ॥

किमर्थम्—

**प्रजानिःश्रेयसा च ॥ २ ॥**

तादर्थ्ये एषा चतुर्थी । प्रजाना निःश्रेयसार्थम् । निःश्रेयसा चेति च्छान्दसो यकारस्य चकारः । अपर आह—छान्दसो लिङ्गव्यत्ययः । प्रजा निःश्रेयसा चास्य स्वकर्मणः फलति ॥ २ ॥

**तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे ॥ ३ ॥**

तत्र श्राद्धशब्दे कर्मणि पितर. पितृ[पितामहप्र]पितामहा देवता. । ब्राह्मणस्तु भुञ्जान आहवनीयकृत्ये वेदितव्यः । त्रीणि श्राद्धे करणानि । होमो ब्राह्मणभोजन पिण्डदानं चेति । तत्र भोजने प्रधानत्वख्यापनार्थोऽयमर्थवादः ॥ ३ ॥

**मासिश्राद्धमपरपक्षस्योत्तमेऽहनि ॥ ४ ॥**

कर्तव्यमिति शेष. । अकरणे प्रत्यवायश्रवणान्नित्यम् । उत्तमेऽहन्यमावास्यायाम् । स्पष्टमाहाऽऽपस्तम्बः—'मासि मासि कार्यम् ' । तदिदं कर्म मासे मासे कर्तव्यम् । वीप्सावचनाद्यावज्जीवकोऽभ्यास इति च व्याख्यातम् ॥ ४ ॥

**अपराह्णः श्रेयान् ॥ ५ ॥**

अपरपक्षस्येत्यनुवर्तते । अपरपक्षस्य यान्यहानि तेष्वपराह्णः प्रशस्तः ॥ ५ ॥

**तथाऽपरपक्षस्य जघन्यान्यहानि ॥ ६ ॥**

तथै(स्यै)व पक्षस्य यान्यहानि पञ्चदश तेषा यथोत्तरं श्रेयस्त्वम् ॥ ६ ॥

सर्वेष्वहःसु कृष्णपक्षस्य क्रियमाणे पितॄन्प्रीणाति
कर्तुस्तु कालाभिनियमात्फलविशेषः ॥ ७ ॥

गृह्येऽपरपक्षस्य वाऽयुक्ष्वहस्त्वि(स्त्वि)ति विहितस्य नार्थवाद इति कृत्वाऽयुजानि विषमाणीति व्याचक्षते केचित् । नैतानि फलानि प्रयोगान्तरत्वात् ॥ ७ ॥

कोऽसावित्याह—

प्रथमेऽहनि स्त्रीप्रायमपत्ये जायते ॥ ८ ॥

यः प्रतिपदि नियमेन श्राद्ध करोति तस्यापत्ये प्रजासताने स्त्रीप्रायं जायते । प्रायेण स्त्रियो जायन्ते ॥ ८ ॥

द्वितीयेऽस्तेनाः ॥ ९ ॥

अचोराः पुत्रा जायन्ते ॥ ९ ॥

तृतीये क्षुद्रपशुमान् ॥ १० ॥

क्षुद्राः पशवोऽजादयस्तद्वान्कर्ता भवति ॥ १० ॥

चतुर्थे ब्रह्मवर्चसिनः ॥ ११ ॥

पुत्रा ब्रह्मवर्चसिनः । व्रताध्ययनसपत्तिर्ब्रह्मवर्चसम् । आपस्तम्बस्तु विपरीतं फल- माह—तृतीये ब्रह्मवर्चसिनश्चतुर्थे क्षुद्रपशुमानिति । उत्तरत्राप्येकवचनेषु कर्तुर्वा(दो) द्रष्टव्यः ॥ ११ ॥

पञ्चमे पुमांसो बह्वपत्यो भव्यापत्यो न चा[न]पत्यः प्रमीयते ॥ १२ ॥

पुमास एव भवन्ति बहवश्च । भव्या रूपविद्या भवति । न चानपत्यः प्रमीयते । जीवत्स्वेव पुत्रेषु स(संनि)हितेषु च स्वयं म्रियते । न तेषु मृतेषु नापि देशान्तरगतेषु नापि स्वय देशान्तरगत इति ॥ १२ ॥

षष्ठेऽध्वशीलोऽक्षशीलश्च ॥ १३ ॥

अध्वशीलः पान्थः । किंततः(कितवः) अक्षशीलः ॥ १३ ॥

सप्तमे कर्षे राद्धिः ॥ १४ ॥

कर्षः कृषिः । राद्धिः सिद्धिः ॥ १४ ॥

अष्टमे पुष्टिः ॥ १५ ॥

स्पष्टम् ॥ १५ ॥

नवम एकखुराः ॥ १६ ॥

अश्वादयः ॥ १६ ॥

**दशमे व्यवहारे राद्धिः ॥ १७ ॥**

व्यवहारो वाणिज्यं व्यवहारशास्त्रपरिज्ञानम् ॥ १७ ॥

**एकादशे कृष्णायसं त्रपुसीसम् ॥ १८ ॥**

कृष्णायस कृष्णमयः । त्रपुसीसे लोहविशेषौ ॥ १८ ॥

**द्वादशे पशुमान् ॥ १९ ॥**

द्वादश्या बहवः पशवो भवन्ति ॥ १९ ॥

**त्रयोदशे पुमांसो बह्वपत्यो[बहुमित्रो] दर्शनीया-
पत्यो युवमारिणस्तु भवन्ति ॥ २० ॥**

त्रयोदश्या बहवः पुत्रा मित्राणि च भवन्ति । अपत्यानि च दर्शनीयानि । किंतु ते पुत्रा युवमारिणो भवन्ति युवान एव म्रियन्ते । अयुवमार(रि)ण इत्यन्ये । युक्तं चैतत् ॥ २० ॥

**चतुर्दश आयुधे राद्धिः ॥ २१ ॥**

सग्रामे जयः ॥ २१ ॥

**पञ्चदशे पुष्टिः ॥ २२ ॥**

स्पष्टम् ॥ २२ ॥

**तत्र द्रव्याणि तिलमाष(षा) व्रीहियवा आपो मूलफलानि च ॥ २३ ॥**

तत्र श्राद्धे तिलादिद्रव्याणि यथायथमवश्यमुपयोज्यानि तेषु फलविशेषे(षो) ब्राह्मणे नाऽऽह—

एतानि मास९ प्रीणन्ति पितृलोके विज्ञायते स्नेहवति
त्वेवान्ने तीव्रतरा पितॄणां तृप्तिर्द्राघीयाश्सं च कालम् ।

यद्वा तद्वाऽन्नं भवतु स्नेहवति तु तस्मिन्नाज्यादिभिरुपासिक्तं(क्ते) पितॄणा तीव्रतरा प्रीतिर्भवति । स(सा) च द्राघीयासं कालमनुवर्तते ॥ २३ ॥

**तथा धर्माहृतेन द्रव्येण तीर्थे प्रतिपन्नेन ॥ २४ ॥**

धर्मार्जितं यद्द्रव्यं पात्रे च प्रतिपादितं तेनापि पूर्वोक्ता प्रीतिः ॥ २४ ॥

**संवत्सरं गव्येन माश्सेन प्रीतिः ॥ २५ ॥**

गव्येन मांसेन पितॄणा संवत्सरं प्रीतिर्भवति ॥ २५ ॥

**भूयाश्समितो माहिषेण ॥ २६ ॥**

माहिषेण मासेन, इतः संवत्सराद्भूयासं बहुतरं कालं प्रीतिर्भवति ॥ २६ ॥

**एतेन ग्राम्याणां पशूनां मा॑ꣳसं मेध्यं व्याख्यातम् ॥ २७ ॥**

एतेन माहिषेण गव्येन च मासेनान्येषामपि ग्राम्याणामजादीनां मांसं मेध्यं व्याख्यातं पितॄणा प्रीतिकरमिति। मेध्यग्रहण प्रतिषिद्धाना ग्रहणं मा भूदिति ॥ २७ ॥

**खड्गोपस्तरणे खड्गमा॑ꣳसेनाऽऽनन्त्यं कालम् ॥ २८ ॥**

खड्गचर्मोपस्तरणेना( ष्वा )सनेषूपविष्टेभ्यो दत्तेन खड्गमासेनानन्तं कालं पितॄणा तृप्तिर्भवति। स्वार्थे ष्यञ् ॥ २८ ॥

**तथा शतबलेर्मत्स्यस्य मा॑ꣳसेन॥ २९॥**

शतबलिर्बहुशकलो( ल्को ) रोहिताख्य. ॥ २९ ॥

**तथा वार्ध्राणसस्य ॥ ३० ॥**

व्याख्यातो वार्ध्राणसः। तस्य मासेनाऽऽनन्त्यं कालं प्रीति. ॥ ३० ॥

**एतेनाऽऽरण्यानां पशूनां ( ख० ११ ) मेध्यं मा॑ꣳसं व्याख्यातम् ॥ ३१ ॥**

गतमेतत् ॥ ३१ ॥ ( ख० ११ )।

**प्रयतः प्रसन्नमनाः सृष्टो भोजयेद्ब्राह्मणान्ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धान् ॥ ३२ ॥**

प्रयतः स्नानादिना शुद्धः। प्रसन्नमना अव्याकुलचित्त. । सृष्ट उत्साहवान्। सृष्टश्चेद्ब्राह्मणवधेऽहत्वा प्रीतिदर्शनात्। 'वृत्तिसर्गतायनेषु क्रमः' इत्यत्र सर्ग उत्साहः। एवंभूतो ब्राह्मणान्भोजयेत्। कीदृशः। ब्रह्मविदो योन्यादिभिरसबन्धान्। योनिसंबन्धा मातुलादयः। गोत्रसंबन्धाः सगोत्रादयः। मन्त्रसंबन्धा ऋत्विग्याज्याध्वर्य्वादयो द्विजन्माद्याश्च। अन्तेवास्य( सि )संबन्धाः शिष्याश्चाऽऽचार्याश्च ॥ ३२ ॥

**नार्थापेक्षो भोजयेत् ॥ ३३ ॥**

द्रव्याद्यपेक्षया न भोजनीयः ॥ ३३ ॥

**गुणहान्यां तु परेषा॑ꣳ समुदेतः सोदर्योऽपि भोजयितव्यः ॥३४॥**

यदि परेऽगोत्रसंबन्धा वृत्तादिगुणहीना एव लभ्यन्ते तदा समुदेतो वृत्तादिभिर्युक्तः सोदर्योऽपि भोजयितव्यः। किमन्ये मातुलादय इत्यपिशब्दार्थः ॥ ३४ ॥

**एतेनान्तेवासिनो व्याख्याताः ॥ ३५ ॥**

एतेन सोदर्येणान्तेवासिनो बहुवचननिर्देशाद्योन्यादिसंबन्धो(धा) व्याख्यात(ताः)। अन्येषामलाभे समुदेता भोजयितव्या इति। अत्र मनुः—

---

१ (पा० सू० १। ३। ३८)।

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेय. सदा सद्भिरनुष्ठित' ॥
मातामहं मातुलं च स्वस्रीय श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥ इति ॥ ३९ ॥

**अथाप्युदाहरन्ति ॥ ३६ ॥**

संबन्धिनो न भोज्या इत्यस्मिन्नर्थे धर्मज्ञा वचनमुदाहरन्ति ॥ ३६ ॥

**संभोजनी नाम पिशाचभिक्षा नैषा पितॄन् गच्छति नोत देवान् ।**
**इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा ॥३७॥**

परस्परं भुञ्जतेऽस्यामिति संभोजनी । अधिकरणे ल्युट् । नामेदमस्याः पिशाचभि. क्षायाः । सा न पितॄन्गच्छति । नापि देवान्गच्छति । किंतु क्षीणपुण्या परलोकप्रयो. जनरहिता सती, इहैव लोके चरति । मृतवत्सा गौर्गृहाभ्यन्तर एव चरति न बहिर्गच्छति ॥ ३७ ॥

तद्व्याचष्टे—

**इहैव संभुञ्जती दक्षिणा कुलाकुले( लं ) विनश्यतीति ॥ ३८ ॥**

संभुञ्जती परस्परभोजनस्य निमित्तभूता दक्षिणा श्राद्धदानक्रिया गृहाद्गृह गत्वेहैव लोके नश्यतीत्यर्थ इति ॥ ३८ ॥

बहुषु तुल्यगुणेषूपस्थितषु कः परिग्राह्यः—

**तुल्यगुणेषु वयोवृद्धः श्रेयान्द्रव्यकृशश्चेप्सन् ॥ ३९ ॥**

यो वयोवृद्धः स तावद्ग्राह्यः । तत्रापि यो द्रव्यकृश ईप्सांल्लिप्समानश्च भवति स ग्राह्यः । यद्वा वयोवृद्धो ग्राह्योऽद्रव्यकृशोऽपि द्रव्यकृशोऽप्यवृद्धोऽपीति । द्वयोस्तु समवाये यथारुचीति ॥ ३९ ॥

**पूर्वेद्युर्निवेदनम् ॥ ४० ॥**

श्राद्धदिनात्पूर्वेद्युरेव ब्राह्मणेभ्यो निवेदितव्य श्वः श्राद्धं भविता । तत्र भवताऽऽहवनी. यार्थे प्रसादः कर्तव्य इति ॥ ४० ॥

**अपरेद्युर्द्वितीयमामन्त्रणम् ॥ ४१ ॥**

अपरेद्यु. श्राद्धदिने द्वितीयमामन्त्रणं निवेदनं कर्तव्यम् । यदा (अद्य) श्राद्धमिति । ततस्तृतीयमामन्त्रणमिति गम्यते । अन्यथाऽपरेद्युरामन्त्रणमित्येव ब्रूयात् । स्पष्टमाहे. दमापस्तम्बः—‘ अपरेद्युर्द्वितीयं तृतीयमामन्त्रणम् ’ इति । आमन्त्रणमाह्वानम् । भोज. नकाले सिद्धमागम्यतामिति तृतीयं भवति ॥ ४१ ॥

त्रिः प्रायमेके श्राद्धमुपदिशन्ति ॥ ४२ ॥

न केवलं निवेदनमेव त्रिर्भवति । किं तर्हि । यच्च यावच्च श्राद्धे क्रियते तत्सर्वं त्रिरावृत्तमित्येके मन्यन्ते । अत्र पक्षे भोजनानामप्यावृत्तिस्तस्मिन्नेवापराह्णे ॥ ४२ ॥

यथा प्रथममेवं द्वितीयं तृतीयं च कर्तव्यम् ॥ ४३ ॥

येन प्रकारेण प्रथमश्राद्धमेव द्वितीयं तृतीयं च कर्तव्यम् ॥ ४३ ॥

सर्वेषु वृत्तेषु सर्वतः शेषं समवदायाश्नीयात् ॥ ४४ ॥

सर्वेषु श्राद्धेषु त्रिष्वपि वृत्तेषु समाप्तेषु सर्वतस्त्रयाणां श्राद्धानां य ओदनशेषस्ततः समवदाय प्राश्नीयात् । सकृत्प्रयोगे तु श्राद्ध एकस्मिन्वृत्ते प्राश्नीयात् । अत्र प्रयोगः—पूर्वेद्युर्निवेदनम् । तद्वदपरेद्युः प्रातर्भोजनकाल आमन्त्रणम् । ततो होमादिपिण्डनिधानान्तमेकैकमपवृज्य ततः समवदाय प्राशनमिति ॥ ४४ ॥

उदीच्यवृत्तिस्त्वासनगतानां हस्तेषु तिलमिश्रोदपात्रानयनं तिलानुप्रकिरणं च ॥ ४५ ॥

प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यदा(था) ।
विदुषा शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥ इति । वैयाकरणाः ।

तस्याः शरावत्या उदकतीरवर्तिन उदीच्यास्तेषां वृत्तिराचारः । आसनेषूपविष्टानां ब्राह्मणानां हस्तेषूदपात्रानयनमुदपात्रादर्घ्यपात्रादप आदायार्घ्यदानमिति । अमुष्मै स्वधा नम इति गृह्योक्तेन प्रकारेणार्घ्यं दद्यात् । ततस्तिलाञ्श्राद्धभूमौ विकिरेत् । यद्यप्युदीच्यवृत्तिरित्युक्तं तथाऽपि प्रकरणपाठसामर्थ्यात्सर्वेषामेव भवति ॥ ४५ ॥

उद्धरिष्याम्यग्नौ च करिष्यामीत्यामन्त्रयते ॥ ४६ ॥

होमकालेऽनेन मन्त्रेण ब्राह्मणानामन्त्रयते ॥ ४६ ॥

काममुद्ध्रियतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्च ॥ ४७ ॥

अथ ब्राह्मणाः काममुद्ध्रियतां काममग्नौ च क्रियतामित्यतिसृजेयुः । तैश्चातिसृष्ट उद्धरेज्जुहुयाच्च । उद्धरणं नाम ब्राह्मणार्थं पक्वादन्यदन्नं कृत्वा तदन्यस्मिन्पात्रे पृथक्करोति । पृथगन्नकरणं ज्ञापितं सूत्रकारेणाष्टकाश्राद्धे ॥ ४७ ॥

श्वभिरपपात्रैश्च श्राद्धस्य(द)र्शनं परिचक्षते ॥ ४८ ॥

श्वभिरिति बहुवचनाद्ग्रामसूकरवराहादीनां तादृशानां ग्रहणम् । अपपात्राः पतिता·

दयः प्रतिलोमाश्च । तैश्च श्राद्धस्य दर्शनं परिचक्षते गर्हन्ते शिष्टाः । अतो यथा ते न पश्येयुस्तथा परिश्रिते[न] कर्तव्यमिति ॥ ४८ ॥

शिपिविष्टः परतल्पगाम्यायुधी[य]पुत्रः श्वित्री कुष्ठी वृषलीपतिः सर्वविक्रयी राजभृत्यः प्रज्ञातोत्पन्नो ब्राह्मण्यामित्येते श्राद्धे भुञ्जानाः पङ्क्तिदूषणा भवन्ति ॥ ४९ ॥

शिपिविष्टः खलतिः । विगतरे(शेफ) इत्यन्ये । परतल्पगामी परतल्पं गत्वाऽकृत प्रायश्चित्तस्तस्य ग्रहणम् । आयुधी(य)पुत्रः क्षत्रियवृत्तिमाश्रितो य आयुधेन जीवति ब्राह्मणस्तस्य पुत्रः । श्वित्री चित्रकुष्ठी । कुष्ठी प्रसिद्धः । वृषली शूद्रकन्या, अदत्ता रजस्वला वा । तस्याः पति. । निषिद्धद्रव्यविक्रयी तिलकम्बलरसादिद्रव्य न विक्रेतव्यं तस्य सर्वस्य विक्रेता । राजभृत्यो राज्ञः सकाशाद्भृतिं वेतनं गृह्णाति स राजभृत्यः । ब्राह्मण्यामेवोत्पन्नः सत्यस्यात्पादविसादिधेः सततादुत्पन्न एवेति(?) । एते शिपिविष्टादयः श्राद्धे भुञ्जानाः पङ्क्तिं दूषयन्ति । अतस्ते न भोज्या इति ॥ ४९ ॥

अथाप्युदाहरन्ति । वेदाध्यायी पञ्चाग्निस्त्रिसुपर्णो ज्येष्ठसामिको ब्राह्मदेयानुसंतानी पञ्चैते पङ्क्तिपावनाः ॥ ५० ॥

वेदस्याध्ययनपरो वेदाध्यायी । पञ्चगार्हपत्याद्यग्नयोऽस्येति पञ्चाग्निः । त्रिसुपर्णश्चतुष्कपर्दा इत्यादिकस्तृचः । अन्ये तु ति(तै)त्तिरीयके ब्रह्ममेतु मामित्यादयस्त्रयोऽनुवाका इत्याहुः । तत्र हि य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यादिति श्रूयते पुरुषे वृत्तिः । ब्राह्मदेयानुसंतानी ब्राह्मो विवाहविशेषः 'ब्राह्मे विवाह आहूय दीयते शक्त्यलंकृता' इत्युक्तस्तद्देया या विप्रा तस्याः संतानं यस्य सः । आपस्तम्बस्तु 'त्रिमधुस्त्रिसुपर्णस्त्रिना(णा)चिकेतश्चतुर्मेधः पञ्चाग्निर्ज्येष्ठसामगो वेदाध्याय्यनूचानपुत्रः श्रोत्रिय इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावना भवन्ति' । मधुवाता इति त्रयं त्रिमधुः । त्रिना(णा)चिकेतोऽग्निस्तैत्तिरीयककठवल्लीशतपथेषु पठ्यते । तत्त्रि[त]यगतब्राह्मणमन्त्रान्यो वेद सः । तथा चतुर्मेधोऽश्वमेधपुरुषमेधसर्वमेध.(ध)पितृमेधान्वेद स तथा । गतमन्यत् । अनूचानपुत्रस्त्रैविद्यपुत्रः । श्रोत्रिय इत्यपि पठन्ति । तदादरार्थं द्रष्टव्यम् । एते श्राद्धे भुञ्जानाः पङ्क्तिं शोधयन्ति । वेदाध्यायीत्यस्याप्यनन्तरं यज्ञशब्दं पठन्ति । सोऽपपाठः । एतेन पञ्चाग्नीत्यविभक्तिपाठो व्याख्यातः । इति पङ्क्तिपावनाः । तदविरोधाद्ब्राह्मम् ॥ ५० ॥

न च नक्तꣳश्राद्धं कुर्वीत ॥ ५१ ॥

श्राद्धकर्मण्यारब्धे कारणाद्विलम्बे मध्ये यद्यादित्योऽस्तमियात्तदा श्राद्धशेषं न नक्तं कुर्वीत । अपरेद्युर्दिवैव कुर्वीत ॥ ९१ ॥

आरब्धे चाभोजनमासमापनात् ॥ ५२ ॥ (ख० १२) ।

पूर्वेद्युर्निवेदनप्रभृत्यातिलाञ्जलिदानान्मध्ये कर्तुर्भोजनप्रतिषेधः । श्राद्धशेषं परेद्युः समापयेत् ॥ ९२ ॥ (ख० १२) ।

तथा—

विलयनं मथितं पिण्याकं मधु माꣳसं च वर्जयेत् ॥ ५३ ॥

विलयन नवनीतमलम् । यस्य दध्नो हस्तादिना मथनमात्रो न जलेन मिश्रणं तन्मथितम् । तथा च नैघण्टुकाः–'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ' इति ॥ यन्त्रपीडिताना तिलाना कल्कः पिण्याकम् । मधुमासे प्रसिद्धे । मासमप्रतिषिद्धमपि । एतद्विलनयनादिकं वर्जयेत् ॥ ९३ ॥

कृष्णधान्यꣳ शूद्रान्नं च ये चान्येऽनाश्यसंमताः ॥ ५४ ॥

कृष्णधान्यं कृष्णकुलत्थादि न कृष्णा व्रीहयः । शूद्रान्नं शूद्रदत्तमन्नं पक्वमपक्वं च । ये चान्येऽनाश्यत्वेनाभोज्यत्वेन समतास्तांश्च वर्जयेत् ॥ ५४ ॥

अहविष्यमनृतं क्रोधं येन च क्रोधयेत् ॥ ५५ ॥

अहविष्यं कोद्रवादि । अनृत मिथ्यावाद(द॰) । क्रोध. कोपः । येन च कृतेन क्रोधयेत्तद्वर्जयेत् ॥ ९५ ॥

स्मृतिमिच्छन्यशो मेधाꣳ स्वर्गं पुष्टिं द्वादशैतानि
वर्जयेत् ॥ ५६ ॥

स्मृतिरविदितस्य स्मरणम् । यशः ख्यातिः । मेधा प्रज्ञा । स्वर्गपुष्टी प्रसिद्धे । स्मृत्यादिकमिच्छन्पूर्वोक्तानि द्वादश वर्जयेत् । स्मृत्यादिकमिच्छन्वर्जयेदिति गुणार्थोऽनुवादः । स्मृत्यादिकं फलं विधातुं द्वादशैतानीति वचनं विलनादेरपि ग्रहणार्थम् । केवलमहविष्यादिकमेवानन्तरं मा भूदिति ॥ ९६ ॥

अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपगतः स्थानासनिकः संवत्सरं व्रतं चरेदेतद्द(द)ष्टाचत्वारिꣳशत्संमितमित्याचक्षते ॥ ५७ ॥

अथोनाम्युपरिजान्वाच्छाद्योर्ध्व्याख्यातम् । त्रिषवणं त्रिषु कालेषु प्रातर्मध्यंदिने सायमिति । उदकमुपस्पृशन्स्नानं कुर्वन् । अनग्निपक्ववृत्तिः,[वृत्तिः] शरीरयात्रा साऽग्नौ पक्वेन न कार्या । अग्निग्रहणा कालपक्कस्याऽऽम्रादेरदोषः । अच्छायोपगतश्छायामनुपगच्छन् । स्थानासनिक. स्थानासनवान् । दिवा स्थानं रात्रावासनं न कदाचिच्छयनम् । तत एतद्विलयन मथितमित्यारभ्यानन्तरमुक्त व्रत सवत्सरमेतद्व्रतं चरेत् । एतदूनमष्टाचत्वारिंशद्वर्षसामान्य ब्रह्मचारिव्रतेन समित सदृशं यावत्तस्य फल तावदस्यापीत्याचक्षते धर्मज्ञा. । न केवल स्मृत्यादिकमेव प्रयोजनमिति । अपर आह—विलयनं मथितं पिण्याकमित्यादिक व्रतान्तरं स्मृत्यादिकमस्य । अधोनाभीत्यादिक तु समित् व्रतमिति । एतद्ब्रह्मचारिणो गृहस्थस्य च भवति । तथा च बौधायन.—‘ अष्टाचत्वारिंश[त्संमि]तमित्याचते । तस्य तस्य संक्षेप सवत्सर । तत्सवत्सरव्रत व्याख्यास्यामः । स यदि ब्रह्मचारी स्यान्नियमेन प्रतिपद्येत । अथ यद्यब्रह्मचारी स्यात्केशश्मश्रुलोमनखानि वापयित्वा तीर्थे गत्वा स्नात्वा ’ इत्यादि ॥ ५७ ॥

नित्यश्राद्धम् ॥ ५८ ॥

अहरहः श्राद्धं वक्ष्यते तस्य नित्यश्राद्धमिति नाम ॥ ५८ ॥

बहिर्ग्रामाच्छुचयः शुचौ देशे सम्स्कुर्वन्ति ॥ ५९ ॥

तन्नित्यश्राद्धं बहिर्ग्रामात्कर्तव्यम् । यस्यान्नसस्कर्तार. शुचौ देशेऽन्न संस्कुर्वन्ति । शुचय इति वचननाधिक्यार्थम् । ‘आर्याः प्रयताः ’ इति पूर्वमेव प्रायत्यस्य विहितत्वात् ॥ ५९ ॥

तत्र नवानि द्रव्याणि ॥ ६० ॥

॥ ६० ॥

कानि पुनस्तानि—

यैरन्नं सर्ध क्रियते येषु च भोज्यते ॥ ६१ ॥

यैर्भाण्डैरन्नसंस्कार. क्रियते येषु च कास्यादिषु भोज्यते तानि नवानीति ॥ ६१ ॥

तानि च भुक्तवद्भ्यो दद्यात् ॥ ६२ ॥

तानि भाण्डानि कास्यादीनि च भुक्तवद्भ्यो दद्यात् । एव प्रत्यहम् ॥ ६२ ॥

समुदेतांश्च भोजयेत् ॥ ६३ ॥

समुदेतग्रहण गुणाधिक्यार्थं ॥ ६३ ॥

न चातद्गुणायोच्छिष्टं प्रयच्छेत् ॥ ६४ ॥

माण्डेषु यद्भुक्तशिष्टं तद(दि)होच्छिष्टम् । तदप्यतद्गुणाय भुक्तवता ये गुणास्तद्र-हिताय न दद्यात् । तद्गुणायैव दद्यात् ॥ ६४ ॥

तदलाभ आह—

तानि भुक्तवद्भ्यो ददाति ॥ ६५ ॥

उच्छिष्टानि श्राद्धे भुक्तवद्भ्य एव दद्यात् ॥ ६९ ।

एवꣳ संवत्सरम् ॥ ६६ ॥

एवमेतन्नित्यश्राद्धं संवत्सरं कर्तव्यमहरहः ॥ ६६ ॥

तेषामुत्तमं लौहेनाजेन कार्यम् ॥ ६७ ॥

तेषां संवत्सरस्याह्नामुत्तममहः समाप्तिदिनं लौहेन लोहितवर्णेनाजेन श्राद्धं कर्त-व्यम् । दृश्यते चात्रास्मिन्नर्थे लोहशब्दः । 'लोहस्तूपरो भवति । अथ तूपरः कृष्ण-सारं(रङ्)गो लोहितसारङ्गो वा' इति च[म]केषु विद्व(च भ)वति—'श्यामं च मे लोहं च मे' इति ॥ ६७ ॥

मानं च कारयेत्प्रतिच्छन्नम् ॥ ६८ ॥

मानं धिष्ण्यं वेदिका । दृश्य(श्यते) हि मिनोतेरयमस्मिन्नर्थे प्रयोगः—अग्रेणाग्निं चतुरस्रां वेदिं विमितं विमिन्वन्ति । पुरस्तादुन्नतं पश्चान्निम्नमिति । तस्यैवायमुपसर्ग-रहितस्य प्रयोगः । तन्मानं कारयेत्कर्मकरैः । प्रतिच्छन्नं तद्भवति तिरस्करण्यादिना । इदमपि ग्रामाद्बहिरेव ॥ ६८ ॥

तस्योत्तरार्धे ब्राह्मणान्भोजयेत् ॥ ६९ ॥

तस्य मानस्योत्तरस्मिन्नर्धे ब्राह्मणा भोजयितव्याः ॥ ६९ ॥

उभयान्पश्यति ब्राह्मणाꣳश्च भुञ्जानान्माने च पितॄ-नित्युपदिशन्ति ॥ ७० ॥

तस्यैव कृतस्य कर्मणो महिम्ना, उभयान्पश्यति । कांश्च कांश्च ब्राह्मणांश्च भुञ्जानान् तत्तस्मिन्नेव च माने पितॄन्यथा ब्राह्मणान्भुञ्जानान्प्रत्यक्षेण पश्यते(ति) तथा माने समागतान्पितॄनपि प्रत्यक्षेण पश्यतीत्युपदिशन्ति धर्मज्ञाः ॥ ७० ॥

कृताकृतमत ऊर्ध्वम् ॥ ७१ ॥

अत ऊर्ध्वं मासिश्राद्धं कृताकृतम् । क्रियतां वा मा कारि । अकरणेऽपि न प्रत्य-वाय इति ॥ ७१ ॥

**श्राद्धेन तृप्तिं हि वेदयन्ति पितरः ॥ ७२ ॥**

हि यस्मादन्त्येऽहनि दर्शनमुपगच्छन्ति तच्छ्राद्धेन तृप्तिं हि वेदयन्ति ज्ञापयन्ति । तस्मात्कृताकृतमिति ॥ ७२ ॥

अथ पुष्टिकामस्य प्रयोगः । पुष्टिकाम इत्यादिसमुदेताश्च भोज येदित्यन्त एकः—

**पुष्टिकामस्तिष्येण गौरसर्षपाणां चूर्णानि कार· यित्वा तैः पाणिपादं प्रक्षाल्य कर्णौ मुखं प्रास्य यद्वातो नातिवाति तदासनोऽजिनं बस्तस्य प्रथमः कल्पो दक्षिणाभिमुखो वाग्यतो भुञ्जीत ॥ ७३ ॥**

पुष्टिकामः पुरुषो वक्ष्यमाण प्रयोग कुर्यात् । तिष्येण ' नक्षत्रेण च( त्रे च ) लुप्याधिकारेण(पि ' इत्यधिकरणे) तृतीया । नक्षत्रेण गौराणा सर्षपाणा संबन्धीनि चूर्णानि कर्मकरैः कारयेत् । कारयित्वा तैश्चूर्णैः पाणी पादौ कर्णौ मुख च प्रक्षालयेत् । प्रक्षाल्य चूर्णशेषं प्रास्येद् विकिरेत् । एतत्प्रतितिष्यम् । विशेषकृत्य प्रत्यहं कर्तव्यम् । प्रास्य च यद्वातो नातिवाति तदासनः । अ(यद)धो नातीत्य वाति तदासनस्तादृगासनः । भुञ्जीतेति वक्ष्यमाणेन संबन्धः । अजिन बस्तस्य प्रथमः कल्पः । तत्र बस्ताजिनमासनं स्यादिति मुख्यः कल्पः । दक्षिणाभिमुखो वाग्यतो भुञ्जीत ॥ ७३ ॥

**अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति ॥ ७४ ॥**

एवं मुखस्य भोजनं तस्य भोक्तुर्या माता तस्या अनायुष्य अनायुष्करमिति धर्मज्ञा उपदिशन्ति । तस्मान्मातृवता नैतद्व्रतं कार्यमिति ॥ ७४ ॥

**औदुम्बरश्चमसः सुवर्णनाभो भोजनीयं प्रशस्तः ॥ ७५ ॥**

चमु अदने । चम्यते यत्र[ स ]चमसः । भोजनीयं भोजनार्हं पात्रम् । स औदुम्बरस्ताम्रमयः । सुवर्णनाभः सुवर्णेन मध्येऽलंकृतः प्रशस्तो भोजने ॥ ७५ ॥

**न चान्येनाभिभोक्तव्यः ॥ ७६ ॥**

अभि धात्वर्थात् (नु)वादि । × भोक्तव्य इति पुलिङ्गपाठेऽप्येष एवार्थः॥७६॥

**यावद्ग्रासं[२] संनयन्नस्कन्दयन्न(न्ना)भिजिहि(ही)ताभिजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम्॥७७॥**

---

१ ( पा० सू० २ । ३ । ४५ )। × 'अत्र उक्तादन्येन पात्रेण नाभिभोक्तव्यम्' इति ग्रन्थच्छुटितः। तथा च सूत्रे ' भोक्तव्यम् ' इति नपुंसकलिङ्गपाठेन भाव्यमिति भाति । अत एव पुंलिङ्गपाठ इति साधु संगच्छते । २ क पुस्तके ' अस्पन्दयन् ' इत्यधिकं विद्यते ।

यावद्ग्रासं यावदेवाशितुं शक्यं तावदेव सन्नयन्पिण्डीकुर्वन्नस्कन्दयन्भूमावन्नमपातयन्कृत्स्नं ग्रासं ग्रसीतेत्यन्वयः। आस्ये ग्रासप्रवेशे यथाऽङ्गुष्ठोऽप्यनुप्रविशति तथा सर्वानेव ग्रासानुक्तेन प्रकारेण ग्रसीतेति। मध्ये क्रियान्तरविधिः। नाभिजिहीत। भोजनपात्रं सव्येन पाणिना न विमुञ्चेत्। अभिजिहीत वा विमुञ्चेद्वा। किमर्थमिदम्। यावता न प्रकारान्तरं संभवति। सत्यम्। 'प्रक्रमात्तु नियम्यते' इति न्यायेन [ य ]एव प्रकारः प्रथमे भोजने स एवान्तो( न्ता )दनुष्ठातव्य इति। एवमर्थमिदम् ॥ ७७ ॥

**न च मुखशब्दं कुर्यात् ॥ ७८ ॥**

भोजनदशा यावत्। इदमे(मि)वोत्तरम् ॥ ७८ ॥

**पाणिं च नावधुनुयात् ॥ ७९ ॥**

पाणिरत्र दक्षिणः ॥ ७९ ॥

**आचम्योर्ध्वौ पाणी धारयेदा प्रोदकीभावात् ॥ ८० ॥**

भुक्त्वाऽऽचम्य पाणी ऊर्ध्वौ धारयेत्। यावत्प्रगतोदकौ शुष्कोदकौ भवतः ॥८०॥

**ततोऽग्निमुपस्पृशेत् ॥ ८१ ॥**

भुक्त्वा चाग्निरुपस्प्रष्टव्यः ॥ ८१ ॥

**दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः ॥ ८२ ॥**

मूलानि कन्दाः। फलान्याम्रादीनि। एतेभ्योऽन्यद्दिवा न भुञ्जीत। तद्भक्षणे न दोषः ॥ ८२ ॥

**स्थालीपाकानुदेश्यानि वर्जयेत् ॥ ८३ ॥**

तेन ब्राह्मणं विद्यावन्तं परिवेवेष्टि, इत्यादौ न भुञ्जीत। अनुदेश्यानि पितृभ्यो देवताभ्यश्च सकल्पितानि तानि [च] न भुञ्जीत ॥ ८३ ॥

**नैयमिकं च श्राद्धꣳ स्नेहवदेव दद्यात् ॥ ८४ ॥ (ख० १३)।**

यन्नियमेन कर्तव्यं मासि श्राद्धं तत् स्नेहयुक्तमेव दद्यान्न शुष्कम् ॥ ८४ ॥ ( ख० १३ )।

तत्र विशेषः—

**सर्पिर्मांसमिति प्रथमः कल्पः ॥ ८५ ॥**

स्पष्टम् ॥ ८५ ॥

अभावे तैल५ शाकमिति ॥ ८६ ॥

सर्पिषोऽभावे तैलं मासाभावे शाकम् । इतिशब्दाद्यच्चान्यदेव युक्तम् ॥ ८६ ॥

मघासु चाधिक५ श्राद्धेन कल्पेन सर्पिर्ब्राह्मणान्भोजयेत् ॥८७॥

मघासु च पूर्वपक्षेऽपि श्राद्धविधानेन सर्पिर्मिश्रमन्नं ब्राह्मणान्भोजयेत् ॥ ८७ ॥

तिलानां द्रोणं येनोपायेन शक्नुयात्तथा दद्यात् ॥ ८८ ॥

येनोपायेनोपयोजयितुं शक्नुयात् । अभ्यङ्ग उद्वर्तने भक्ष्ये भोज्ये चेति तेनोपायेन श्राद्धे तिलाना द्रोणमुपयोजयेत् । तत्रैकैकस्य ब्राह्मणस्य द्रोण द्रोणमुपयोजयितुमशक्यत्वात्समुदितानुपयोजयेत् ॥ ८८ ॥

समुदेताश्च भोजयेत् ॥ ८९ ॥

व्याख्यातमिदम् ॥ ८९ ॥

अथ पुष्टिकामस्य(स्यै) वापरः प्रयोगः—

उदगयन आपूर्यमाणपक्षे तिष्येन(ण) स्थालीपाकं श्रपयित्वा महाराजमिष्ट्वा ब्राह्मणं भोजयित्वा पुष्टिकामः सिद्धिं वाचयेत् ॥ ९० ॥

पुष्टिकामः पुरुष उदगयन आपूर्यमाणपक्षे पूर्वपक्षसन्निधानि पुष्येण तस्मिन्नक्षत्रे स्थालीपाकं श्रपयेत् । श्रपयित्वा महाराज वैश्रवणं यजेत । अग्निमुखान्ते महाराजाय स्वाहेति प्रधानहोमः । ततः स्विष्टकृदादि । ततः स्थालीपाकेन ब्राह्मणं भोजयेत् । उत्तरविवक्षयेदं वचनम् । भोजयित्वा सिद्धिं वाचयेत । पुष्टिरासि(स्त्वि)ति ॥ ९० ॥

एवमहरहरा परस्मात्तिष्यात् ॥ ९१ ॥

एवमिदं स्थालीपाकश्रपणादि सिद्धिवाचनान्तमहरह कर्तव्यम् । अपरस्मात्तिष्याद्यावदपरस्तिष्य आगच्छति ॥ ९१ ॥

द्वौ द्वितीये ॥ ९२ ॥

द्वितीयतिष्ये प्राप्ते द्वौ भोजयेत् । अन्यत्समानमेवमा तृतीयात् ॥ ९२ ॥

त्रीꣳस्तृतीये ॥ ९३ ॥

तृतीये पुष्ये त्रीन्भोजयेत् । आ चतुर्थात् ॥ ९३ ॥

एवमभ्युच्चयेन संवत्सरम् ॥ ९४ ॥

एवमेतत्कर्म यावत्संवत्सरः पूर्येत तावत्कर्तव्यम् । ब्राह्मणभोजनमभ्युच्चयेन भवति । चतुर्थे(र्थं)प्रभृति चत्वारः पञ्चमप्रभृति पञ्चेत्यादि ॥ ९४ ॥

एवं कृते फलमाह—

महान्तं पोषं पुष्यति ॥ ९५ ॥

महत्यायुष्ये युक्तो भवति ॥ ९५ ॥

आदित एवोपवासः ॥ ९६ ॥

उपवासस्त्वादित एव पुष्ये भवति न प्रतिपुष्यम् ॥ ९६ ॥

आत्ततेजसां भोजनं वर्जयेत् ॥ ९७ ॥

आत्ततेजांसि तक्रवाजिनादीनि । तानि नोपभुञ्जीत ॥ ९७ ॥

भस्मतुषाधिष्ठानं च ॥ ९८ ॥

वर्जयेदित्येव । भस्मतुषांश्च नाधितिष्ठेन्नाऽऽक्रामेत् ॥ ९८ ॥

पदा पादस्य क्षालनं वर्जयेदधिष्ठानं च ॥ ९९ ॥

एकेन पदा पादस्य क्षालनमधिष्ठानं [च] वर्जयेत् ॥ ९९ ॥

पादयोः प्रेङ्खोलनं च ॥ १०० ॥

प्रेङ्खोलनमान्दोलनमितस्ततश्चालनम् ॥ १०० ॥

जानुनि वाऽत्याधानं च जङ्घायाः ॥ १०१ ॥

एकस्मिञ्जानुनीतरस्य(स्या) जङ्घाया अत्याधानमवस्था[प]नं च वर्जयेत् ॥ १०१ ॥

नखैश्च नखच्छेदनवादनस्फोटनानि ष्ठीवनान्य-
कारणात् ॥ १०२ ॥

पर्वाङ्गुलीनां स्फोटनानि वर्जयेदकारणात् । कारणं वातादि । वादनस्फोटनानीति समासपाठेऽप्ययमेव एवार्थः । ष्ठीवनान्यपि च वर्जयेत् । अकारणादित्येव ॥ १०२ ॥

यच्चान्यत्परिचक्षते ॥ १०३ ॥

यच्चान्यदुक्तव्यतिरिक्तं तृणच्छेदनादि परिचक्षते गर्हन्ते तदपि वर्जयेत् ॥ १०३ ॥

योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु ॥ १०४ ॥

धर्माविरुद्धा ये द्रव्यपरिग्रहास्तेषु योक्तोत्पादयिता स्यात् ॥ १०४ ॥

---

१ 'ष्ठीवनानि चाकारणात्' इति क पुस्तके चशब्दघटित. पाठ. ।

प्रतिपादयिता च तीर्थे यन्ता चातीर्थे यतोऽभयꣳ स्यात् ॥ १०५ ॥

तीर्थेषु तीर्थं गुणवत्पात्र यत्र(ज्ञो) वा । तत्र द्रव्यस्यार्जितस्य प्रतिपादयिता स्यात् । यन्ता नियन्ताऽप्रदाता । अतीर्थे यन्ता च स्यात् । यतः पुरुषादप्रतिपादने न भयं स्यात् । भयसंभवे तु पिशुनादिभ्यो देयम् ॥ १०५ ॥

संग्रहीता च मनुष्यान् ॥ १०६ ॥

अर्थप्रदानप्रियवचनानुसारेण मनुष्याणा संग्रहणशीलः स्यात् ॥ १०६ ॥

भोक्ता च धर्माविप्रतिषिद्धान्भोगान् ॥ १०७ ॥

धर्माविप्रतिषिद्धा ये भोगाः स्रक्चन्दनस्थानभार्यासेवादयस्तेषा च भोगशीलः स्यात् ॥ १०७ ॥

एवंवर्तमान उभौ लोकावभिजयति ॥ १०८ ॥(ख०१४) ।

एव महत्या पुष्ट्या युक्त उक्तप्रकारमनुतिष्ठन्नुभौ लोकावभिजयति । भोगेनेम लोकं तीर्थे प्रतिपादनेन चामुं लोकम् ॥ १०८ ॥ ( ख० १४ ) ।

सर्वाश्रमाणा समयपदानीत्युक्तं पुनस्ते क आश्रमा इत्याह—

चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थमिति ॥ १०९ ॥

आश्रमाभ्यन्तरेषु ( श्राम्यन्त्येषु ) पुरुषाः श्रेयोर्थिन इत्याश(त्याश्र)माः । एषा सामान्यसञ्ज्ञा । उत्तरा विशेषसंज्ञाः । गृहे तिष्ठति कुटुम्बभरण इति गृहस्थः । तस्य भावो गार्हस्थ्यम् । स एक आश्रमः । आचार्यकुलम् । आचार्यकुले वासोऽप्येकः । मनु अवबोधने । मनुत इति मनुर्ज्ञानपरस्तस्य भावो मौन संन्यासः परः । वनं प्रतिष्ठित इति वा(व)नप्रस्थः । स एव वानप्रस्थ. . प्रज्ञादित्वात् । तस्य भावो वा वानप्रस्थम् । इतिशब्दः परिसमाप्त्यर्थ. । एतावन्त एवाऽऽश्रमा इति । चतुर्णामेवोपदेशेऽपि चत्वार इति वचनं, ए(ऐ)काश्रम्यत्वादाचार्यैः प्रत्यक्षविधानाद्गार्हस्थ्यादि स्मृत्यन्तरोक्त मा ग्राहीरिति ॥ १०९ ॥

तेषु [सर्वेषु] यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति ॥ ११० ॥

तेष्वाश्रमेषु सर्वेषु चतुर्ष्वपि यथोपदेशं यथाशास्त्रमव्यग्रः समाहितमना भूत्वा यो वर्तते स क्षेममभयं पदं गच्छति । अ[ने]नाऽऽश्रमविवेको(विकल्पो) ग्राह्यो(उक्तो)वेदि·

तव्यः । निःश्रेयसार्थिनाऽन्यतरस्मिन्नाश्रमे यथाशास्त्रमवहितेन वर्तितव्यमिति । तथा च गौतमः—'तस्याऽऽश्रमविकल्पमेके ब्रुवते ' इति ॥ ११० ॥

**सर्वेषामुपनयनप्रभृति समान आचार्यकुले ब्रह्म-चारिवासः ॥ १११ ॥**

उपनयनप्रभृति य आचार्यकुले वासोऽष्टाचत्वारिंशदादीनामन्यतमः सर्वेषामाश्रमाणां समानः ॥ १११ ॥

कस्मादाचार्यकुले वासः समान इति[ चेत् ]—

**बुद्ध्वा कर्माणि यत्कामयेत तदारभेत ॥ ११२ ॥**

प्रत्याश्रमं यानि कर्माणि तानि बुद्ध्वा गृहस्थस्यैवैतानि, एतेषाम[न]नुष्ठाने प्रत्य-वायः फलं चेदम् , एषामेतानि शक्यान्यनुष्ठातुं नैतानीत्याचार्यादुपश्रुत्य यत्कर्म फलं वा कामयेत तदारभेत तमाश्रमं प्रतिपद्येतेति ॥ ११२ ॥

**सर्वेषामनु(नू)त्सर्गो विद्यायाः ॥ ११३ ॥**

विद्याया अनु(नू)त्सर्गः सर्वेषामाश्रमाणां समान एव । तत्र गृहस्थस्य तत्रैवमेव प्रपञ्चितत्वात् ॥ ११३ ॥

अध्ययनानन्तरं प्रविवासितस्याऽऽचार्यकुलस्य च रूपमाह—

**यथा विद्यार्थस्य नियम एतेनैवाऽऽन्तमनुप्रयुञ्जा-नस्य वाऽऽचार्यकुले शरीरन्यासः ॥ ११४ ॥**

यथा विद्यार्थस्योपकुर्वाणकस्य ब्रह्मचारिणः ' अथ ब्रह्मचर्यविधिः ' इत्यारभ्याग्नी-न्धनादिनियम उक्तोऽनेनैव नियमेनाऽऽन्तमा शरीरपातादनुप्रयुञ्जानस्योपासीनस्यो-पसदनं कुर्वत आचार्यकुले शरीरन्यासो देहत्यागो भवति ब्रह्मचारिणो नैष्ठि-कस्य । तत्रैवाऽऽमरणादवितिष्ठेन्नाऽऽश्रमान्तरं गच्छेत् । यदि तमेवाऽऽश्रममात्मनः क्षेमं मन्यत इति । अत्र मनुः—

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥
एषु त्वविद्यमानेषु स्थानासनविहारवान् ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥
एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः ।
स गच्छत्युत्तमस्थानं न चेहाऽऽजायते पुनः ॥ इति ॥ ११४ ॥

इति ब्रह्मचारिवासः ॥ ११५ ॥

एवं नैष्ठिकब्रह्मचारिणो वास आश्रमः ॥ ११५ ॥

अथ परिव्राजः ॥ ११६ ॥

अथानन्तर परिव्राज(जो) धर्मा उच्यन्ते । दृष्टादृष्टार्थान्सर्वानेवाऽऽरम्भान्परित्यज्या मलाः (ऽऽत्मलाभाय) सन्यासाश्रम परिव्रजतीति परिव्राट् सन्यासी ॥ ११६ ॥

अत एव ब्रह्मचर्यवान्प्रव्रजति ॥ ११७ ॥

अत एव ब्रह्मचर्याश्रमादेव ब्रह्मचर्यवानविप्लुतब्रह्मचर्य. प्रव्रजति प्रव्रज्या कुर्याद्यदि तत्रैव पक्वकषायो भवति । श्रूयते च ' ब्रह्मचर्यादेव प्रव्रजेत् , गृहाद्वा वनाद्वा ' इति । ' यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इति च । अत एवेति वचनाद्गृहाश्रमं प्रविष्टस्य तत्परित्यागे नाऽऽश्रमान्तरप्राप्तिराचार्यस्याभिमतेव लक्ष्यते । तत्रायमभिप्रायः—दारपरिग्रहे सति 'यावज्जीवमग्निहोत्र जुहुयात् ' इति श्रुत्या विरुध्यते स कथ प्रव्रजेदिति । तस्मात्सत्यपि वैराग्ये काम(म्य)स्य कामपरित्यागेन नित्यानि नैमित्तिकानि च कुर्वन्प्रतिषिद्धानि च वर्जयन्गृहस्थो मुच्यत इति । यथाऽऽह याज्ञवल्क्यः—

न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रिय. ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ इति ।

अथ योऽनाहिताग्निस्तस्य विरक्तस्याऽऽत्मप्रव्रजने को विरोधः । तथाहि—' जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य.' इति । मनुरपि—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥ इति ।

मोक्ष आश्रमः । नन्वेवं ब्रह्मचर्यादपि प्रव्रज्या नोपपद्यते । अथवा तत्र ' यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इति श्रुत्युक्तं प्रव्रजनं गृहस्थस्यापि विरक्तस्य युक्त भविष्यति । स्मर्यते च—

प्राजापत्या निरुप्येष्टिं सार्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन्त्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥ इति ।

तथा यो गृहस्थो मृतभार्यो वृद्धः पुनर्दारक्रियायामसमर्थस्तस्यापि युज्यते प्रव्रज्या यदहरेव विरजेदिति । एष एव कालः प्रव्रज्यायाः । सर्वमन्याद्विरक्तस्येति युक्तम् । एव-

कारस्तु सूत्रे श्रुत्यनुसारेण प्रयुक्तः । यथा गृहाद्वा वनाद्वेति । वाद्यौच (ब्रुवाणैव) श्रुतिः ब्रह्मचर्यादेव प्रव्रजेदित्याह तथेति ॥ ११७ ॥

**तस्योपदिशन्ति ॥ ११८ ॥**

तस्य परिव्राजः कर्तव्यमुपदिशन्ति धर्मज्ञाः ॥ ११८ ॥

**अनग्निरनिकेतः स्यादशर्माऽशरणो मुनिः स्वाध्याय उत्सृज्यमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्योपनिष्क्रम्यानीहोऽनमुत्रश्चरेत् ॥ ११९ ॥**

ब्रह्मचारिणः समिदाधानमग्निकार्यम् । गृहस्थस्यौपासनमग्निहोत्रहोमः । वानप्रस्थस्य 'क्रमेणैकेनाग्नीनाधाय' इत्यादिना विहितेऽग्नौ होमादि । तस्य तु नैवंविधं किंचिदग्निकार्यं ताव[दस्ती]त्यनग्निः । निकेतो वासस्थानं स्वभूतं तदभावादनिकेतः । शर्म सुखं तदस्य नास्तीत्यशर्मा । किंचिदपि शरणत्वेनाप्रपन्नो न वा कस्यचिच्छरणभूत इत्यशरणः । स्वाध्यायः प्रणवादिपवित्राणां जपः । तत्रैव वाचं विसृजेत् । अन्यत्र मौनः(नव्रतः)स्यात् । यावता प्राणा ध्रियन्ते सा प्राणवृत्तिः । तावतीं भिक्षां ग्रामे प्रतिलभ्य । एतावानस्य ग्रामे प्रवेशः । अन्यदा बहिर्वासः । इ(ई)हाऽर्थ(र्था) कृष्यादयः परलोकार्था जपहोमादयो यस्य न सन्ति सोऽनीहोऽनमुत्र इत्युक्तः । स एवंभूतश्चरेत् । एकस्मिन्स्थाने द्व्यहमात्रमपि न वसेत् । अत्र गौतमः – 'न द्वितीं । मुनी रात्रिं ग्रामे वसेत्' इति । 'वर्षासु ग्रामवासशील.' इति च ॥ ११९॥

**तस्य मुक्तमाच्छादनं विहितम् ॥ १२० ॥**

यत्परैर्मुक्तं परित्यक्तमयोग्यतया [तत्] तस्य विहितमाच्छादनम् । तदसावाच्छादयेन्निबध्नीयात् ॥ १२० ॥

**सर्वतः परिमोक्षमित्येके ॥ १२१ ॥**

सर्वैरेव वासोभिः परिमोक्षमेक उपदिशन्ति । न किंचिदपि वासो बिभृयान्नग्न एव चरेदिति । अपर आह— सर्वतो विधितो निषेधतश्चास्य परिमोक्षमेके ब्रुवत इति न किंचिदस्य वर्ज्यमिति ॥ १२१ ॥

एतदेवोदाहरणैः प्रपञ्चयति—

**सत्यानृते सुखदुःखे प्रियाप्रिये वेदानिमं लोकममुं च परित्यज्याऽऽत्मानमन्विच्छेत् ॥ १२२ ॥**

सत्यमेव वक्तव्यामिति यो नियमस्त परित्यज्य । तथाऽत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यत इत्यादिके विषये नानृतं वक्तव्यमिति यो नियमस्तं न परित्यज्य । सुखमिष्टभोजनादिजन्यम् । दुःखं शीतवातादिजन्यम् । प्रियाप्रिये मित्रशत्रू । वेदान्स्वाध्यायाध्ययनम् । इम लोकमैहलौकिक काम्यं कर्म । अमुं च लोकं पारलौकिकं च काम्यं कर्म । सर्वमेतत्परित्यज्याऽऽत्मानमध्यात्मपटलोक्तमन्विच्छेदुपासीतेति । तदेवं ज्ञानब लाबल विनाऽकृतविधिनिषेधा ये स्वैर प्रवर्तन्ते सिद्धास्तेषा मतमुपन्यस्तम् ॥ १२२ ॥

अथैषा स्वैरचारिणां किं तत आह—

बुद्धे क्षेमप्रापणमिति ॥ १२३ ॥

आत्मनि बुद्धेऽवगते सति तदेव ज्ञानं सर्वमलं प्रक्षाल्य क्षेम प्रापयति । स्मर्यते च—

यथैधासि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्नि. सर्वकर्माणि भस्मसात्कुरुते तथा ॥ इति ॥ १२३ ॥

तदिदं नित्यं(रा)करोति—

तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १२४ ॥

यानि यतेरवश्यं(श्य)कर्तव्यकर्मप्रतिपादनपराणि शास्त्राणि तैरेतद्विप्रतिषिद्धम् ।

तत्र मनुः— क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टं कुशल वदेत् ।
सप्तद्वारावकीर्णां च न वाचमक्(नृ)ता वदेत् ॥
न चोत्पातनिमित्ताभ्या न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्या भिक्षा भिक्षेत कर्हिचित् । इति ॥

अतो नियम(यति)मेव प्रकृत्य यानि कर्माणि विहितानि तानि कर्तव्यानि । यानि च निषिद्धानि तानि वर्ज्यानि ॥ १२४ ॥

क्रुद्धे·(बुद्धे) क्षेमप्रापणं प्रकृत्य वाहिकत्वात्तानि विहितानि(?)। बुद्धे क्षेमप्रापणमित्येतच्च प्रत्यक्षविरुद्धमित्याह—

बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ॥ १२५ ॥

आत्मनो बोधमात्रेण चेत् क्षेम प्राप्यते तदा, इहैव शरीरे दुःख नोपलभ्य(मेत)ते। ज्ञानि(नी)ने (न) चैतदस्ति । नहि ज्ञानेषु प्रतिषिद्धेषु कथं नहि त्वगुज्ञानमात्रेण दुःखं नानुभूयत इत्यस्ति मनु —अशरीर नावसंप्रियाप्रिये न स्पृशत इति ॥ १२५ ॥

[तरति] शोकमात्मविदित्यादिश्रुतिभ्य इहैव विशोकत्वं श्रुतं विरुध्येतेति चेत्तत्राऽऽह—

एतेन परं व्याख्यातम् ॥ १२६ ॥

तत्त्वज्ञाने जातेऽपि दुःखिताया भावाद्दुःखक्षयो येन साधनेन भवति तदन्यत्परं ज्ञानोत्पत्तिसाधनमस्तीति व्याख्यातम् । तत्त्वाध्यात्मपटले सूचितम् । मैत्र्यादि चाऽऽसना- भ्यासेन वासनानाश. । अष्टाङ्गयोगेन मनोनाश इति । तदनुष्ठेयं कटाक्षमनिक्षिपन् । अष्टाङ्गयोगनिरतो मुच्यत इति ॥ १२६ ॥

**अथ वानप्रस्थः ॥ १२७ ॥**

अथानन्तरं वानप्रस्थाश्रम उच्यते ॥ १२७ ॥

**अत एव ब्रह्मचर्यवान्प्रव्रजति ॥ १२८ ॥**

प्रकर्षेण व्रजते (ति) । अपुनःप्रवेशाय वन प्रतिष्ठत । इति । तथा च गौतमः— 'ग्रामं च न प्रविशेत्' इति ॥ १२८ ॥

**तस्योपदिशन्ति ॥ १२९ ॥**

गतमेतदुत्तरं च ॥ १२९ ॥

**एकाग्निरनिकेतः स्यादशर्माऽशरणो मुनिः स्वाध्याय एवोत्सृजमानो वाचम् ॥ १३० ॥**

[ए]कस्यैकोऽग्निः । न तावदौपासनाग्नि । ब्रह्मचर्यत्वात् । तस्य लौकिकेऽग्नौ यथापूर्वं साय प्रातः समिधमादध्यादित्येषोऽर्थो विवक्षित· । अपर· आह—श्राम(व)णकेऽ(ना)ग्नि- माधायेति । गौतमः—श्राम(व)णकं नाम वैखानससूत्रम् । तदुक्तेन प्रकारेणै एकोऽग्नि राधेयः । तस्मिन्सायं प्रातरग्निकार्यमिति । अन्यद्गतम् ॥ १३० ॥

**तस्याऽऽरण्यमाच्छादनं विहितम् ॥ १३१ ॥**

अरण्ये भवमारण्यमजिनवल्कलादि ॥ १३१ ॥

**ततो मूलैः फलैः पत्रैस्तृणैरिति वर्तयंश्चरत् ॥ १३२ ॥**

ततो मूलफलादिभिर्वर्तयन्वृत्तिः प्राणयात्रा ता कुर्वंश्चरेच्चरणशीलः स्यात् ॥ १३२ ॥

**अन्ततः प्रवृत्तानि ॥ १३३ ॥**

मूलादिभिः स्वयं गृहीतैः किंचित्काल वर्तयित्वाऽन्ततोऽन्ते प्रवृत्तानि स्वयमेव पतितानि तान्यभिनिश्चित्य तैर्वर्तयेदिति ॥ १३३ ॥

**आपो वायुराकाशः ॥ १३४ ॥**

कियन्तंचित्कालमब्भक्षस्ततो वायुभक्षस्ततत आकाशं न किंचिद्भक्षयेदिति ॥ १३४ ॥

**तेषामुत्तरोत्तरः संयोगः ॥ १३५ ॥ ( ख० १५ ) ।**

संयुज्यते संश्रीयत इति सयोग. । तेषा मूलादीना मध्य उत्तरमुत्तरं द्रव्यं फलतो विशिष्टमिति ॥ १३९ ॥ (ख० १९ )।

**अथ वानप्रस्थस्यैवाऽऽनुपूर्व्यमेकं उपदिशन्ति ॥ १३६ ॥**

अथेति पक्षान्तरोपन्यासे। पूर्वं ब्रह्मचर्यादेव वनप्रवेश उक्त. । एके त्वाचार्यास्तस्यैव वानप्रस्थस्यैवाऽऽनूपूर्व(व्य) कर्माण्युपदिशन्ति ॥ १३६ ॥

**विद्यां समाप्य दारं कृत्वाऽग्नीनाधाय कर्माण्यारभेत सोमावराध्यानि यानि श्रूयन्ते ॥ १३७ ॥**

ब्रह्मचर्यस्थितो विद्या समाप्य गृहस्थो भूत्वाऽग्नीनाधाय कर्माणि कुर्यात् । कानि । सोमावराध्यानि। अवराधयेत्स्वोर्ध्वं(अवरार्धं पश्चादर्धं तत्र भवोऽवरार्ध्य·) सोमोऽवरा र्यो (र्ध्यो) येषा तानि सोमावराध्यानि। हविर्यज्ञाख्यानि चातुर्मास्यादीनि । हविर्यज्ञान्सोमं वेत्यर्थः । यानि श्रूयन्ते यानि श्रुतानि विहितानि ॥ १३७ ॥

**गृहान्कृत्वा सप्रजः सदार. सहाग्निभिर्बहिर्ग्रामाद्वसेत् ॥ १३८ ॥**

ग्रामाद्बहिररण्ये गृहान्कृत्वा सकुटुम्बैः सहैव चाग्निभिर्वसेत् । अस्मिन्पक्षे प्रागुक्तमेकाग्निरित्येतन्नास्ति ॥ १३८ ॥

**एको वा ॥ १३९ ॥**

अथवा पुत्रेषु भार्यां निक्षिप्य स्वयमेक एव वने वसेत् । अस्मिन्पक्षे ‘ प्राजापत्यां निरू( रु )प्येष्टिम् ’ इति परिव्राज उक्तेन न्यायेन श्रौताग्नीनात्मनि समारोप्य श्राम( व )णकेनाग्निमाधायैकाग्निर्भवेत् ॥ १३९ ॥

**शिलोञ्छेन वर्तयेत् ॥ १४० ॥**

व्याख्यातः शिलोञ्छः । ( ते )न वर्तयेत्प्राणयात्रा कुर्यात् । इदं सकुटुम्बस्यैकाग्नेश्च साधारणम् । एकाकिन एवेत्यन्ये ॥ १४० ॥

**संवत्सरावराध्यं न चात ऊर्ध्वं प्रतिगृह्णीयात् ॥ १४१ ॥**

यदा शिलोञ्छवृत्तिगतोऽत ऊर्ध्वं न किंचिदपि प्रतिगृह्णीयात् ॥ १४१ ॥

**अभिषिक्तश्च जुहुयात् ॥ १४२ ॥**

यदा जुहुयात्तदाऽभिषिक्तः स्नातो जुहुयात् । अनुवादोऽयं स्नाने विशेषं विधातुम् ॥ १४२ ॥

शनैरपोऽभ्यवेयादभिघ्नन्नभिमुख आदित्यमुदक-
मुपस्पृशेत् ॥ १४३ ॥

शनैरवेगेन जलाशयं प्रविशेत् । प्रविश्य चाभिघ्नन्हस्तेनोदकं ताडयेत् । उदकमुप स्पृशेत्स्नायात् ॥ १४३ ॥

सर्वत्रैवोदकोपस्पर्शनविधिः ॥ १४४ ॥

सर्ववर्णाश्रमसाधारणमेतत् । तथा चोत्तरत्र तस्य ग्रहणम् ॥ १४४ ॥

क्षारलवणं( ण )मधुमांसानि च वर्जयेत् ॥ १४५ ॥

गतमेतत् ॥ १४५ ॥

तस्य द्वंद्वं पात्राणामेक उपदिशन्ति पाकार्थे
भोजनार्थे वाससी परशुदात्रकाञ्जानाम् ॥१४६॥

यानि पाकार्थे ताम्रभाण्डादीनि यानि च भोजनार्थानि कांस्यादीनि तेषां सर्वेषां वा कांस्यादीनां चतुर्णामेकैकस्य विधाय द्वंद्वे द्रव्ये उत्पाद्य( द्ये ) एकमु( क उ )पदि- शन्ति । काञ्जमपि वास्यादिति, उपकरणविशेषो दारुमय ॥ १४६ ॥

एकैकमादायेतराणि दत्त्वाऽरण्यमवतिष्ठेत ॥ १४७ ॥

तेषां पाकादिसाधनानां द्रव्याणामेकैकं द्रव्यं स्वयमादायेतराणि च भार्यायै दत्त्वाऽ- रण्यमवतिष्ठेतोपतिष्ठेत्समाश्रयेदिति ॥ १४७ ॥

तस्यारण्येनैव होमा( मो ) वृत्तिः प्रतीक्षाऽऽच्छा-
दनं विहितम् ॥ १४८ ॥

तस्य वानप्रस्थस्यारण्यप्रदे(त्वे)शादूर्ध्वमारण्येनैव निवासा( नीवारा )दिना होमो वृत्तिः प्रतीक्षाऽऽच्छादनं विहितम् । [वृत्ति.] प्राणयात्रा । प्रतीक्षाऽतिथिपूजा । आच्छा- दनं वस्त्रं वल्कलादिना ॥ १४८ ॥

येषु कर्मसु पुरोडाशाश्चरवस्ते कार्याः ॥ १४९ ॥

येषु दर्शपूर्णमासादिषु पुरोडाशा विहिता गृहस्थस्य तेष्वस्य तत्स्थाने चरवः कार्या न पशुबन्धादि(दौ) ॥ १४९ ॥

सर्वं चोपांशु सह स्वाध्यायेन ॥ १५० ॥

सर्वत्र कर्मकाण्डं साङ्गं प्रधानमुपांशु भवति । पारायणब्रह्मयज्ञोऽध्ययनेन सह तदप्युपांशु कर्तव्यम् ॥ १५० ॥

नारण्यमभ्याश्रावयेत् ॥ १५१ ॥

उपांशुवचनादेव सिद्धे वचनमाभिमुख्यप्रतिषेधार्थम् । तेनारण्यस्था यथा नाभिमुख्येन श्रुणुयुस्तावदुपांश्विति ॥ १५१ ॥

**अग्न्यर्थः शरणम् ॥ १५२ ॥**

शरण गृहम् । तदग्न्यर्थमेव कर्तव्यम् ॥ १५२ ॥

**आकाशे स्वयम् ॥ १५३ ॥**

स्वयमाकाश एव विशे(वसे)त् ॥ १५३ ॥

**अनुपस्तीर्णे शय्यासने ॥ १५४ ॥**

शयनमासनं चानुपस्तीर्णे देशे कुर्यात् । न तु(तु) किंचिदुपस्तीर्य ॥ १५४ ॥

**नवे सस्ये प्राप्ते पुराणमनुजानीयात् ॥ १५५ ॥**

नवे धान्ये प्राप्ते श्यामाकनीवारादौ प्राप्ते जाते पुराणं पूर्वसंचित सस्यमनुजानीयात्परित्यजेत् । अत्र मनु —

त्यजेदाश्वयुजे मासि उत्पन्न(मुन्यन्नं) पूर्वसंचितम् ।
जीर्णानि चैव वासांसि पुष्पमूलफलानि च ॥ इति ॥ १५५ ॥

**भूयांसमिच्छन्प्रत्यहमेव पात्रेण सायं प्रातरर्थमाहरेत् ॥ १५६ ॥**

इदमेकाकिनो वानप्रस्थस्य । भूयांस नियममिच्छन्न सस्यं संचिनुयात् । किं तर्हि । प्रत्यहमन्वहमेव पात्रेण येन केनचित्सायं प्रातरर्थमदनीयमाहरेद्वनस्थेभ्य एव ॥१५६॥

एव कियन्तचित्काल वर्जयित्वा—

**ततो मूलैः फलैः पत्रैस्तृणैरिति वर्तयश्चेरदन्ततः प्रवृत्तान्यापोवायुराकाश इत्युत्तर उत्तरः संयोगः फलतो विशिष्टः ॥ १५७ ॥ ( ख० १६ ) ।**

सर्वं गतम् । निरूपिता आश्रमाः ॥ १५७ ॥ ( ख० १६ ) ।

अथेदानीं तेषामेव पक्षप्रतिपक्षरूपेण प्राधान्यमप्राधान्यं च निरूप्यते—

**अथ पुराणे श्लोकावुदाहरन्ति । अष्टाशीतिसहस्राणि ये प्रजामीषिर ऋषयो दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे ॥ १५८ ॥**

प्रजामीषिरे प्रजानामिष्टान्यभ्यनन्दन् । अर्यम्णो यो दक्षिणेन पन्था दक्षिणेन मार्गस्तं प्राप्य छन्दो(छान्दोग्यो)क्तेन धिष्ण्या(धूमा)दिमार्गेण गत्वा पुनराभि(वि) संभूय

श्मशानानि भेजिरे मरणं प्रापुः । जायस्व म्रियस्वेत्याजयं(जीव)जयीताचमाशे- दिह(?)इति गृहस्थाना निन्दा ॥ १५८ ॥

अष्टाशीतिसहस्राणि ये प्रजा नेषिर ऋषय उत्त-
रेणार्यम्णः पन्थानं तेऽमृतत्वꣳहि भेजिरे ॥१५९॥

ये तु प्रजातन्तुं नाम्यनन्दत(न्)उत्तरेण मार्गं प्राप्य शि(ष्यार्चि)रामार्गेण गत्वाऽमृतत्वं विभाक्तिव्यत्यय॰, अमृतत्वं हि भेजिरे । वचनव्यत्ययः । समर्थाः सपद्यन्ते ॥ १५९ ॥

इत्यूर्ध्वरेतसां प्रशꣳसाऽथापि संकल्पसिद्धयो
भवन्ति ॥ १६० ॥

अपि च संकल्पसिद्धयो भवन्ति ॥ १६० ॥

तेषामूर्ध्वरेतसा तत्रोदाहरणम्—

यथा वर्षं प्रजादानं दूरे दर्शनं मनोजवता यच्चा-
न्यदेव युक्तम् ॥ १६१ ॥

यदि महत्यामनावृष्टौ वर्षतु देव इति ते कामयेरन्, कामवर्षी पर्जन्यो भवति । यदि वा कंचिदपुत्रमनुगृह्णीयुः पुत्रोऽस्य जायतामिति पुत्रवानेव भवति । यदि वा तेष्ववस्थितास्ते तथैव हिमवन्तं दिदृक्षेरंस्तथैव तद्भवति । मनसो जवो येषा ते मनोजवाः । तेषा भावो मनोजवता । ?। यदि कामयेरन् । नियत्यामेव का(लक)लाया प्राप्नुयामेति ततो यावता कालेन मनस्त देशं प्राप्नोति तावता तं देशं प्राप्नुयुरिति । यच्चान्यदेव युक्त रोगिणामारोग्यादि तदपि संकल्पादेव तथा भवति ॥ १६१ ॥

यस्मादेवं—

तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानेतानाश्र-
मानेके ब्रुवते ॥ १६२ ॥

श्रुतितः ' यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इत्यादिश्रुत्याऽनुमतत्वादुक्तेन प्रकारेण प्रत्यक्षफलत्वाच्चैतानूर्ध्वरेतसामाश्रमान्विशिष्टान्गार्हस्थादुत्कृष्टानेके ब्रुवत इति ॥१६२॥

तदिदं गार्हस्थ्यस्योत्कर्षप्रतिपादनेन नियोगं(रा) करोति—

त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा
तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयः-

**कपालपत्नीसंबन्धान्युच्चैर्नीचैः कार्यमिति प्रसि-द्धाचारो न प्रमाणमिति मन्यन्ते ॥ १६३ ॥**

ऽथवथवा विद्या त्रिविद्या त्रयो वेदाः । ज्ञानेन च(ता ये) पाठतश्चार्थतश्च व(वि)दन्ति । ते त्रैविद्याः तेषु पक्वज्ञानास्त्रैविद्यवृद्धा. । तेषा वेदा एव प्रमाणमतीन्द्रियार्था (येऽर्थे) इति निष्ठा निर्णय इति । यथाऽऽह भगवाञ्जैमिनिः—'चोदनालक्षणोऽर्थो धर्म.' इति । 'प्रत्यक्षमनिमित्तम्' इति च । ततश्च तत्र वेदेषु यानि कर्माणि श्रूयन्ते । किंलक्षणानि । त्रीह्यादिभिः सबन्धा(द्धा)नि उच्चैर्ऋचा क्रियते । उपांशु यजुषेत्येवमादि(दीनि) तैर्विरुद्ध आचारः प्रमाण न भवतीति मन्यन्ते । एतदुक्त भवति । सर्वेषु वेदेषु सर्वासु शाखास्वग्निहोत्रादीनि विश्वसृजामयन पर्यन्तानि कर्माण्येव तात्पर्येण विधीयन्ते । अतो गार्हस्थ्यमेव श्रेष्ठम् । ऊर्ध्वरेतसा त्वाश्रमास्तद्विरुद्धा [नैव] समाश्रयणीया यदि वेदाः प्रमाणमिति । तथा च गौतम.—'ए[ऐ]काश्रम्यं त्वाचार्य. [र्या.] प्रत्यक्षविधानाद्गार्हस्थ्यस्येति ॥ १६३ ॥

एव गार्हस्थ्य प्रशस्य ते श्मशानानि भेजिर इति निन्दा परिहरति—

**यत्तु श्मशानमुच्यते नानाकर्मणामेषोऽन्ते पुरुष-संस्कारो विधीयते ॥ १६४ ॥**

यत्तु गृहस्थाना श्मशान श्रूयते स एष नानाकर्मणामन्ते पितृमेधाख्यः पुरुषसंस्कारो विधीयते । ननु(तु) पिशाचा भूत्वा श्मशानमेव सेवत(न्त) इति ॥ १६४ ॥

कुत इत्याह—

**ततः परमनन्त्यफलमपरिमित(तं) स्वर्गशब्द्य श्रूयते ॥ १६५ ॥**

तत. परं श्मशानकर्मणोऽनन्तरमनन्त(न्त्यं) अपरिमित(तं) स्वर्गशब्दवाच्य फलं श्रूयते स एष यज्ञायुधो यजमानोऽञ्जसा स्वर्ग्यं लोकं प्राप्नोति । अनन्तस्वर्ग्यमिति दकारश्छान्दस. । उपसर्जनः । अपपाठो वा ॥ १६५ ॥

पुनरेवं गार्हस्थ्यमेव प्रकारान्तरेण स्तौति—

**अथाप्यस्य प्रजातिममृतमाम्नाय आह प्रजामनुप्रजायसे तदु ते मर्त्यामृतमिति ॥ १६६ ॥**

अथापि चास्य गृहस्थस्य प्रजातिं प्रजासंतानममृतममरणमाम्नायो वेद आह । हे मर्त्य मरणधर्मन्प्रजां जायमानामनु त्व प्रजायसे त्वमेव प्रजारूपेण जायसे तदेव ते मरणधर्मणोऽमृतममरणमिति । न त्वं म्रियसे त्वं प्रजारूपेण तिष्ठसीति ॥ १६६ ॥

उपपन्नं चैतदित्याह—

अथापि च स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं देहत्वमेवान्यत् ॥ १६७ ॥

अपि च स एवाय पृथग्विरूढः प्रत्यक्षेणोपलभ्यते । स एव द्विधा भूत इति लक्ष्यते । दृश्यते हि सारूप्य द्वयोर्देहमात्र तु भिन्नदेहत्वमिति । सा(स्वा)र्थिकस्त्व ॥१६७॥

यदि पुत्ररूपेणावस्थानं किमेतावदेव नेत्याह—

ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषाꣳ सांपरायेण कीर्तिः( र्तिं ) स्वर्गं च वर्धयन्ति ॥ १६८ ॥

ते पुत्राः शिष्टेषु चोदितेषु कर्मसु वर्तमानाः पूर्वेषा पितृपितामहादीना सापरायेण परलोकेन संबन्धा( द्धा )ना कीर्तिं वर्धयन्ति । अस्यायं पुत्र एवकर्माऽस्यायं पौत्र इति स्वर्गं च वर्धयन्ति । कीर्तिमता हि स्वर्गवासः श्रूयते ॥ १६८ ॥

एवमपरोऽपरः परेषाम् ॥ १६९ ॥

एवमनेन प्रकारेण । कीर्तिं स्वर्गं च वर्धयन्ति ॥ १६९ ॥

आ भूतसंप्लवात्ते स्वर्गजितः ॥ १७० ॥

भूतसंप्लवो महाप्रलय· । आ तस्मात्ते पुत्रिणः स्वर्गजितो भवन्ति ॥ १७० ॥

पुनः सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे ॥ १७१ ॥

प्रलयानन्तरं सर्गः । तत्र संसारस्य बीजार्थाः प्रजापतयो भवन्तीति भविष्यत्पुराणे श्रूयते ॥ १७१ ॥

अथापि प्रजापतेर्वचनम् ॥ १७२ ॥

अपि च प्रजापतेरपि वाक्यमस्मिन्नर्थे भवति गार्हस्थ्य[ मेव वरिष्ठ ]मिति ॥१७२॥

त्रयीं विद्यां ब्रह्मचर्यं प्रजातिꣳ श्रद्धां तपो यज्ञमनुप्रदानं च एतानि कुर्वते तैरु( रि )त्सह स्मो रजो भूत्वा ध्वꣳसतेऽन्यत्प्रशꣳसन्निति ॥१७३॥

त्रयीं विद्यानां(विद्या) त्रयाणा वेदानामध्ययनम् । ब्रह्मचर्यमष्टाचत्वारिꣳशादित्यादिकम् । प्रजातिं प्रजोत्पादनम् । श्रद्धामास्तिक्यम् । तप उपवासादि । यज्ञमग्निहोत्रादिसोमयागाश्रम् । अनुप्रदानमन्तर्वेदि बहिर्वेदि प्रदानम् । य एतानि कर्माणि कुर्वते तैरुक्तै(रित्तै)रेव सह वयं स्मः । त एवास्माक सहायाः । अन्यदूर्ध्वरेतसामाश्रमादिकं प्रशसन्पुरुषो रजः

पांसुला(भूत्वा) ध्वंसते नश्यति । इतिशब्दो वचनसमाप्त्यर्थः ॥ १७३ ॥

यद्येवं तर्हि शिष्टेषु वर्तमानाः पुत्राः पूर्वेषां सुकीर्तिं स्वर्गं च वर्धयन्ति । य(त)था प्रतिषिद्धेषु वर्तमाना अकीर्तिं नरकं च वर्धयेयुस्तत्राऽऽह—

**तत्र ये पापकृतस्त एव ध्वꣳसन्ति यथा पर्णं वनस्पतेर्न परान्हिꣳसन्ति ॥ १७४ ॥**

तत्र प्रजासंताने ये पापस्य कर्तारस्त एव ध्वंसन्ति । ध्वंसनेऽपि न परान् पित्रादीन् हिंसन्ति कीटादिदूषितं तदेव पतति न वनस्पतिं शाखा वा पातयति तद्वत् ॥ १७४ ॥

**नास्यास्मिँल्लोके कर्मभिः संबन्धो विद्यते तथा परस्मिन्कर्मफलैः ॥ १७५ ॥**

अस्येति सामान्यापेक्षमेकवचनम् । अस्य पित्रादेः पूर्वपुरुषस्यास्मिन्लोके पुत्रकृतैः कर्मभिः संबन्धो न विद्यते । दृष्टान्तो यथा—पुत्रकृतेषु कर्मसु पित्रादेः कर्तृता नास्ति तथा परस्मिँल्लोके कर्मफलैरपि संबन्धो नास्तीत्यर्थः ॥ १७५ ॥

**अथापि प्रजापतेर्ऋषीणामित्ययं सर्गः ॥ १७६ ॥**

प्रजापतेर्हिरण्यगर्भस्य ऋषीणा च मरीच्यादीनामयं सर्गो दैवो हि नि(वि)सर्गान्तः (देवादिस्तिर्यगन्त)। न (ते) चाध्वस्ता एव स्वे स्वे पदे वर्तन्ते । यदि पुत्राः पापकृतः स्वयं ध्वंसमानाः परानपि ध्वं(स)सेयुस्तदेतन्नोपपद्यते । पुण्यकृतः सुखेनाद्यापि वर्तन्त इति ॥ १७६ ॥

अत्रोदाहरणमाह—

**तेषां प्रकृतयः परा ज्वलन्त्य उपलभ्यन्ते ॥ १७७ ॥**

तत्र सर्गे ये पुण्यकृतो वसिष्ठादयः प्रकृतयः शरीराणि परा उत्कृष्टा ज्वलन्त्यो दीप्यमाना उपलभ्यन्ते । दिवि यथा सप्तर्षिमण्डलम् । श्रूयते च—'सुकृता वा एतानि ज्योतीꣳषि यन्नक्षत्राणि' इति । इदमपि प्रमाणं पुत्राणा ध्वंसे पूर्वेषामपि न ध्वंस इति ॥ १७७ ॥

**स्यात्तु कर्मावयवेन तपसा वाकश्चित्ससशरीरोऽन्तवन्तं लोकं जयेद् "दर्स्वर्गं लोकं जयेद्" भिस्वर्गं लोकं जयतीति संकल्पसिद्धिः स्यान्न ततो ज्येष्ठा (ज्येष्ठ्यमा)श्रमाणाम् ॥ १७८ ॥ [ ख० १७ ] ।**

---

१ अवतरणस्थितो ग्रन्थोऽधिक इति भाति

कर्मावयवेन तपसा पूर्वार्जितानां कर्मणा भुक्तशेषेणैकदेशेन तपसा वा तीव्रेण कश्चिदूर्ध्वरेता सह शरीरेणान्तवन्तं लोकं जयेदभिस्वर्गं लोकं जयतीति यत्तस्यासंवेऽपि यच्च संकल्पादेव सिद्धिः स्यादिति तदपि स्यात् । न तु तदाश्रमाणां ज्यैष्ठ्यकारणमिति । 'तदेवमे(मै)काश्रम्यं त्वाचार्य' इत्येव पक्षः स्थापितः । अन्ये मन्यन्ते— सर्व आश्रमा दूषिता अदूषिताश्च भवन्ति । ततश्च तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छतीत्येतदेव स्थितमिति ॥ १७८ । (ख० १७) ।

**व्याख्याताः सर्ववर्णानां साधारणवैशेषिका धर्मा ब्रह्मस्तु विशेषाद्वक्ष्यामः ॥ १७९ ॥**

उक्तवत्म(क्ष्य)माणसंकीर्तनं श्रोत्र(तृ)बुद्धिसमाधानार्थम् । अहिंसासत्यास्तेयादयः सर्ववर्णानां साधारणा धर्माः । अध्ययनादयस्त्रयाणाम् । अध्यय(ध्याप)नादयो ब्राह्मणस्य । युद्धादयः क्षत्रियस्य । कृष्यादयो वैश्यस्य । शुश्रूषा शूद्रस्य । राजाऽभिषिक्तो विवक्षितः । तस्यैव हि वक्ष्यमाणं धर्मजातं संभवति ॥ १७९ ॥

**दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥ १८० ॥**

वेश्म गृहम् । पुरं नगरम् । तदुभयमपि दक्षिणाद्वारं मापयेत् । अ(स्थ)पत्यादिभिः कारयेत् । दक्षिणपार्श्वे द्वारं यस्य तथोक्तम् ॥ १८० ॥

**अन्तरस्यां पुरि वेश्म ॥ १८१ ॥**

सर्वेषामेव पुराणां मध्ये या पूस्तस्यामन्तरस्यां पुरि वेश्म मापयेदात्मनः ॥१८१॥

**तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥ १८२ ॥**

तस्य वेश्मनः पुरस्तादावसथः कारयितव्यः । एत्य वसन्त्यस्मिन्नित्यावसथः । आस्थानमण्डपः । तस्याऽऽमन्त्रणसंज्ञा ॥ १८२ ॥

**दक्षिणेन पुरं दक्षिणोदग्द्वारं सभा कार्या यथोभयं संदृश्येत बहिरन्तरं च ॥ १८३ ॥**

दक्षिणेनेत्येनबन्तम् । पुरमिति 'एनपा द्वितीया'[1] इति द्वितीयान्तम् । पुरस्य दक्षिणतोऽदूरे सभा कार्या । तथा दक्षिणोदग्द्वारं दक्षिणस्यामुत्तरस्यां दिशि द्वारे यस्याः सा तथोक्ता । किमर्थमुभयत्र द्वारमिति चेत्, यद्बहिर्वृत्तं यच्चाभ्यन्तरवृत्तं तदुभयमपि यथा संदृश्येतेति । किमर्थमिति ॥ १८३ ॥

**सर्वत्रैवाजस्रा अग्नयः स्युः ॥ १८४ ॥**

---

1 (पा० सू० २ । ३ । ३१) ।

वेश्मन्यावसथे सभायामित्येतेषु सर्वेष्वेवावस्थानेषु लौकिकाग्नयोऽजस्राग्नयः स्यु रविच्छेदेन धार्याः ॥ १८४ ॥

**अग्निपूजा च नित्या यथा गृहमेधे ॥ १८५ ॥**

तेष्वेवाग्निषु नित्यमग्निपूजा कार्या । यथा गृहमेध औपासने सायंप्रातर्होम इत्यर्थः । मन्त्रान( व )पि ताने( वे )व द्रव्यमपि तदेव ॥ १८९ ॥

**आवसथे श्रोत्रियावराध्यर्यानतिथीन्वासयेत् ॥ १८६ ॥**

आवसथाख्ये स्थ नेऽतिथीन्वासयेत् । ते विशेष्यन्ते श्रोत्रियावराध्र्यानिति । अवर पर्यायोऽवराध्यशब्दः । यदि सर्वान्वासयितुं न शक्नोति श्रोत्रियानपि तावद्वासये दिति ॥ १८६ ॥

**तेषां पूजा श्रेयस्यात्मनः कार्या ॥ १८७ ॥**

आत्मनो यत्क्रियते ततोऽपि श्रेष्ठा पूजा कार्याऽतिथीनाम् । तेभ्यो या पूजा साऽऽत्मकार्यादपि श्रेष्ठाऽऽवश्यकी ॥ १८७ ॥

**तेभ्यो यथागुणमावसथमन्नपानं च विदेयम् ॥ १८८ ॥**

तेषामतिथीना यथागुणं विद्यावृत्ताद्यनुगुणमावसथादि विदेय विशेषेण देयम् । आवसथं पाकार्थं (अपव)करकादय ( दि )। अन्नमोदनादि । पानं तक्रादि ॥ १८८ ॥

**सर्वाणीतश्च स्याद्गुरूनमात्यांश्च नातिजीवेत् ॥ १८९ ॥**

गुरवः पित्रादयः । अमात्या मन्त्रिणः । तान्नातिजीवेत् । भक्ष्यभोज्याच्छादनादिषु तान्नातिशयीत ॥ १८९ ॥

**न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वाऽवसीदेदभावात्कश्चित् ॥ १९० ॥**

अस्य राज्ञो विषये क्षुत्राऽऽहाराभावेन बुभुक्षया । रोगेण व्याधिना । हिमेन नीहारेण । वर्षादीनामप्युपलक्षणमेतत् । आतप आदित्यरश्मितापः । एतैः प्रकारैरभावादबुद्धिपूर्वं वा नकारैर्न कश्चिद्ब( द्बा )ह्मणोऽवसीदेदवसन्नो न स्यात् । राज्ञोऽप्ययमपराधो यथाऽऽहाराद्यभावेन कश्चिदवसन्नः स्यात् । आपस्तम्बे विशेष.— ' बुद्धिपूर्वं वा कश्चित् '। तस्यार्थः— बुद्धिपूर्वं वेत्यत्रोदाहरणम् । यदा कश्चित्वरण मृण ]वा दाप्यो भवति तदा नासौ हिमातपयोरुपवेशयितव्यः । भोजनादिवि( द्वा नि )रोधय ( द्ध यः ) । तथा कुर्वाणो( णं )राजा दण्डयेदिति ॥ १९० ॥

**सभायां मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवप ( पे )द्यथार्थान्युग्मान्वैभीतकान् ॥ १९१ ॥**

पूर्वोक्तायाः सभाया मध्येऽधिदेवनं यस्योपरि कितवा अक्षैर्दीव्यन्ति तत्स्थानमधिदेवनम् । तत्पूर्वं काष्ठादिनोद्धन्ति । उद्धत्यावोक्षति । अवोक्ष्य तत्राक्षान्युग्मसंख्यान्बिभीतकवृक्षस्य विकारभूतान्यथार्थान्यावद्भिर्द्यूतं निर्वर्तते तावतो निवपति । यः क[ कः, य ]स्तत्र नियुक्तः । स हि तन्नामा ॥ १९१ ॥

आर्या विशुचयः सत्यशीला दीवितारः स्युः ॥ १९२ ॥

आर्या द्विजातयः । विशुचयोऽर्थशुद्धाः सत्यशीलाः सत्यवादिनः । एवंभूता एव पुरुषास्तत्र दीवितारो देवितारः स्युः । [ ते ] एवं तत्र देवितुं लभ( न्ते ) इत्यर्थः । तत्र ( ते च ) तत्र देवित्रा ( त्वा )यथापहिता( भाषित )विहितपणं सनि( मि )काय दत्त्वा गच्छेयुः । स च राज्ञे तमायमहरहः प्रतिमास प्रतिसंवत्सरं दद्यात् । स एव स्थानान्तरे दीव्यता( तो ) दण्डयेत् । सभास्थाने च कलहकारान् । तत्र याज्ञवल्क्यः—

गल्छलिक( ग्लहे शतिक) वृद्धेस्तु सभि. क[ भिकः ]ग्चक शतम् ।
गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥
स सम्यक्पालितो दद्याद्राज्ञ( ज्ञे )भाग यथाकृतम् ।
सि(जि)तमुद्रा(द्ग्रा)हयेज्जैत्र(ज्जेत्रे) दद्यात्सत्य(त्य) वदा(चः)
क्षयी(मी) ॥ १९२ ॥

सर्वधर्माणां सर्वधर्मानुष्ठानानि नियमेषु च युक्तः
स्यात् ॥ १९३ ॥

सर्वेषा धर्माणा स्वकर्मानुष्ठानानि नियमेषु च स्वकर्मानुष्ठानं प्रजापालनादि तत्र ये अनि(ये नि)यमा.( मा नी ) अनीतयस्तेषु च युक्त. सावधानः स्याद्भवेत् । अनीतयो न कार्या इत्यर्थः ॥ १९३ ॥

आयुधग्रहणं नृत्यगीतवादित्राणि राजाधीनेभ्योऽन्यत्र
न विद्येरन् ॥ १९४ ॥

आयुधग्रहणादीनि राजाधीनेभ्यो राजायत्ता ये पुरुषास्तेभ्योऽन्यत्र न विद्येरन्न भवेयुः । उत्सवादिष्वन्यत्रापि भवत्याचारः ॥ १९४ ॥

क्षेमकृद्राजा न चास्य विषये ग्रामेऽरण्ये वा
तस्करभयं विद्यते ॥ १९५ ॥

अस्य राज्ञो विषये ग्रामेऽरण्ये च चोरभयं न भवति । स एव राजा क्षेमकृत् क्षेमकरो न त्वन्यः शतं तुभ्यमिति ददानोऽपि ॥ १९९ ॥

**भृत्यानामनुपरोधेन क्षेत्रं वित्तं च ददद्ब्राह्मणेभ्यो यथार्हमनन्ताँल्लोकानभिजयति ॥ १९६ ॥**

भृत्यानामनुपरोधेन भृत्यवर्गस्य यथोपरोधो न भवति तथा ब्राह्मणेभ्यो यथार्हं विद्यावृत्ताद्यनुगुणं क्षेत्रं वित्त च दद्यात् । दददनन्ताँल्लोकानभिजयति ॥ १९६ ॥

**ब्राह्मणस्वान्यपजिहीर्षमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति ॥ १९७ ॥ ( ख० १८)।**

ब्राह्मणस्वानि चोरादिभिरपहृतान्यपजिहीर्षमाणे(णो ब्राह्मणे)भ्य आदा(दाना) यावजित्य ग्रहीतुमिच्छन्नसौ राजा यदि चोरैर्हन्यते तमात्मयूपोऽनन्तदक्षिणो यज्ञ इत्याहुर्धर्मज्ञाः । सग्रामे युद्धयज्ञे तस्याऽऽत्मा यूपस्थानीयः । आत्मेति शरीरमाह । अन्तरा यदि चोरैर्हन्यते तमात्मयूपोऽनन्तदक्षिणो यज्ञ इत्याहु' । आत्मा तु पशु स्थानीय. । प्रत्यानिनीषित द्रव्य दक्षिणा । सूत्रे त यज्ञमित्याहुरिति॥१९७॥ (ख०१८)।

**एतेनान्ये शूरा व्याख्याताः प्रयोजने युध्यमाना-स्तनुत्यजः ॥ १९८ ॥**

अन्ये राजव्यतिरिक्ता अपि यदि शूरा. सन्तो ब्राह्मणस्वापहारामिर्युध्यमानाश्चोरैर्हता-स्तेषामपि तथैव यज्ञकृता फलं पूर्वोक्त भवति । प्रयोजनग्रहणमन्यस्यापि धर्मस्य कार्य-स्योपलक्षणम् । तदेवमपि युध्यमानास्तथैव फलं लभन्ते ॥ १९८ ॥

**ग्रामेषु निगमेषु चाऽऽर्याञ्छुचीन्सत्यशीलान्ध-र्मार्थकुशलान्प्रजागुप्तये निदध्यात् ॥ १९९ ॥**

ग्रामादिषु प्रजासरक्षणार्थमेतादृशान्पुरुषास्त्रैवर्णिकान्स्थापयेदधिकारिणः शुचीन्निर्म-लान्तःकरणान्सत्यवादिनो धर्मज्ञानर्थशास्त्रेष्वपि कुशलान् ॥ १९९ ॥

**तेषां पुरुषास्तथागुणा एव स्युः ॥ २०० ॥**

तेषा नियुक्ताना ये पुरुषास्तेऽपि तथागुणा आर्यादिगुणा एव स्युः ॥ २०० ॥

**सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥ २०१ ॥**

सर्वतः सर्वासु दिक्षु योजनमात्रं नगरं तस्करेभ्यो रक्षणीयम् ॥ २०१ ॥

**क्रोशो ग्रामेभ्यः ॥ २०२ ॥**

ग्रामेभ्यस्तु सर्वासु दिक्षु क्रोशो रक्ष्यः । ग्रामेभ्यः ' यतश्चाध्वकालपरिमाणं तत्र पञ्चमी वक्तव्या ' इति पञ्चमी ॥ २०२ ॥

**तत्र यन्मुष्यते तैस्तत्प्रतिदाप्यम् ॥ २०३ ॥**

तत्र योजनमात्रे क्रोशमात्रे वा यन्मुष्यते चोर्यते ते न(नि)युक्तास्तत्प्रतिदद्युः । राजा तैस्तत्प्रतिदापयेदिति ॥ २०३ ॥

**धर्म्यं१ शुल्कमवहारयेत् ॥ २०४॥**

ग्राहयेदिति । मूलादिषु विशेषस्तेनैवोक्तः–मूलफलपुष्पौषधमकरमिति ॥ २०४ ॥

**अकरः श्रोत्रियः ॥ २०५ ॥**

श्रोत्रियाद्राज्ञा करो न ग्राह्यः ॥ २०५ ॥

**सर्ववर्णानां स्त्रियः ॥ २०६ ॥**

अकरा इति परिणामः ॥ २०६ ॥

**कुमाराश्च प्राग्व्यञ्जनेभ्यः ॥ २०७ ॥**

व्यञ्जनानि श्मश्र्वादीनि । यावत्तानि नोत्पद्यन्ते तावदकराः ॥ २०७ ॥

**ये च विद्यार्थां वसन्ति ॥ २०८ ॥**

विद्यामुद्दिश्य गुरुषु ये वसन्ति तेऽसमाप्तविद्या अप्यकरा. ॥ २०८ ॥

**तपस्विनश्च ये धर्मपराः ॥ २०९ ॥**

धर्मपरा इति किम् । येऽभिचारकमन्त्रसिद्धये तपस्तप्यन्ते तेऽकरा मा भूवन्निति ॥ २०९ ॥

**शूद्रश्च पादावनेक्ता ॥ २१० ॥**

त्रैवर्णिकाना पादावनेजनवृत्तिर्य. स शूद्रोऽप्यकर. ॥ २१० ॥

**अन्धमूकबधिररोगाविष्टाश्च ॥ २११ ॥**

अन्धादयोऽप्यकराः ॥ २११ ॥

**ये व्यर्था द्रव्यपरिग्रहैः ॥ २१२ ॥**

ये परिव्राजकादयो द्रव्यपरिग्रहैर्व्यर्था निष्प्रयोजनाः शास्त्रतो येषा द्रव्यपरिग्रहः प्रतिषिद्धस्तेऽप्यकराः । तथा च वसिष्ठः—अकरः श्रोत्रियो राजा पुमाननाथः प्रव्रजितो बालवृद्धतरुणप्रजा(शा)ता(न्ता) इति ॥ २१२ ॥

**अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन्कुमारीं वा वाचा बाध्यः ॥ २१३ ॥**

यत्र परदारा आवस(आस)ते कुमारीं(री) वा पतिंवरा तत्र युवाऽलंकृतोऽबुद्धिपूर्वमज्ञानादनुप्रविशन्वाचा बाध्य ‘ अत्रा(त्रे)यमास्ते मा(मा) प्रतीक्षत(विश.) ’ इति ॥ २१३ ॥

**बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः ॥ २१४ ॥**

यस्तु जानन्नेव प्रलोभनार्थी दुष्टभावः प्रविशति स दण्ड्यः । द्रव्यानुरूपमपराधानुरूपं च । दुष्टभावग्रहणमाचार्यादिप्रेषितस्य प्रवेशे दण्डो मा भूदिति ॥ २१४ ॥

**संनिपाते वृत्ते शिश्नच्छेदनꣳ सवृषणस्य ॥ २१५ ॥**

संनिपातो मैथुनम् । तस्मिन्वृत्ते शिश्नच्छेदनदण्डः । सवृषणस्येत्युपसर्जनस्यापि शिश्नस्य विशेषणम् । सवृषणस्य शिश्नस्य च्छेदनमिति ॥ २१५ ॥

**कुमार्यां तु स्वान्यादाय वास्यः ॥ २१६ ॥**

कुमार्यां तु संनिपाते वृत्ते सर्वस्वहरणं कृत्वा देशान्निर्वास्यः ॥ २१६ ॥

**अथ राज्ञा भृत्ये ॥ २१७ ॥**

अथ संनिपातात्प्रभृति परदारकुमार्यौ राज्ञा भृत्ये ग्रासाच्छादनेन भर्तव्ये ॥ २१७ ॥

**रक्ष्ये चात ऊर्ध्वं मैथुनात् ॥ २१८ ॥**

अतः प्रथमात्संनिपातादूर्ध्वं मैथुनाच्च रक्ष्ये । यथा पुनर्मैथुनं न चरतस्तथा कार्ये ॥ २१८ ॥

**चरितनिर्वेषं स्वामिभ्योऽवसृजेत् ॥ २१९ ॥**

एवं ते यदि निरुद्धे निर्वेषमुपगच्छतस्तदा स्वामिभ्यस्ते अवसृजेत् । परदारान्भर्त्रे श्वशुराय वा कुमारीं पित्रे भ्रात्रे वा । अनभ्युपगमे तु तस्य प्रायश्चित्त यावज्जीवं निरोधः । २१९ ॥

**चरिते यथापुरं धर्मसंबन्धः ॥ २२० ॥**

चरिते तु निर्वेषे यथापुरं यथापूर्वं धर्मेण संबन्धो भवति , यस्मादेव तस्मादवश्यं प्रायश्चित्तं कारयितव्यम् । यज्ञविवाहादौ न कश्चन दोष इति ॥ २२० ॥

परदारप्रसङ्गादिदमुच्यते—

**न सगोत्रस्थानीयां परेभ्यः समाचक्षीत ॥ २२१ ॥**

योऽनपत्य आत्मनः शक्त्यभावं निश्चित्य क्षेत्रज पुत्रमिच्छन्भार्यां परत्र नियुङ्क्ते मृते वा तस्मिन् तत्पित्रादयः संतानकाङ्क्षिणस्तद्विषयमेतत् । कुलान्तरप्रविष्टा सगोत्रस्थानीया । सा हि पूर्वं पितृगोत्रा सती भर्तृगोत्रधर्मैरभिक्रियते । अतः सा भर्तृपक्षाणा सगोत्रस्थानीया भवति । भर्ता तु साक्षात्सगोत्रा ता सगोत्रस्थानीयां न परेभ्यः(भ्योऽ)पगोत्रेभ्यः समाचक्षीत । इयमनपत्याऽस्यामपत्यमुत्पाद्य[ता]मिति । सगोत्रायैव तु समाचक्षीतेति ॥ २२१ ।

किंच—

कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति ॥ २२२ ॥

कुलाय स्त्री कन्या क्वचिद्देशेषु दीयते । गोत्रे यैः कैश्च(श्चि)द्भ्यनुभूयते । उक्तं च बृहस्पतिना—

अभर्तृकभ्रातृभार्याग्रहणं नातिदूषितम् ।
कुले कन्याप्रदानं च देशेष्वन्येषु दृश्यते ॥ इति ॥ २२२ ॥

तमिमं नियोगं दूषयति—

तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम् ॥ २२३ ॥

केषुचिद्देशेषु यद्यप्येव पूर्वं कृतवन्तस्तथाऽपि तदद्यत्वे विप्रतिषिद्धम् । कुतः । इन्द्रियदौर्बल्यात् । दुर्बलेन्द्रिया ह्यद्यत्वे मनुष्याः । ततश्च शास्त्रव्याजेनापि भर्तृव्यतिक्रमेऽतिप्रसङ्गापत्तिः ॥ २२३ ॥

सगोत्रा(त्र)विषये च यो विशेषः सोऽपि नास्तीत्याह—

अविशिष्टं परत्वं हि पाणेः ॥ २२४ ॥

येन पाणिना पूर्वमग्निसाक्षिकं पाणिर्गृहीतः तस्याः कन्यायाः पाणेरन्यो भवति सगोत्रस्यापि पाणिः । यस्मादेव पाणेः परत्वमविशिष्टं समान तस्मादविशेष इति । अवशिष्टमित्यपपाठः ॥ २२४ ॥

पाणिरन्यो भवति को दोषः—

तद्व्यतिक्रमे पुनरुभयोर्नरकः ॥ २२५ ॥

तस्य पाणेर्व्यतिक्रमे पुनरुभयोर्दम्पत्योर्नरको भवति । पुनरिति प्रसिद्धद्योतको निपातः ॥ २२५ ॥

नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात् ॥ २२६ ॥

योऽय दम्पत्योः परस्परं नियमः स आरम्भणो यस्य स नियमारम्भणः । एवंभूतो योऽभ्युदयः स एव वर्षीयान् । एवमुक्तेन प्रकारेण यदपत्यमारभते तस्मादेवमारम्भणादपत्याद्वर्षीयानिति । अपत्यादिति प्रायेण पठन्ति ॥ २२६ ॥

वाश्य आर्यः शूद्रायाम् ॥ २२७ ॥

आर्यस्त्रैवर्णिकः शूद्रायां परभार्याया प्रसक्तो राज्ञा राष्ट्राद्वाश्यो निर्वास्य ॥२२७॥

वध्यः शूद्र आर्यायाम् ॥ २२८ ॥

शूद्रस्त्वार्यायां त्रैवर्णिकस्त्रिया प्रसक्तो वध्यः । आर्यास्त्रैवर्णिकाः । शूद्रायां परमार्याया प्रसक्ता एतत्र(च)यज (योऽन्तः)पुराधि(दि)ष्वधिकृतो रक्षकः सन् स्वयमेव गच्छति तस्य भवति । अन्यस्य तु पूर्वोक्तं प्रायश्चित्तं शिश्नच्छेदनं द्रष्टव्यम् । तथा च शूद्राधिकारे गौतमः—'आर्यस्त्र्यधिगमने लिङ्गोद्धारः स्वहारश्च गोप्ता चेद्वधोऽधिक.' इति । याज्ञवल्क्येन तु प्रातिलोम्ये[न] गमनमात्रे वध उक्तः । यथाऽन्त्यजात(?) ।

स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यम· ।
प्रातिलोम्ये वधः पुंसा स्त्रीणां नासादिकर्तनम् ॥ इति ।

सोऽनुबध्याभ्या सा(बन्धाभ्यामाद्य)पेक्षो द्रष्टव्यः । तथा 'वाश्य आर्यैः शूद्राणाम्' इत्याचार्यवचनम[1]यनुबध्याभ्या सापेक्षः(क्षम्) । ब्राह्मणादे· क्रमविवाहे वा शूद्रा तद्विषयं वा द्रष्टव्यम् ॥ २२८ ॥

दारं चास्य कर्षयेत् ॥ २२९ ॥

अस्य शूद्रस्य या दारभूता तेन भुक्ता त्रैवर्णिकस्त्री तां च कर्षयेत् । तच्च नियमोपवासैर्या प्रजाता न भवति तद्विषयमेतत् ।

ब्राह्मणक्षत्रियविशा स्त्रियः शूद्रेण संगताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्ते भवेत्तु या(न नेतरा. ॥ इति ॥२२९॥

सवर्णायामन्यपूर्वायाᳶ सकृत्संनिपाते पादः पतति ॥ २३० ॥

अन्यः पूर्वः पतिरस्या अन्यपूर्वा । परमार्या । तस्याः सवर्णायाः सकृद्गमने पादः पतति । पतितस्य द्वादशवार्षिकं प्रायश्चित्तं तस्य तुरीयोऽशस्त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्यमस्य प्रायश्चित्तम् । एतच्च क्षात्रि(श्रोत्रि)यभार्यायामृतुकाले कामतः प्रथमदूषकस्य ब्राह्मणस्य । तत्र गौतमः—द्वे परदारे त्रीणि श्रोत्रियस्य' इति ॥ २३० ॥

एवमभ्यासे पादः पादः ॥ २३१ ॥

एवमभ्यासे प्रत्याभ्यासे पादः पादः पतति ॥ २३१ ॥

चतुर्थे सर्वम् ॥ २३२ ॥

चतुर्थे संनिपाते सर्वमेव पतति । ततश्च पूर्णं द्वादशवार्षिकं कर्तव्यम् । तृतीये नव वर्षाणि । द्वितीये षड् वर्षाणि । एतच्च प्रतिप्रयोगं स्त्रीभेदेन प्रथमदूषकस्य । एकस्यामेव त्वभ्यासे कल्प( ल्प्य )म् । तत्र 'यत्पुंसः परदारेषु तच्चैतां चो( चा )रयेद्व्रतम्' इति स्मरणात् । स्त्रिया अपि प्रतिप्रयोग पादः पतति । तदनुरोधेन कल्प्यम् ॥२३२॥

जिह्वाच्छेदनं शूद्रस्याऽऽर्यं धार्मिकमाक्रोशतः ॥ २३३ ॥

---

१ 'आर्यास्त्रैव॰ इत्यादिः प्रसक्ता.' इत्यन्तो ग्रन्थ. संगत्यभावादधिक इति भाति ।

शूद्रो द्विजातीनामन्यतमं धार्मिकं स्वकर्मस्थं यमाक्रोशति निन्दति विगर्हते तदा तस्य जिह्वा च्छेत्तव्येति । मनुस्तु सामान्येनाऽऽह—

येनाङ्गेनावरो वर्णो ब्राह्मणस्यापराध्नुयात् ।
तदङ्गं तस्य च्छेत्तव्यं तन्मनोरनुशासनम् ॥ इति ।

गौतमस्तु—' शूद्रो द्विजातीनभि सं]धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गमोच्यो येनोपहन्यात् ' इति ॥ २३३ ॥

**ः वाचि पथि शय्यायामासने वेति समीभवतो दण्डताडनम् ॥ २३४ ॥**

यस्तु शूद्रो वागादिष्वार्थै. समी भवति न तु तदर्थभूतं तस्य दण्डेन ताडनं कर्तव्यं स दण्डेन ताडयितव्य इति वाच्यम् । अयमस्य दण्ड· ॥ २३४ ॥

**पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वधः( ध्यः ) ॥ २३५ ॥**

भूम्यादानं परक्षेत्रस्य बलात्स्वीकारः । पुरुषवधादिषु निमित्तेषु शूद्रः सर्वस्वहरणं कृत्वा पश्चाद्वध्यो मारयितव्यः ॥ २३९ ॥

**चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य ॥ २३६ ॥**

एतेषु निमित्तेषु ब्राह्मणस्य चक्षुर्निरोधः कर्तव्यः । पट्टबन्धादिना चक्षुषी निरोद्धव्ये यथा यावज्जीवं न पश्यति । न तूत्पाटयितव्ये । न शारीरो ब्राह्मणस्य दण्डः । ' अक्षतो ब्राह्मणो व्रजेत् ' इत्यादिस्मरणात् । चक्षुनिरोध इति क्वचित्पाठे रेफलोपश्छान्दसः ॥ २१६ ॥

**नियमातिक्रमणमन्यं वा रहसि बोधयेदा समापत्तेः ) ॥ २३७ ॥**

यो वर्णाश्रमप्रयुक्तानि( नि )यमानतिक्र( क्रा )मति तं नियमातिक्रामिणमन्यं वा प्रतिषेधा( षिद्धा )ना कर्तारं रहसि बोधयेत् । तं निगादि( डि )तं निरुध्या(न्ध्या)त् । आ समापत्तेः यावदसौ नियमान्प्रतिपत्स्येत 'प्रतिषिद्धेभ्यो निवर्तिष्ये' इति ब्रूयात्॥२३७॥

**असमापत्तौ वाश्यः ॥ २३८ ॥**

यद्यसौ दीर्घकालं निरुद्धोऽपि न समापद्येत ततो वाश्यो निर्वास्यः ॥ २३८ ॥

**आचार्य ऋत्विक्स्नातकस्तु श्व[ कः श्व ]शुरो राजेति त्राणः स्युरन्यत्र वध्यात् ॥ २३९ ॥ ( ख० १९ ) ।**

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (धर्मसूत्रापरपर्याये) सप्तविंशप्रश्ने पञ्चमः पटलः ॥ ५ ॥

यदि दण्डे प्रवृत्ते राजानं, आचार्यो ब्रूयात् ‘ अहमेनमतः पा[ वा ]रयि[ ष्ये ]ष्यामि मुच्यताम[ य ]मिति ’ ततोऽङ्गदण्डे प्राप्तेऽर्थदण्डः । अर्थदण्डे प्राप्ते ताडनम् । ताडने प्राप्ते धिग्दण्डमिति कृत्वा तद्वशे विसृजेत् । एवमृत्विगिति । स्नातको विद्याव्रताभ्याम् । राजा, अनन्तरादिः सर्वः । एते राज्ञः संमान्याः । अतस्ते दण्डस्य त्राणं स्युः । उक्तेन प्रकारेण रक्षका भवेयुः । नान्यः कश्चित् । तेऽप्यन्यत्र वध्यात् । यस्य वधानुगुणोऽपराधो न तस्याऽऽचार्यादयोऽपि त्राणम् । हन्तव्य एव स इति ॥ २३९ ॥ ( ख० १९ ) ॥

इति सत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्याया महादेवदीक्षितविरचिताया-मुज्ज्वलाया वृत्तौ सप्तविंशप्रश्ने पञ्चमः पटलः ॥ ५ ॥

अथ षष्ठः पटलः ।

**क्षेत्रं परिगृह्योत्थानाभावात्फलाभावे यः समृद्धः स भावि तदपहार्यः ॥ १ ॥**

वैश्यवृत्तिः परक्षेत्रं कृष्यर्थं परिगृह्य यदुत्थानं पतितं कृषिविषयं न कुर्यात्तदभावात्तत्फलं न स्यात्तस्मिन्निमित्ते स कर्षकः समृद्धेरेव तस्मिन्भोगे यद्भावि फलं तदपहार्योऽपहारयितव्यः । राज्ञा क्षेत्रस्वामिने दातव्यः ॥ १ ॥

**अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ॥ २ ॥**

कीनाशः कर्षकः । तस्यावशिनोऽस्वतन्त्रस्य निर्धनस्य कर्मन्यासे स चेत्कृषिकर्म न्यसेद्विच्छिन्द्यात्तस्य दण्डेन ताडनं कर्तव्यं स दण्डेन ताडयितव्यः । अर्थाभावाद् (न्ना)र्थदण्डः । अपर आह—अवशी, अवश्योऽविधेयो यदि क्षेत्रं परिगृह्यावशि (शिन) कीनाशस्य कृषिकर्म न्यसेन्न स्वयं कुर्यात्तदा स परिगृह्यो दण्डेन ताडयितव्य इति । यदि वाऽवशिन इति बहुव्रीहिः यस्य कीनाशस्या(न्य) वशी, स्वतन्त्रः क्षेत्रवान्नास्ति स यदि पूर्वकृष्टस्य क्षेत्रस्य कृषिकर्म न्यसेन्न कुर्यात्तस्य स्याद्दण्डताडनं दण्ड इति राजपुरुषस्य ॥ २ ॥

**तथा पशुपस्य ॥ ३ ॥**

पशुपो गोपालः । तस्यापि कर्मन्यासे पालनस्याकरणेऽस्य दण्डेन ताडनं दण्डः ॥ ३ ॥

अवरोधनं चास्य पशूनाम् ॥ ४ ॥

ये चास्य(स्मै) पशवो रक्षणाय समर्पितास्तेषा चावरोधनमपहरणं कर्तव्यम् । अन्यस्मै गोपाय समर्पणीया इति ॥ ४ ॥

हित्वा व्रजम(मा)शिनः कर्षयेत्पशून्नातिवापे·
यात् ॥ ५ ॥

ये पशून्ये( पातयेत् ) पशवो गोपानियंधो.(तुः)ः व्रज हित्वाऽस्याऽऽविर्भावयितारो भवन्ति तास्तूपकर्षयेद्बलादिना कृशान्कुर्यात् । किंत्वक्षितं तदा राजपुत्रादयो वान तिवाष्टपेतं न्यातिवापवं कुर्यान्न ताडयेत् ॥ ५ ॥

अवरुध्य पशूनां हरणे नाशने वा स्वामिभ्योऽ
वसृजेत् ॥ ६ ॥

यदि पशुपः पशूनवरुध्य पालयितु गृहीत्वा भयस्थानेषु विसृज्योपेक्षया मारये. न्नाशयेद्वा । नाशन चोरादिभिरपहरणम् । तस्मिन्सति स स्वामिभ्यः पशूनवसृजे. त्प्रत्यर्पयेत् । पश्वभावे मूल्यम् ॥ ६ ॥

प्रमादादरण्ये पशूनुत्सृष्टान् ग्राममानीय स्वामि
भ्योऽवसृजेत् ॥ ७ ॥

कः । यस्तत्र रक्षकत्वेन राज्ञा नियुक्त. ॥ ७ ॥

पुनः प्रमादे सकृदवरुध्यत् ॥ ८ ॥

पुनः प्रमादादुत्सृष्टेषु सकृदवरुध्य स्वामिभ्योऽवसृजे त् ॥ ८ ॥

तत ऊर्ध्वं न सूर्क्षेत् ॥ ९ ॥

ततो द्वितीयात्प्रमादादूर्ध्वं ग्राममानीयेत्यादि यदुक्तं तन्न सूर्क्षेत् । न तस्मिन्वि. षय उपेक्षेत ॥ ९ ॥

परपरिग्रहमविद्वानाददान एधोदके मूले फले
पुष्पे गन्धे[1] ग्रासे शाक इति वा[ चा ]
बाध्यः ॥ १० ॥

एधश्चोदकं चैधोदकम् । ग्रासो गवाद्यर्थो यवसादिः । सर्वत्र विषयसप्तमी । यत्प्र. ति(यः परपरि)ग्रहोऽयमित्यविद्वानजानन्नेवो(धो)दकमादत्ते गृह्णाति स तस्मिन्विषये नि. युक्तेन राजपुरुषेण प्लुतया वाचा बाध्यो निवार्यः ॥ १० ॥

---

१ क पुस्तके ' गन्धे ग्रासे ' इति पदद्वयं नास्ति ।

विदुषो वाससः परिमोषणम् ॥११॥

यस्तु विद्वानादत्ते तस्य वाससोऽपहारः कर्तव्यः ॥ ११ ॥

अदण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददानः ॥ १२ ॥

तथा शब्दस्य भोजनमित्यनेन संबन्धः । प्राणसंशयदशाया गन्धोदकादेरादाने कामकृतेऽप्यदण्ड्य । तथा भोजनमप्याददान. प्राणसशये न दण्ड्य इति ॥ १२ ॥

प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनः स्पृशति ॥ १३ ॥

प्राप्तं दण्डनिमित्तं यस्य तस्मिन्पुरुषे दण्डाकर्माणि दण्डस्याक्रियायां यदि दययाऽर्थलाभेन वा प्राप्तं दण्ड न कुर्यात्तदा तदेनो राजानमुपस्पृशति ॥ १३ ॥

ननु शास्त्रफलं प्रयोक्त्रादिगामि। तत्कथमन्यकृतमेनोऽन्यं स्पृशेत् । बहुविधत्वात्कर्तृभावस्येत्याह—

प्रयोजयिताऽनुमन्ता कर्तेति स्वर्गफलेषु कर्मसु भागिनः ॥ १४ ॥

धर्ममधर्मं वा क्रियमाणं यः प्रयुङ्क्ते स प्रयोजयिता। स चानेकप्रकारः। आज्ञापकोऽभ्यर्थितो(र्थयिताऽ)नुग्राहक इति । भृत्यादेर्निकृष्ट[स्य प्रवर्तनाऽऽज्ञा] । गुर्वादेराराध्य[स्य प्रवर्तनाऽभ्यर्थना] । अनुग्राहको(ग्रहो) द्विविध. । उपदेशस्तत्समर्थाचरणं चेति । य इत्थमुपदिशति त्वं शत्रुमिमं व्यापादय धर्मार्जनेऽयं तेऽभ्युपाय इति स उपदेष्टा । यः पुनः पुनः के[न]चिज्जिजया(घा)सितं पलायमानं निरुद्धंति(णद्धि) निरुद्धः सन्हन्यते तत्र निरोद्धा, अनुग्राहक. । यं नामस्य(यस्या)नुपात(मति)मन्तरेण कार्याकार्ये न निर्वर्तेते स राजा धर्माधर्मयोरनुमन्ता । साक्षात्क्रियानिर्वर्तकः । एते त्रयोऽपि स्वर्गफलेषु नरकफलेषु च धर्मेष्वधर्मेषु भागिनः फलस्याशभाजो भवन्ति । सर्वेषा च कथंचित्कर्तृत्वम् ॥ १४ ॥

यद्यप्येवम्—

यो भूय आरभते तस्मिन्फलविशेषः ॥ १५ ॥

तस्मि(तेषु)न्प्रयोजकादिषु यो भूया(यो ऽ)न्यस्य व्यापाराधिक(क्य)मर्थे निवृत्ता उपयुज्यते तस्मिन्फलविशेषो भवति ॥ १५ ॥

कुटुम्बिनौ धनस्येशाते ॥[1] १६ ॥

१ क पुस्तके 'यस्तु भूयान् ' इति भिन्न पाठ ।

कुटुम्बिनौ दम्पती धनस्य परिग्रहे विनियोगे च वै(ईशा)ते । यद्यप्येवं तथाऽपि भर्तुरनुज्ञया विना सा(स्त्री) न वियोक्तुमर्हति । भर्ता तु प्रभवति । तदेतेन वेदितव्यं न हि भर्तुः प्रवासे नैमित्तिके संदाने स्तेयमुपदिशन्ति ॥ १६ ॥

तयोरनुमतेऽन्येऽपि तद्धितेषु वर्तेरन् ॥ १७ ॥

तयोर्दम्पत्योरनुमतेऽ(नु)मतौ सत्यामन्येऽपि पुत्रादयस्तद्धि तयोरैहिकामुष्मिकेषु वर्तेरन् । द्रव्यविनियोगेनापि ॥ १७ ॥

विवादे विद्याभिजनसंपन्ना मेधाविनो धर्मेष्व-
विनिपातिनः ॥ १८ ॥

अर्थिप्रत्यर्थिनोर्विप्रतिषिद्धो वादो विवादः । तत्र वृद्धाः परिणतवयसो मेधाविन ऊहापोहकुशला धर्मेषु वर्णाश्रमयुक्तेषु त्रेधाऽविनिपातिनः । विनिपातः प्रमादस्त-द्रहिताः ॥ १८ ॥

[1]संदेहे लिङ्गतो दैवेनेति विचिन्त्य ॥ १९ ॥

ते वा निर्णयन्तः संदेहस्थलेषु लिङ्गतोऽनुमानेन दैवेन तत्प्रमाणादिना । इतिशब्दः प्रकारे । यच्चान्यदेवं युक्तवचनव्यापादितेन विचिन्त्यार्थिस्थितिमन्विष्य निर्णेतारः स्युरि-त्याहृतेन वाक्यसमाप्तिः ॥ १९ ॥

अथ साक्ष्यविधिः—

पुण्याहे प्रातरग्नाविद्धेऽपामन्ते राजवत्युभतः समाख्या-
नसर्वानुमते मुख्यः सत्यं प्रश्नं ब्रूयात् ॥ २० ॥

पुण्याहो देवनक्षत्रम् । प्रातर्मध्यंदिनादिषु प्रापयेदिद्धेऽग्नाविग्निमिद्ध्वा तत्स-मीपेऽपामन्त उदकुम्भमपि विधाय तत्समीप ईक्ष्य वा जपति । राजाधिष्ठिते सदसि, उभयत उभयोरपि पक्षयोः सत्यवचनेन साक्षिणो यद्भावि फल तत्सत्यं ब्रूयात् । अनृतं त्यक्त्वा स्वर्गमेष्यति । उक्त्वा ततो महाघोर नरक प्रतिपद्यते । इत्यादिना प्रकारेण समाख्या(न्) प्राड्विवाकादिति पृष्ट इति शेषः । अर्थिप्रत्यर्थिनोः सभ्यान चानुमतौ सत्या साक्षिणि उ(गुणैरु)तो दोषैश्च वर्जितः साक्षी प्रशस्त स्पष्टमर्थसत्य यथाऽऽत्मना ज्ञातं तथा ब्रूयात् ॥ २० ॥

अनृते राजा दण्डं प्रणयेत् ॥ २१ ॥

साक्षिणाऽनृतमुक्तमिति प्रतिपन्ने राजा दण्डं प्रणयेत् । अत्र मनुः—

---

१ क. पुस्तके ' संदेहे ' इति नास्ति ।

यस्य दृश्येत सप्ताहात्कूटवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्याव(प्यो दमश्च) सः ॥ इति ॥२१॥

न केवलमसत्यवचने राज्ञा दण्ड्यः किं तर्हि—

**नरकश्चात्राधिकः सांपराये ॥ २२ ॥**

सांपरायः परलोकः । तत्र नरको भवति । तेन—

राज्ञा निधृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ इति ।

अस्याऽऽपद्विषयकत्वम् ॥ २२ ॥

**सत्ये स्वर्गः सर्वभूतप्रशंसा च ॥ २३ ॥**

सत्य उक्ते स्वर्गो भवति । सर्वाणि च भूतान्येन प्रशंसन्ति । अपि देवाः ॥२३॥

**सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च ॥ २४ ॥**

स्त्रीषु शूद्रेषु च या विद्या सा निष्ठा समाप्तिः । न तस्यामप्यधिगतायां कर्म परितिष्ठित इति ॥ २४ ॥

**आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥ २५ ॥ ( ख० २० ) ॥**

**इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे(धर्मसूत्रापरपर्याये)**
**सप्तविंशप्रश्ने षष्ठः पटलः ॥ ६ ॥**

अथर्वणा प्रोक्त आथर्वणस्तस्य वेदस्य शेष इत्युपदिशन्ति । अथर्वणा प्रोक्त आथर्वणस्तस्य वेदस्य शेषोऽय या विद्या स्त्रीषु शूद्रेषु चोपदिशन्ति धर्मज्ञाः ॥ २५ ॥ ( ख० २० ) ॥

इति सत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्यायां महादेवदीक्षितविरचितायामुज्ज्वलायां वृत्तौ सप्तविंशप्रश्ने षष्ठः पटलः ॥ ६ ॥

सप्तविंशः प्रश्नः समाप्तः ।

इति कृच्छ्रा धर्मसमाप्तिः । श्रीकृष्णार्पणमस्तु ।

पुरुषस्य मृतस्याऽऽहुतिर्दहनम् । तस्योभयं प्रयोजनं पारलौकिकफलानुभवयोग्यतापत्तिः कर्मोपयुक्तशरीरप्रतिपत्तिश्चेति वदिष्यत्याचार्यः । पठितानि च सूत्रकारेण यच्छ्मशानमुच्यते, नानाकर्मणामेषामन्ते पुरुषसंस्कारो विधीयते । अतः परमनन्तफलं स्वर्गशब्दं श्रूयत इति तत्रैवं विवेको द्रष्टव्यः ।

खननं दहनं त्याग इति या त्रिविधोच्यते ।
शरीरसंक्रिया ह्यस्य परलोकजयावहा ॥
विधिः श्मशानसंयुक्तो योऽन्यः संचयनादिकः ।
कर्मोपयुक्तदेहस्य प्रतिपत्त्यर्थ एव सः ॥ इति ।

एवमवस्थाविशेषसंयुक्तो मरणसमनन्तरानुष्ठेयः संस्कारो विधीयते । खननं दहनं त्याग इति तावन्मृतस्य परलोकार्थ इष्यते । तेन हि पारलौकिकसुखानुभवयोग्यता भवति । स एष यज्ञायुधी यजमानो ह वै सुवर्गं लोकमेति, इति श्रुतेः । ' मृतस्यापि संस्कारः श्रौत इष्यते । प्रत्येकं पुरुषस्य पावनः, इति च स्मृतिः । अतः परमनन्तफलः स्वर्गशब्दः श्रूयत इति सूत्रकारवचनान्मृतसंस्कारेणामुं लोकम् ' ( बौ० पि० १-१-४ ) इति बौधायनवचनाच्च । तत्र संस्कारतारतम्यात्पारलौकिकसुखानुभवतारतम्यमनुसंधेयम् । अत एव ब्रह्ममेधे—क्रतूनामुत्तमः क्रतुः ( भ० पि० २—१ ) इति वक्ष्यति । ततश्च ब्रह्ममेधे स्वनुष्ठिते कृत्स्नसुकृतानुभवयोग्यताऽन्यत्र तत्तदनुगुणानुष्ठानानां ह्रासः । न चैव सतीतरसुकृतवैयर्थ्यम् । जन्मान्तरेषु तत्फलानुभवसंभवात् ।

ननु मृतसंस्कारेणामुं लोकमित्यत्र मृतसंस्कारशब्दः खननादिरूपसमनन्तरसंस्कारमात्रवचनो न पुनः सर्वपैतृमेधिककर्मवचन इति कुतोऽवसीयते । संचयनादेः पैतृमेधिकस्य कर्मोपयुक्तशरीरप्रतिपत्त्यर्थतावगमात् । तानि कर्माणि तत्तद्धर्मान्वितानामेव विधीयन्ते न पुनः शास्त्राधिकाररहितानामपि । नानुपेतानां कन्यानां वा पितृमेधः । दहनकल्पे न कल्पे(ल्पये)रन्ननुपेतान्कन्याश्चेति शास्त्राधिकाररहितानामन्ते निषेधात् । अथैतेषा कुम्भान्नमिति चानुष्ठितकर्मतारतम्यानुसारेणानुसचयनादिसंस्कारतारतम्यविधानाच्च । तस्मात्खननादेः समनन्तरसंस्कारस्य परलोकजयार्थताऽतः परस्य संचयनादेः कर्मोपयुक्तशरीरप्रतिपत्त्यर्थतेति विवेक उपपन्नः ॥ २ ॥

**आहिताग्नेर्मरणसंशये प्राचीनावीती दहनदेशं जोषयते ॥ ३ ॥**

आहिताग्नेर्यदा रोगादिभिर्हेतुभिर्मरणसंशयः मरणं संभवेत्तदा[तस्य] तद्देशं दहनार्थमवकाशं जोषयते सेवतेऽध्वर्युः ॥ ३ ॥

दक्षिणाप्रत्यक्प्रवणमनिरिणमसुषिरमनूषरमभङ्गुरमनूपहतमविस्रग्धार्यमनुपच्छन्नं प्रवणम् ॥ ४ ॥

कीदृग्गुणविशिष्टं—दक्षिणाप्रत्यक्प्रवणं दक्षिणापरस्या दिशि निम्नत्वातिशययुक्तम्। अनिरिणं यत्र तृणानि नोत्पद्यन्ते तदिरिणम्। ततोऽन्यदनिरिणम्। यत्र मूषककुलीराखुर्कटादिकृतसुषिरं न विद्यते तदसुषिरम्। ऊषा(क्षारमृत्तिका)। नानाकीटकृन्मृद्विशेषास्ते यत्र न विद्यन्ते तदनूषरम्। यत्र शैथिल्यं न विद्यते न च नदीप्रवाहादिर्भेविष्यतीति संभाव्यते तदभङ्गुरम्। यत्पुरुषान्तरदहनचण्डालनिवासादिभिरुपहतं न भवति तदनूपहतम्। यत्र विविधं दारणं प्रदरादिकं न विद्यते विदारणं तदविस्रग्धार्यम्। एवंलक्षणं देशं दहनाय परिगृह्णीयात्। क. पु(नर)त्र परिग्रहीता। यो दहनादिसंस्कारकर्ता श्रूयते स इत्यनुसंधेयः। तत्राऽऽह बौधायनः—अथावशिष्टप्रयोगे मरणसंशये ब्रह्म संस्मृत्य दश दानानि कृत्वोत्क्रान्तिगा दद्यात्।

अत्युत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रान्तिविमुक्तये।
तुभ्यं संप्रददाम्येनां गायत्र्योत्क्रान्तिसंज्ञिताम्॥ इति ॥

अथ पुत्रः पौत्रो दत्तको वा पत्नी दौहित्रो भ्राता तत्पुत्रः पिता स्वकीयः सपिण्डो जामाता वा यथाक्रमं संस्कर्ता पितृमेधेन वा होतृमेधेन वा ब्रह्ममेधेन वा यथाप्राप्तं संस्कुर्यात् ( बौ० शे० पि० १–३) इति। एतेन मात्रादीनां पुत्रादयः पुत्रसंबन्धिनः संस्कर्तार इति सिद्धं भवति ॥ ४ ॥

यस्माद्दक्षिणाप्रतीच्या अपो निःसृत्योदीच्य एत्य महानदीमुपेत्य प्राच्यः संपद्यन्ते ॥ ५ ॥

एतल्लक्षणं पूर्वोक्तेन समुच्चीयते। यस्माद्देशादापो दक्षिणाप्रतीच्यो निःसरन्ति, दाक्षिणाप्रत्यक्प्रवणत्वाद्देशस्य। तास्तथा निःसृत्योदग्गत्वा महानदीमनुप्रविश्य तदुदकेन सह प्राग्गामिन्या(न्यो) भवन्ति, तथाभूतं जोषयते देशम्। महानदीग्रहणं प्राचीनप्रवाहतीरप्रदर्शनार्थम्। तथा बौधायनः—ताः प्रदक्षिणमभिपर्यावृत्य महानदीमुपेत्य प्राच्यः संपद्येरन्निति ॥ ५ ॥

समं वा स(सु)भूमिं बहुलौषधिं वनस्यावनं क्षेत्रस्य(स्या) क्षेत्रीमीरणस्यानिरिणमित्येके ॥ ६ ॥

'समं वा देशं जोषयते' इति 'दक्षिणाप्रत्यक्प्रवणम्' इत्यनेन विकल्प्यते। शोभना भूमिर्यस्य सुभूमिः। एतेन पूर्वोक्तेनानिरिणत्वादिनाऽप्ये(पी)ह समुच्चय उ

अत्र यस्माद्दक्षिणाप्रतीच्य आपो नि.सृत्यौदीच्य एत्येत्यशितमय(यम)शोऽसंभव(वाद्)व्युदस्तः। शेषस्तु संभवात्समुच्चेतव्य.। प्रदक्षिणोदकमिति कल्पान्तरे दर्शनात्। एकदेशविरोध चेतरस्यापि न समुच्चय इत्यपरम्। सम वेति पक्षे बहुलौषधिकमित्यपर लक्षणमधिकम्। बहुलौ(ला ओ)षधयो यस्मात्स बहुलौषधिः' स्पष्टमन्यत् ॥ ६ ॥

यस्मादारात्क्षीरिणो वृक्षाः कण्टकिनश्च ॥ ७ ॥

य(या) औषध्य ए॰(एतल्ल)क्षणं पूर्वस्मिन्नपि पक्षे समुच्चीयते । आरादिति दूरार्थे त्वव्ययम्। यतो देशाद्दूरे क्षीरिणो वटोदुम्बरादयः कण्टकिन. खदिरादयः। चशब्दात्पलाशादयो गृह्यन्त इत्यर्थः ॥ ७ ॥

तदौषधिः (धय·) ॥ ८ ॥

तदौषधयश्च क्षीरण्य. कण्टकिन(न्य)श्चेति शेष.। यस्माद्वा(दा)रात्तथाभूतं दहनदेश जोषयते । एवंभूता ओषधिवनस्पतय· समीपे न सन्ति तं परिगृह्णीयादिति। आश्वलायनस्तु तद्विहितदेशालाभे तेषा समूलोद्धारेण दहनदेशक्लप्तिमाह—'कण्टकि क्षीरिणास्त्विति यथोक्तं पुरस्तात्' ( आश्व० सू० ४-१-१२ ) इति ॥ ८ ॥

तस्मिंस्त्रिर्धोल्लिख्योद्धृ(द्ध)त्यावोक्ष्य गार्हपत्यं मथित्वाऽऽहवनीयं ज्वलन्तमुद्धरति ॥ ९ ॥

तस्मिंस्त्रिर्वोल्लिख्य स्फ्यादिना । यद्वा—अत्र यजमानस्य च मरणसंभावनाया सत्या श्मशाने ग्रामे वा सर्वाग्नीनामजस्रधारण वक्ष्यते । तत्र यदि श्मशाने तत्क्रियते तदा दहनदेशमग्निस्थापनपर्याप्तमुद्धृत्यावोक्ष्य तत्राग्नयस्तावत्स्थापनीयाः। तत्र गार्हपत्यं मथित्वेति भार्याणा श्रौताग्नीनामरणीसमारोपणप्रदर्शनम् । तत्र यजमानात्समारोपणकल्पासंभवात् । व्यवस्थितमेव तत्र गार्हपत्यस्य तदरण्योः समारोपणमुक्तवद्वेदितव्यम् । तथा दक्षिणाग्नेर्मथित्वाऽऽहितस्याऽऽहार्यत्वे त्वाहरणमेव। आहवनीयो यो गतश्रियः समारोप्यो नेतरस्य । सभ्यावसथ्ययोर्नाऽऽहार्यत्व आरोहणं मथित्वाऽऽहितयोस्त्वरणीमात्रनयन न समारोपणम् । अभार्यत्वात् । औपासनस्य तु समारोप्य न प्रत्यक्षनयनमेव। औपासनानेकत्वे सर्वेषामौपासनानामेवं हरणम् । यस्य त्वौपासनो न विद्यते सभ्यावसथ्यौ वा, त्रयोऽप्येते वौपासनस्य तदनुपयोगस्यार्थसिद्धत्वात्तत्कर्माभावोऽत्र द्रष्टव्यः ।

ततो दहनदेशं गत्वा गार्हपत्य तावदुपावरोहणम् । तेन मन्थनविधिना मन्थेत्। आहवनीयं ज्वलन्तमुद्धरतीति वचनमसिद्धरूपाणामग्नीनामाधानक्रमेण मन्थनादुद्धर·

णाद्वा स्वरूपनिष्पादनप्रदर्शनार्थम् । ततश्च मथिते गार्हपत्ये दक्षिणाग्न्याहवनीययोः समारूढयोर्मथनोपावरोहणौ भवत । आहवनीयस्य तूद्धार्यत्वे नि( न )दक्षिणाग्निनिष्प त्त्यनन्तरं गार्हपत्यादुद्धरणम् । ततः सभ्यावसथ्ययोररणी( णि )मतोर्मथनम् । उद्धार्ययोराहवनीयादुद्धरणमिति ॥ ९ ॥

एवं सर्वाग्निषु सिद्धरूपेषु सत्सु तत्स्थापनार्थं वेदिनियमं क्रमनियमं चाऽऽह—

अन्तरा दारुचितेरवकाशꣳ शिष्ट्वाऽग्नीनुपवपति पुरस्तादाहवनीयं पश्चाद्गार्हपत्यं दक्षिणतोऽन्वाहार्यपचनं पुरस्तात्सभ्यावसथ्यावौपासनं च ॥१०॥

अन्तरा मध्ये किमपेक्ष( क्ष्यं ) मध्यमग्न्यपेक्षमिति ब्रूम. । केषामग्नीना मध्यो त्रेताऽग्नीनाम् । कुतः । तथैवोत्तरत्रावगमात् । दारुचितिर्दहनार्थकाष्ठसंघातः । तस्यावकाशमवशिष्याऽग्नीन्निवपेत् । तद्यथा—दारुचित्यवकाशस्य पुरस्तादाहवनीय स्थापयित्वा तस्य पश्चाद्गार्हपत्यम् । एवं दारुचित्यवकाशस्यैवाऽञ्जसा दक्षिणतोऽन्वाहार्यपचनमुपवपति । तदा चैषा त्रयाणामग्नीना मध्यतश्चितेरवकाशः शेष्यत इति गम्यते । पुरस्तात्सभ्यावसथ्याविति पूर्वोक्ताना सर्वेषा पुरस्तादिति वेदितव्य । न तु दारुचित्यवकाशस्य मात्रस्य । कुतः । तेष्वजस्रेषु जुह्वद्वसति, इत्यस्मिन्नेव विहारेऽग्निहोत्रादिकर्मानुष्ठानवचनात्तदनुष्ठानस्याग्न्याधेयकविहारमात्रगोचरत्वात्तत्राग्रेणाऽऽहवनीयम् । तं पूर्वेणातिदेशानियमादेतेन गार्हपत्याहवनीययोर्गार्हपत्यदक्षिणाग्न्योश्च तन्न्यायेनैवान्तरालक्लृप्तिरिति व्याख्यातम् । ततश्चाऽऽहवनीयस्य पुरस्तात्सभ्यः । ततः पुरस्तादावसथ्यः । ततः पुरस्तादौपासनः । समाण्ड इति सिद्धं भवति । एतेषु देशेष्वनेनैवोपदेशक्रमेणाग्नीना स्थापनमिष्यते न तु नित्येन क्रमेण । तथा सत्येतत्क्रमवैयर्थ्यप्रसङ्गादाहवनीयं ज्वलन्तमुद्धरतीत्यस्यापि वैयर्थ्यप्रसङ्गाच्च । दारुचितेरवकाशꣳ शिष्ट्वेत्यनेन मरणपक्ष एव स्थापिता एवाग्नयो दहनार्था भविष्यन्तीति ज्ञायते । ततश्चैते मृतेऽस्मिन्न प्रत्याहृत्य पुनः सह नेतव्या इति सिद्ध भवति ॥ १० ॥

तेष्वजस्रेषु जुह्वद्वसति ॥ ११ ॥

अजस्रवचन धार्याणामधार्यानिवृत्तिनिष्पत्त्यर्थम् । जुह्वदित्यग्निसंधान(साध्या)नां सर्वेषां नित्यनैमित्तिककाम्याना दर्विहोमेष्टिपशूना प्रदर्शनार्थम् ॥ ११ ॥

प्राणा वा एतदाहिताग्नेर्यदग्नयस्त एनꣳ सुसमिद्धाः पालयन्त्यगदो ह भवतीति विज्ञायते ॥ १२ ॥

एते प्राणसंस्तुता अग्नयः समिद्धा अजस्रतया धार्यमाणा एनमाहिताग्निं रोगात्पा-( ल )यन्तु, उत्थापयन्तु । ततश्चागदो नि( नी )रोगी( गो ) भवतीति श्रूयते । तस्मादेतदारोग्यार्थं कृतमजस्रधारणं प्रबलरोगप्रतिघाता( र्थम् ) । मृतेऽस्मिन्प्रसङ्गाद्द-हनार्थमपि भविष्यन्तीत्यनुसधेयम् । आश्वलायनस्त्वग्नीना ग्रामाद्बहिः स्थापनमारो-रोग्यार्थमित्याह—ग्रामकामा अग्नय इत्युदाहरन्त्याशासन्त एन ग्राममाजिगमिषन्तोऽगदं कुर्युरिति ह विज्ञायते ( आश्व० गृ० ४–१–२।३ ) इति । ततश्चैवं दहनदेशेऽजस्र-धारणाद्गुणाधिक्यं द्रष्टव्यम् ॥ १२ ॥

**तस्यैतदग्निहोत्रोच्छेषणं निदधाति ॥ १३ ॥**

तस्य यजमानस्य कृत इत्यर्थः । एतदिति संनिहितसंप्रत्ययादनन्तरपूर्वकालिकपरि-ग्रहः । परिगृहीतस्य जीवनपक्षे मरणपक्षे चोपयोगो वक्ष्यते । तत्र यदा द्वितीयमग्नि-होत्रोच्छेषणमुत्पद्यते तदा पूर्वस्य त्यागोऽर्थसिद्धः । अनन्तरकालिकस्यैवोपयोज्य-त्वात् ॥ १३ ॥

**ग्रामे वाऽस्यैतेन कल्पेन जुहुयात् ॥ १४ ॥**

ग्राममिति पूर्वस्थानाभिधेयम् । एतेन कल्पेनेत्यवार्याणा यथापूर्वमुत्पत्तिरजस्रधार-णम् । औपासनस्याप्यग्न्यागारे पुरस्तान्निवेशोऽनन्तरकालिकाग्निहोत्रोच्छेषण च कथ्यते । अत्रापि जुहुयादिति सर्वनित्यनैमित्तिककाम्यप्रदर्शनम् । अस्मिन्पक्षे नेदानी दहनदेशा-स्योद्धननादि क्रियते । प्रयोजनाभावात् । न च मरणपक्षे मृतेन सह श्मशानं नेष्यमा-णानामग्नीना प्रतिष्ठापनार्थम् । इदानीं तत्कार्यं श्मशाननयनोत्तरकालमेव । तदर्थं वक्ष्य-माणत्वात् । तत्र सूत्रकारस्तु दिवानयनं पूर्वपक्षानयन च वक्ष्यते—'यदि पूर्वपक्षरात्रौ मरण शङ्केत सायमाहुतिं हुत्वा तदैव प्रातराहुतिं जुहुयात् । यद्यपरपक्षे सायंप्रातराहुति भिरेनं पूर्वपक्षं नयेत् । दर्शं च कुर्यात् ' (भ०पि०२-९) इति । तत्रापरपक्षशेषे भाविनीः सायमाहुतीः प्रतिसंख्या यावत्तावत्कृत्वश्चतुरुन्नयनमावर्तयन्सायमग्निहोत्रकल्पेन ताः सायमाहुतीस्तन्त्रेण जुहुयात् । एव भाविनीः प्रातराहुतीः प्रतिसंख्या यावत्तावत्कृत्व-श्चतुरुन्नयनमावर्तयन्प्रातरग्निहोत्रकल्पेन ताः प्रातराहुतीस्तन्त्रेण जुहुयात । ततो दर्शेष्टिं कुर्यात् । तदिति भवेत्तत्प्रधानदेवताभ्यः पूर्णाहु( तिं )नी जुहुयात् । तथा चोक्तं बौधा-यनेन—अथैतदग्निहोत्रं सायमुपक्रमं प्रातरपवर्गमित्याचार्या ब्रुवते । तत्रोदाहरन्ति—स यदि सायं हुतेऽग्निहोत्रे प्रेयात्प्रतिकृष्य प्रातरग्निहोत्र जुहुयात् । अथ यदि प्रातरग्निहोत्रे हुते कुशलम् । अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासंस्थावित्याचार्या ब्रुवते । तत्रोदाहरन्ति—स, यदि पौर्णमास्या वृताया प्रेयात्प्रतिकृष्यामावास्या यजेत । अथ

यद्यमावास्यायां वृत्ताया कुशलम्' ( बौ० पि० १-१-९ ) इति । तत्र प्रेयादिति संभावनाया लिङ् प्रत्ययः । तेन मरणशङ्का स्यादित्यर्थो प्रत्येतव्यः । कुत एवेति चेत्तेनैव स्थलान्तरे—यथैतदाहिताग्नेरनुगच्छन्तः प्रतिकृष्य प्रातरग्निहोत्रं जुहुयात् । प्रतिकृष्यामावस्या यजेतेति । तथैते कर्मणी अभिसंत्वरेद्यथा जीवकृते स्याताामिति । तमर्थमनुमाष्य व्याख्यानात्तथाऽग्निहोत्रस्य दर्शपूर्णमासयोश्च प्रवृत्तप्रयोगसमाप्तेः प्रयोगान्तरस्य चावृत्तत्वाद्वैकल्याभावलक्षण कुशलमनुसंधेयम् । न चात्र प्रवृत्तप्रयोगसमापनवादात्स्थलान्तरोक्तस्य पूर्वपक्षनयनस्य वैकल्पिकत्वं शङ्कनीयम् । अस्य विधेः प्रवृत्तप्रयोगसमापनव्यावृत्त्यर्थतया तन्निवृत्तपरत्वाभावेन विरोधाभावादेवमेव चातुर्मास्यमध्ये मरणशङ्काया कर्मशेषस्य तत्तत्प्रधानाहुतिमात्रस्य वा प्राङ्मरणादनुष्ठानेन प्रवृत्तप्रयोगसमापनीयं वेदितव्यम् । यत्तु बौधायनेनोक्तम्—स चेदहुते प्रातरग्निहोत्रे निष्ठायाममावास्याया प्रेयात्तदानीमेवास्य तूष्णीं प्रातरग्निहोत्रं यादृक्कीदृक्च होतव्यम् । तदानीमेवास्य तूष्णीममावास्या यादृशीं कीदृशीं च यजेत, इति । मरणादूर्ध्वमपि प्रवृत्तप्रयोगशेषभूत(यो.) प्रातरग्निहोत्रहोमामावास्येष्ट्योरनुष्ठेयत्वम् । तदस्माभिरग्राह्यम् । कुतः । यदि पूर्वस्यामाहुत्या हुताया यजमानो म्रियेत । यदि विसंस्थितायामिष्ट्या यजमानो म्रियेत, इति विप्रक्रान्तस्यापि तन्त्रस्य यथाकथंचित्समानवचनेनाप्रक्रान्ततन्त्रादनुष्ठानस्य कैमुतिकन्यायेन निरस्तत्वात्तथा मरणान्ता यज्ञा भवन्तीति सूत्रकारेण सर्वयज्ञाना मरणान्ततावचनाच्च । तेन व्यवस्थितमेतत्प्रवृत्तशेषदर्शेष्टिप्रातर्होमादिमावियत्पूर्वपक्षनयन चैते प्रागेव मरणान्मत इति न्यायात् ॥ १४ ॥

यदि जीवेत्पिबेदग्निहोत्रोच्छेषणम् ॥ १५ ॥

यद्येवं कृते यजमानस्य जीवनं सुनिश्चितं स्याद् व्य(न्ना)यमनेन रोगेण मरिष्यतीति तदा यजमान एवैतदनन्तरपूर्वकालिकमग्निहोत्रोच्छेषणं पिबेत् । अत्र पिबेदिति पयोहोमाभिप्रायं द्रव्यान्तरमपि तत्तत्प्राशनप्रदर्शनार्थम् । तथा श्मशानविहरणपक्षेऽपि (तत्र) तेष्वग्निषु धार्याणा समारोपणमित्यादिना पूर्वोक्तविधिना प्रत्यानयनमजस्रोत्सर्गः प्रतिकृष्यकृताना भाविकर्मणा स्वे स्वे काले पुनरनुष्ठानमिति । गृहविहारपक्षेऽप्यजस्रोत्सर्गादिसमानतन्त्रप्रतिकृष्टाना पुनरनुष्ठानमाह बौधायनः—य उ चेत्पुनरागतस्य पुनरेवास्य प्रातरग्निहोत्रं कार्त्स्न्यं व्यापन्न होतव्यम् । पुनरेवामावास्या कार्त्स्न्यामव्यापन्ना यजेतेति । एतेन पूर्वपक्षनयनाय(ना) प्रतिकृष्टाना सायंप्रातराहुतीना चातुर्मास्यादिशेषाणा च स्वे स्वे काले पुनः पुनः करणं व्याख्यातम् ।

अत्र च सूत्रकारस्त्वग्रे वक्ष्यते—असंशयेऽजस्रैर्विरम्याग्नय आयुष्मते पुरोडाशमष्टा-

कपालं निर्वपेच्छतकृष्णला पञ्च हविषा वा । यो ज्योगामयावीत्युक्तम् (म०पि०२–९) इति ॥ १९ ॥

अथ मरणपक्षे कर्तव्यमाह—

> यदि मरणस४शये ब्रह्मविदाप्नोति परं भृगुर्वै वारुणिरित्येतावनुवाकौ ब्रह्मविदो दक्षिणे कर्णे जपति ॥ इतरस्या आयुषः प्राणं४ संतन्विति ॥ १६ ॥
> यदि प्रैति प्रेतेऽमात्याः प्राचीनावीतिनो केशान् प्रकीर्य पा४सूनावपन्ते ॥ १७ ॥

अत्र मातरि पितर्याचार्य इत्येक इत्यापस्तम्ब. । प्रेते मृते सत्याहिताग्नौ तस्यामात्या ज्ञातय. प्राचीनावीतिनः प्राचीनावीततया विन्यस्तोत्तरीया. केशान्प्रकीर्य विमुक्तबन्धा-न्कृत्वा प्रसार्य पासूनावपेरन् । अस्याग्निदस्य (स्यात्) सपिण्डत्वेऽप्येतत्कर्मणा समुच्चयः। अग्निदव्यतिरिक्तेषु तु सपिण्डेषु, अप्रा‌प्तं प्राचीनावीतिनं(त्वं) विधीयते । तथा साम-याचारिकेष्वातुरव्यञ्जनानि कुर्वीरन्नित्यादिनाऽन्वहं स्नानात्पूर्वं केशप्रसारणादि विधी-यते । इह तु मरणप्रभृति प्राक्स्नानसमयात्तदप्राप्त विधीयत इति द्रष्टव्यम् । अत्रेदम-नुसंधेयम्—

> मृताग्निहोत्रं स्याद्यत्र(च्चेद)त्रोपोषणात्पुरा
> तस्यामिवान्यवत्साया इति होमविधिः समः ॥

यदि मरणोपोषणयोर्मध्येऽग्निहोत्रकाल आगच्छेत्तदा जने प्रमीतस्यैव गृहे प्रमीतस्याऽपि तस्या अन्यवत्सायै पयसाऽग्निहोत्रमित्यादिविधिनाऽग्निहोत्रहोमः कार्यः । तुल्यन्यायत्वात् । यस्य तु प्रागुत्तरादग्निहोत्रकालादुपोषणं भवति । न तस्ये-दानीमग्निहोत्रमस्ति । ननु— तस्यापि सस्थानार्थं कर्तव्यमेवैतत् । तथा हि—अग्निहो-त्रस्थाल्या तृणमङ्क्त्वाऽनुप्रहरति । सा ह्यग्निहोत्रस्य सस्थितिरित्युक्तम् । न चैतत्तृणा-नुप्रहरणं प्रति( प्र )योगं कार्यम् । न बर्हिरनुप्रहरेत् । असꣳस्थितो वा एष यज्ञो यदग्निहोत्रम् । अपि प्रेऽग्निरिति स्थाल्या तृणमङ्क्त्वाऽऽहवनीयेऽनुप्रहरति नवा ( स० श्रौ० ३–७–१९ ) इत्युक्तत्वात् । तस्मात्तस्याऽऽहिताग्नेर्यच्चरमाग्निहोत्रं तत्रैवेदं तृणप्रहरणेन सह संस्थानं युज्यते कर्तुम् । ततो मरणात्पूर्वस्याग्निहोत्रप्रयोगस्य चरमत्वानिश्चयान्मरणोत्तरकाल च जने प्रमीतस्याग्निहोत्रस्यानुज्ञानात् । गृहे प्रमी-तस्य कालेऽप्यनेनैव विधिना तृणानुप्रहरणसंयुक्तमग्निहोत्रमनुष्ठेयमेवेति केचित् ।

तदेतदाकाश्रुतताप्रदानतुल्यं तृणानुप्रहरणस्य विहितप्रतिषिद्धतया षोडशीग्रहणाग्रहणन्यायेन प्रतिप्रयोगविकल्पश्चरमप्रयोगचरमत्वे प्रमाणाभावाच्च । न च संस्थितिवचनमेव तत्र प्रमाणम् । प्रतियोगं संस्थासद्भावेनान्यथोपपत्तेः । विपर्यये दार्शपूर्णिमासिकस्यापि कपालोद्वासनस्य तथात्वप्रसङ्गादिति ॥ १६ ॥ १७ ॥

तं जघनेन गार्हपत्यं दक्षिणाशिरसं दर्भेषु संवेशयन्ति सर्वस्य प्रतिशीवरीति ॥ १८ ॥

तं प्रेतमाहिताग्निं गार्हपत्यस्य पश्चाद्दर्भेषु ' सर्वस्य प्रतिशीवरी० सप्रथाः ' इत्येतदृचा दक्षिणाशिरस शाययति । स्योनास्या इति मन्त्र ऊहः स्त्रिया इत्युपदेशः । दर्भाश्च दक्षिणाग्राः स्तीर्यन्ते । अत्रेदमनुसंधेयम् । पुरुषाहुतिर्ह्यस्य प्रियतमा (भ० पि० १–१–२ ) इति श्रवणात्प्रेतस्य दहन होमसंस्तुतम् । ततो हविरात्मकस्य पुरुषस्यापरेण गार्हपत्यसंवेशनं निर्वापणीयस्थानीय अन्तराऽग्निनिपातन च हविरासादनस्थानीयमिति । तदाऽऽह बौधायन.–अथैनमादायान्तरेण वेद्युत्करौ प्रपा( सा )द्य जघनेन गार्हपत्यमुपसादयन्त्यत्र हविर्निरुप्यत इति । अथैनमादायान्तर्वेदि प्राक्शिरसमासादयन्त्यत्र हविरासद्यते ( बौ० पि० १–१४ ) इति ॥ १८ ॥

सर्वेषु संवेशनेषु दक्षिणाशिराः ॥ १९ ॥

यत्र यत्रास्य सवेशन च व्याचक्षते तत्र तत्रायं दक्षिणाशिराः शाययितव्यः । नान्यतश्चान्ततश्च । दक्षिणाशिरस्त्वमात्रातिदेशात्तेष्वय मन्त्रो भवति ॥ १९ ॥

पूर्वया द्वारोपनिर्हृत्यान्तराऽग्ने(ग्नी) निपात्यान्वारब्धे मृत आहवनीये स्रुवाहुतिं जुहोति परे युवांसमित्येवं गार्हपत्येऽन्वाहार्यपचने सभ्यावसथ्ययोरौपासने च ॥ २० ॥

होमार्थं गार्हपत्यागारस्य पूर्वया द्वारा निर्हृत्यान्तराऽग्नी निपात्य शाययित्वा दक्षिणाशिरसं, अध्वर्युरन्वारब्धे मृत आहवनीये स्रुवाहुतिं जुहोति परेयुवांसमित्येतया दुवस्यते( त इ )त्यन्तः । अविकारेण पत्न्या अपि शवपरत्वान्मन्त्रस्य शब्दान्तरमिति नामधेयम् । औत्पत्तिकत्वात्तदेव सुब्रह्मण्यवत् । एवं गार्हपत्ये संवेशनादि होमान्तम् । तूष्णीमन्वाहार्यपचने हुत्वा ( बौ० पि० १–२–२ ) इति । होमाभाववचनान्न सभ्यावसथ्ययोरौपसने च केचित्कुर्वन्तीति । अपरे त्वन्वाहार्यपचनादिग्रहणात्समन्त्रकहोम औपासनान्तेष्विति व्याचक्षते ॥ २० ॥

अथास्य दक्षिणेन विहारं परिश्रिते प्रेतस्य केशश्मश्रुलोमनखानि वापयित्वा स्नापयित्वा ग्राम्येणालंकृत्य शुक्लसूत्रेणाङ्गुष्ठौ बद्ध्वा नलदमालामाबध्य ॥ २१ ॥ ( ख० १ )।

अथ होमानन्तरमस्य मृतस्य दक्षिणेन विहारं परिश्रिते कटादिभिः परिवृत्ते शुचौ देशे दैवेन मानुषेण वा वपनकल्पेन केशादि वापयित्वा न वपनादि कार्यम् । अत्राऽऽपस्तम्बस्तु—आच्छाद्येति । तत्राप्याच्छादनमर्थसिद्धं भवत्येव । नलदो नाम तृणविशेषः। नलान्द्यतीति व्युत्पत्तिः । परं यो विशेषस्तथा शिरस्तो नलदमाला प्रतिमुञ्चय ( बौ० पि० १-२-८ ) इति बौधायनः ॥ २१ ॥ (ख०१) ।

औदुम्बर्यामासन्द्यां कृष्णाजिनं दक्षिणाग्रीवमधरलोमाऽऽस्तीर्य तस्मिन्नेवमुत्तानं निपात्य पत्तोदशेनाहतेन वाससा प्रोर्णोतीदं त्वा वस्त्रमिति ॥ २२ ॥

औदुम्बरीमुदुम्बरदारुमया(यी) आसन्दी, आसनार्था खट्वा । तस्या अशेषाण्यनूच्यानि फलकानि । पादाश्चौदुम्बरमया इत्यर्थः । सा तु रज्जुभिर्युता भवति । न फलकास्तीर्णा । रज्जुरपकृष्येत्युत्तरत्रानुवादात् । मौञ्जीभिरेव रज्जुभिरित्यन्ये । अन्यत्र साहचर्यदर्शनात् । सा त्वनसा वाहनपक्षेऽपि भवत्येवानस्याधापनेयत्वात् । कृष्णाजिनमन्यत्रानिष्टिर(म)भिप्रेतमैषिकस्यावघातादावुपयोज्यत्वात् । तस्मिन्नेनं प्रेत दक्षिणाशिरसमुत्तानं शाययेत् । पत्तः पादप्रदेशे दशावसनसमाविदेशो यस्य वाससः तत्पादतो(त्पत्तो)दशम् । अहतमपीडितम् । पीडा तु नि(वि)वसनेन का(र्ये)रुकर्मणा वा भवति । तदुभयं यस्य नास्ति तदहतम् । इदं त्वा वस्त्र प्रथमं न्वागन्नित्येतावानिह प्रोर्ण(व)मन्त्रः । उत्तरस्यादिनैतिन्यायात् । अत्राऽऽह बौधायनः—औदुम्बरं तल्पं समारोप्याङ्गुष्ठबन्धनं करोति ( बौ० पि० १-४-९ ) इति ॥ २२ ॥

अथास्यै(स्ये)तरदपादत्तेऽपैतदूहेति ॥ २३ ॥

अस्य मृतस्येतरत्पूर्वाच्छादितं वस्त्रमध्वर्युरपैतदूह यदिहेत्यादिना विबन्धुष्वित्यन्तः ॥ २३ ॥

तत्पुत्रो भ्राता वाऽन्यो वा प्रत्यासन्नबन्धुः ॥ २४ ॥

तदपात्तं वासः प्रेतस्य पुत्रो भ्राता वाऽन्यो वा ब्राह्मण इति । पूर्वाभावे परः पर इति न्यायो प्रत्येतव्यः ॥ २४ ॥

प्रतीतः परिधायाजरसोवसीताथाप उपस्पृश्य ॥ २५ ॥

• स तु प्रतीत. सन्नदूरेणाभिगम्य परिदधीत । यदा जीर्णतत्परिधानयोग्यं स्यादा त- स्माकालाद्वसीतैव । न ततः पुरा निरसने न च तस्मै दद्यादित्यर्थः ॥ २९ ॥

अपरेणाऽऽहवनीयं प्रतीचीस्तिस्र उलपराजी४(जी)·
स्तीर्त्वा परांपूयावहनानां व्रीहीणामन्वाहार्यपचने
तूष्णीमुपचरितं चरु५ श्रपयति ॥ २६ ॥

आहवनीयात्प्रक्रम्य संततास्तिस्र उलपराजीरा गार्हपत्यात् स्तृणीयात् । उलप- शब्देन परिणता शुष्का दर्भा उच्यन्ते । दर्शपूर्णमासवन्मध्यमा प्रथमं स्तीर्यते । तत उत्तरा । ततो दक्षिणेति तु विशेषः । दक्षिणापवर्गवचनात्परापावपरापूयपराहेति वचनं विवेचननिवृत्त्यर्थम् । तस्मादवघातसौकर्यार्थं तुषापनयनमेवमुपचरितेन तुषवितुषविवेक एवावघातस्तावत् । ऐष्टिके कृष्णाजिन उलूखलं स्थाप्य वितुषी क्रियते तूष्णीम् । दर्शपूर्णम सवदित्य( ति ) वचनात्तथा तूष्णीमुपचरितं चरु१ श्रपयतीति चरुस्थाल्युपद- ध्यात् । अथ श्रपणधर्मादेव तूष्णीका विधीयन्ते । अतो नास्य पात्रे संसूदनादि क्रियते ॥ २६ ॥

गार्हपत्ये च मैत्रावरुणीमामिक्षाम् ॥ २७ ॥

आमिक्षायाश्च तूष्णीमेव श्रपणधर्म. । न च शाखाहरणादि । तत्र तूष्णीं शाखो- पवेषादि कृत्वा तूष्णीं निष्टपनादिविधिना पयःश्रपण कृत्वा लौकिकेन धर्मे[ ण ], आ- मिक्षाकर्म स्यात्तस्य मित्रावरुणदेवत्यत्व तु संकल्पमात्राद्वेदितव्यम् । अत्राप्यामिक्षार्थ एवोपवेषश्च चरुश्रपणेऽप्युपयुज्यते ॥ २७ ॥

यदि सोमयाजी भवति ॥ २८ ॥

गार्हपत्य आमिक्षा श्रपयति यदि बहुयाजी स्यात् ( बौ० पि० १–३–१ ) इति । बौधायनीयेऽप्यसंनयता त्वामिक्षानिवृत्तिर्दृश्यते ॥ २८ ॥

पालाशं काष्ठमग्न्यागारतृणैर्गार्हपत्य आदीप्य
तेनोल्मुकेन प्रथमा गच्छन्त्यजमनुनयन्ति ॥२९॥

गच्छन्तीति बहुवचनादमात्यकृत्यमेवैतद्वेदितव्यम् । उल्मुकमेतदन्वनुस्तरणीमासप चनार्थमेव । अतस्तदुत्सर्गपक्षे तूल्मुकनिवृत्तिर्द्रष्टव्या । न च रक्षोहानार्थमुल्मुक नेतव्यम् ।

---

१ ख. ग °रापावमव° । २ ख, ग, सामान्ययाजी ।

अग्निभिरेव तत्सिद्धेः। न च श्मशानविहरणपक्षे त्वग्निनयनाभावादुल्मुकात्तत्र गार्हपत्याभावेनोल्मुकनिवृत्त्यनुपपत्तेः। श्मशानविहृतैरेवाग्निभि( भी॰ ) रक्षोहननसिद्धेश्च ॥ २९ ॥

राजगवी॰ सव्ये यदि बद्धामग्नीनग्निभाण्डमग्निहोत्रोच्छेषणमिति ॥ ३० ॥

अजमनुनयति राजगवीम्। सव्ये यदि बद्धामग्नीनग्नी वाऽग्निभाण्डमिति। राजगवी गोश्रेष्ठा मांसलत्वादिगुणयुक्ता गौरित्यर्थः। तस्य(स्या) जरत्वाजरत्वादिलक्षणं चान्तरं च वक्ष्यते। सव्ये यदीति पूर्वपादयोः सव्योऽभिप्रेतः। अग्नीनिति वैतानिकास्त्रयः पञ्च वा। अग्निभाण्डमित्यौपासनभाण्डः(ण्डम्)। अनुनयन्त्यत्रापि बहुवचनात्सपिण्डादिकृत्यमेतत् ॥ ३० ॥

येन चान्येनार्थी भवति* ॥ ३१ ॥

अर्थी उपयोगवान् भवत्यग्निदस्तदन्यं सर्वमनुनयति। तच्चरुमाभिक्षापात्राणीत्येवमाद्युपयोगि द्रव्यजातम् ॥ ३१ ॥

न हीनमन्वाहरेयुः ॥ ३२ ॥

तत्र यदि विस्मरणादिना नाशाद्धविर्हरणात्पूर्वमनन्तरं द्रव्यं तदिहाहीनमुच्यते। तच्च शवनिर्हरणात्परं नाऽऽहरेयुः श्मशानं न प्रापयेयुः। प्रतिपात्रादिद्रव्यविषयमेतदिच्छन्ति। इतरेषां चर्वादीनामन्वाहरणमेव कार्यम्। अन्यथा तदर्थलोपप्रसङ्गात् ॥ ३२ ॥

अथैतमाददते ॥ ३३ ॥

एतं प्रेतमासन्द्यां स्थितं ज्ञातय आददीरन्। अत्राऽऽह बौधायनः—अथैनमेतयाऽऽसन्द्या तल्पेन कटेन वा संवेष्ट्य दासाः प्रवयसो वा वहेयुः, ( बौ॰ पि॰ १-४-९ ) इति ॥ ३३ ॥

अनसा वहन्तीत्येके ॥ ३४ ॥

अनः शकटं तेन वहन्ति वहन्तः प्रेरणादि कुर्वन्तः ॥ ३४ ॥

---

* ख. पुस्तके 'येन चान्येनार्थी भवन्ति' इति नास्ति। ख. ग पुस्तयोश्च 'इत्येतान्यनुहरन्ति' इत्यधिकम्।

---

१ ग भवन्ति। २ क 'दत्ते।

तत्रानया सहाऽऽसन्द्या शकटमारोप्य तत्र शाखान्तरीयं विधिविशेषमाह —

**कृष्णगव\ स्यादिति शाट्यायनकम् ॥ ३५ ॥**

तदनः कृष्णगव कृष्णाभ्यामनडुद्भ्या वाह्यमिति शाट्यायनिब्राह्मणं भवति । अतो विकल्पो वर्णनीय इति । पूर्व. कल्पः ॥ ३५ ॥

पुनरप्यनुवहनपक्षे विशेषमाह—

**इमौ युनज्मीत्येष योजन आम्नातः ॥ ३६ ॥**

गच्छतादिति मन्त्रान्तः । इमौ युनज्मीत्यनुष्टुभात्मक एष मन्त्रो वाहनयोजनकरणतयाऽऽम्नातः । तेन सकृदुक्तेन युगपदुभौ वाहौ युग[मु]पश्लेष्य यथायोग(ग्यं) युञ्जतीत्यर्थः । अत्राऽऽह बौधायन.–अनश्चेद्युञ्ज्या(ञ्ज्या)त् (बौ० पि० १–४–७) इति । अतः पुरुषवाहत्वेऽस्यानुपयोगः ॥ ३६ ॥

**आदीयमानमनुमन्त्रयते पूषा त्वेतश्चावयत्विति ॥ ३७ ॥**

सुविदत्रेभ्य इत्यन्त. । आदीयमानवचनमनसा वहनस्याप्रदर्शनम् । ततश्च पुरुषैरादीयमानमनसा वा प्रोह्यमाणम्—पूषा त्वेतश्चा(श्च्या)वयत्वेतयर्चाऽग्निदोऽनुमन्त्रयते । तत्राग्निदस्य सपिण्डत्वेऽप्यनुमन्त्रयितृत्वमेव न त्वन्यनेतृत्वमपीति द्रष्टव्यम् ॥ ३७ ॥

**तुरीयमध्वनो गत्वा निधाय दक्षिणतो लोष्टानवरुज्य तेषु चरुं प्रतिष्ठाप्यैकवाससो दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्विस्रस्य दक्षिणानूरूनाघ्नाना स्त्रिभिरवधून्वन्तस्त्रिः प्रसव्यं परियन्त्यप नः शोशुचदघमिति ॥ ३८ ॥**

सकुल्याना कृत्यमेतत् । तुरीयमध्वन इत्यतिग्र(गृ)हादिश्मशानपर्यन्तस्याध्वनश्चतुर्थांश उच्यते । शकटपक्षे तस्मिंश्च स्थापनं द्रष्टव्यम् । लोष्टा मृत्खण्डाः । अवरुज्योत्खाय । एकवासस इति । अपवेष्टिताख्यस्य कटिधार्यस्य द्वितीयवाससः प्रोहणमुच्यते । नोत्तरीयस्यापि । तस्य नित्यधार्यत्वनियमात् । सव्या-प्रेतस्येति सिद्धमभाषणं ग्रथननिवृत्तिप्राकट्यार्थम् । आघ्नाना दक्षिणैः पाणिभिस्ता.व(ड)यमानाः सिद्धाः परिधानीयप्रान्तैः प्रेतमभिधून्वन्तस्त्रिः प्रसव्यं प्रेत परियन्ति । सपिण्डा अपनः शोशुचदघमित्यनुकारिभूताया ग्रहणमहोमार्थत्वादत्रात्यन्तप्रदेशतया वक्ष्यमाणः कनिष्ठप्रथमा अनुपूर्वा इतरे स्त्रियोऽग्र इति नियमः प्रतिसंधातव्यम्(व्यः) ॥ ३८ ॥

**सव्यानुद्ग्रथ्य दक्षिणान्विस्रस्य सव्यानूरूनाघ्नाना**

अनभिधून्वन्तास्त्रिः प्रतिपर्यन्त्यप नः शोशुचदघ-
मिति ॥ ३९ ॥

सव्यानुदग्रघ्य दक्षिणानिति पूर्ववत्केशपक्षविशेषणं सव्यैः पाणिभिः वाहनमधून्वना-भावात्तु नात्र कनिष्ठप्रथमत्वादिनियमः। प्रतिपर्यन्ति प्रदक्षिणम्। परियन्तीत्यर्थ.॥३९॥

मेक्षणेन लोष्टेषु चरोस्त्रिः प्रयौति ॥ ४० ॥ ( ख० २ )।

चरोरिति पञ्चमी षष्ठी वा । तत्रापि पुरोडाशस्य चावद्यतीतिवदेकदेशापकर्षः प्रत्येतव्यः। प्रयौति प्रयुत्य पातयतीत्यर्थः। लोष्टेष्विति वचनसामर्थ्यात्। अग्निदकृत्यं स्वेतदेकवचनात् ॥ ४० ॥ ( ख० २ )।

परीत्य परीत्य प्रयौतीत्येके ॥ ४१ ॥

एकैकस्मिन्परिगमनेऽमात्यैः कृतोऽग्निद् एव सकृत्सकृत्प्रयौति । तत्र प्रसव्यपरिगमनस्यैवाय वादः । प्रतिपरीत्येति समानकर्तृकत्वमविवक्षितम्। पूर्वस्मिन्कल्पे भिन्नकर्तृकस्य स्पष्टत्वात्तस्मिन्नंशे वैयर्थ्याभावाच्च । अथवा सपिण्डा भूतपरतया समानकर्तृकत्वोत्पत्तिर्द्रष्टव्या ॥ ४१ ॥

आदीयमानमनुमन्त्रयते पूषे मा आशा इति ॥ ४२ ॥

स्पष्टमेतत् ॥ ४२ ॥

तुरीयमध्वनो गत्वा निधाय पूर्ववत्कृत्वाऽऽदीय-
मानमनुमन्त्रयत आयुर्विश्वायुरिति ॥ ४३ ॥

पूर्ववदिति दक्षिणतो लोष्टानवरुध्यमात्रकृत्यं प्रयाणात्मकमग्निदकृत्यं च यथापूर्वं कृत्वा( ऽथ ) ततोऽग्निदमादीयमानमेतयोर्वाऽनुमन्त्रयत इत्यर्थः ॥ ४३ ॥

तुरीयमध्वनो गत्वा निधाय पूर्ववत्कृत्वा तृतीयेन
सह चरुं प्रक्षुणुयात् ॥ ४४ ॥

तृतीयेन प्रयवणेन सह तृतीयप्रयवणे चरुस्थालीमवाचीनबिलां प्रास्यन्निर्भिन्द्यात्। चरुस्थालीप्रासनेनैव तृतीय चरुप्रयवणं कुर्यादित्यर्थः ॥ ४४ ॥

अथास्य कपालानि सुसंभिन्नानि संभिनत्ति यथै
षूदकं न तिष्ठेत् ॥ ४५ ॥

अस्य चरोश्चरुस्थाल्या इत्यर्थः । यथैषूदकं न तिष्ठेत्तथा कपालानि सुसंभिन्नानि संभिनत्तीत्यर्थः ॥ ४५ ॥

---

१ ख. ग. प्रक्षुणुया° ।

तूष्णीं चतुर्थमादाय गत्वा जघनेन दहनदेशं निधायोदञ्चः समुत्क्रामन्तीत्येषा वै देवमनुष्याणाꣳ शान्ता दिक्तामेवैनाननूत्क्रामयन्तीति विज्ञायते ॥ ४६ ॥

तूष्णीं चतुर्थमादाय जघनेन दहनदेशं गत्वाऽनुमन्त्रयत इत्यर्थ. । परिक्रमणाभावप्राकव्यार्थमग्निदसहिताः सर्वेऽमात्याः परिक्रामन्ति युगपदुत्तरतो गच्छन्ति । एषा वा इत्यर्थवादः प्रशंसार्थः ॥ ४६ ॥

प्रत्येत्य हरिण्या पलाशशाखया शमीशाखया वा श्मशानायतनꣳ संमार्ष्ट्यपेत वीतेति ॥ ४७ ॥

अस्मा इति मन्त्रान्तः । प्रत्येत्य पुनरेत्याग्निदः संमार्ष्टि । हरिणी अशुष्का । अपेत वीतेति पितृमेधपाठतः । श्मशानायतनं दारुचितिपर्यायो दहनदेशः । तत्र श्मशानविहरणपक्षे दारुचित्यवकाशस्थल एवाय संमार्ग इति द्रष्टव्यम् । यथानुक्रमतस्तु प्रयोग इह विहरणान्वयी । अतः पक्षान्तरे विशेषान्ब्रूमः—तत्र निर्वापणदेश आसादनदेशे च प्रेतस्य संवेशनम् । स्रुवाहुतिषु तदन्वारम्भश्चासमवान्निवर्तते । उलपराजिकालेऽध्वर्युः श्मशानायतनं गत्वोलुपराज्याद्यामिक्षान्त कृत्वा चरुं प्रत्याहरेत् । ततोऽप्युलमुकवार्जितं सर्वं पूर्ववत् ॥ ४७ ॥

दक्षिणतः शाखामुदस्य×त्वाऽप उपस्पृश्योद्धत्या वोक्ष्य मध्ये हिरण्यशकलं निधाय तस्मिन्दक्षिणाग्रान्दर्भान्सꣳस्तीर्य तेषु दक्षिणाग्रैर्याज्ञिकैः काष्ठैर्दारुचितिं चित्वाऽग्नीनुपवपति पुरस्तादाहवनीयं पश्चाद्गार्हपत्यं दक्षिणतोऽन्वाहार्यपचनं पुरस्तात्सभ्यावसथ्यावौपासनं च दक्षिणाप्रागग्रैर्दर्भैरग्निं दारुचितिं च परिस्तीर्य दक्षिणतः पश्चाद्वा दर्भान्सꣳस्तीर्य चितेर्दक्षिणतो दक्षिणाप्राञ्चयेकैकशः पात्राणि प्रयुनक्ति ॥ ४८ ॥

शाखामुदस्याप उपस्पृश्योद्धत्यावोक्ष्येति प्रहविहरणपक्षार्थवचनम् । इतरत्र प्रागेव कृत-

× अत्राऽऽर्षो ल्यब्भाव ।

१ ग °दञ्चो निष्क्रा° । २ क वा शवाग्° । ३ ख °रग्नीन्प्रेतं दा° । ४ ख ग. °र्य दारुचिते. प° । ५ ख. °र्य तेष्वेकैकश पा° । ग °र्द, तेषु दक्षिणापा° ।

त्वात् । मध्य इति दक्षिणाग्निस्थानस्योत्तरत इत्यभिप्रायः । याज्ञियानि यज्ञियवृक्षावयव-भूतानि शुष्कदारूणि । तैर्दहनपर्याप्तां चितिं चित्वा पूर्ववदग्नीन्स्थापयति । दक्षिणाप्राग-ग्रैश्च प्रसव्यं परिस्तृणीयात् । सर्वानग्नीन्परिस्तीर्य दारुचितिं परिस्तृणाति दक्षिणतो विहारस्य पश्चाद्वा दर्भेषु दक्षिणाग्रेषु पात्राण्येकैकशो न्यञ्चि प्रयुञ्ज्यात् । अत्र विधि-निर्दिष्टानामेव पात्राणां प्रयोग इति द्रष्टव्यम् ॥ ४८ ॥

रज्जूरपकृष्याऽऽसन्दीमपविध्यन्ति ॥ ४९ ॥

रज्जूरित्यासन्दीबन्धनार्था रज्जव उच्यन्ते । ता अपकृष्य फलकसमीपे व्यव-च्छिद्याऽऽसन्दीमपविध्यन्तीत्यर्थः ॥ ४९ ॥

रज्जुषु चैव कृष्णाजिने चोत्तानः शेते ॥ ५० ॥

इह रज्जूनां भूतलसंयोग एव विशेष इत्यर्थः ॥ ५० ॥

एकपवित्रेण प्रोक्षणीः सꣳस्कृत्य मृतं पात्राणि दारुचितिं च प्रोक्ष्याथाऽऽज्यानि गृह्णाति दर्श-पूर्णमासवत्तूष्णीम् ॥ ५१ ॥

एकपवित्रा( त्रं ) पुरस्तात्कृत.( त ) तदभाव इदानीं ( पुनः ) कृत्वा प्रोक्षणीः सस्कृत्य पात्राणि पर्यावृत्त्य सकृत्प्रोक्ष्याथाऽऽज्यग्रहणं दर्शपूर्णमासवत्तूष्णीमिति वच-नाच्चतुरवत्तिनः पञ्चावत्तिनस्तेषां ग्रहणनियमोऽप्यस्ति ॥ ५१ ॥

अग्निहोत्रोच्छेपणमन्येन दध्ना सꣳसृज्य पात्राणि पूरयति यान्यासेचनवन्त्यभ्युक्षतीतराण्यरिक्तता इति विज्ञायते ॥ ५२ ॥ ( ख० ३ ) ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे(पितृमेधापरपर्याये)ऽष्टाविंशप्रश्ने प्रथमः पटलः ॥ १ ॥

अग्निहोत्रोच्छेपणं विहितं पात्रपूरणार्थम् । अभ्युक्षणपर्याप्तेन दध्ना संसृज्य तेनाऽऽसे-चनवन्ति बिलवन्ति च पात्राणि पूरयति । अथेतराणि बिलरहितान्यभ्युक्षति । तदु-भयमरिक्तताऽर्थवादः । अतएव लिङ्गात्तिसृणामरिक्तानां न दध्ना पूरणाभ्युक्षणे कार्ये ।

---

४ ग. °रपाकृ° । ५ ख. °थाऽऽज्यं निर्वपति दर्शपूर्णमासवत्तूष्णीमथा° । ६ ख. °ज्य तेन । ७ ख. °ताया इ° ।

य(दा)था पदार्थनाशे केवलेनाऽऽज्येनाक्ष्णोरञ्जनं कुर्यात् ॥ १२ ॥ ( ख० ३ ) ॥

इति सत्याषाढहिरण्यकेशिपितृमेधव्याख्यायां महादेवशास्त्रिकृतायां प्रयोगवैजयन्त्यामष्टाविंशप्रश्ने प्रथमः पटलः ॥ १ ॥

---

अथ द्वितीय पटल ।

---

**अथैनमुदरे विदार्य निरान्त्रं निष्पुरीषं कृत्वाऽवटे पुरीषमवधायान्त्राणि प्रक्षाल्य प्रत्यवधाय सर्पिषा पूरयतीति शाट्यायनि(न)कम् ॥ १ ॥**

एवमेनमुदरे विदार्य बहिस्तस्यान्त्राणि पुरीषं च निगृह्य पुरीषमवटेऽवधाय सर्पि. षाऽन्त्राण्यभिपूर्य पुनः सीव्येत् । त(त्रा)थाऽऽह बौधायनः—'निष्पुरीष कृत्वाऽद्भिः प्रक्षाल्य सर्पिषाऽन्त्राणि पूरयित्वा दर्भेषु संसी(से)व्यम् ' इति ॥ १ ॥

**अपि वा निष्पुरीषं कुर्यात् । यदि कुर्यात्प्रजा ह्यस्य क्षोधुका भवन्तीति विज्ञायते ॥ २ ॥**

शाट्यायनोक्तप्रकारेण निष्पुरीष्ये कृते तस्य प्रजाः क्षोधुकाः । न निन्दा निन्दितु· मिति न्यायवदिति निन्दार्थवादसहितस्तत्प्रतिषेधः शाखान्तरे श्रूयते । तस्मा द्विदारण न कर्तव्यम् । तथा च विहितप्रतिषेधत्वाद्विकल्पः ॥ २ ॥

**अत्र राजगवि(वी)मुपाकरोति भुवनस्य पत इति । जरतीं मूर्खां तज्जघन्यां कृष्णां कृष्णाक्षीं कृष्ण· वार्हि(लां) कृष्णखुराम् ॥ ३ ॥**

भुवनस्य पत इदᳪ हविरित्येतावान्मन्त्रः । अग्नये रयिमत इत्युत्तरत्र विनियोगात् । जरतीं जीर्णां मूर्खां तज्जघन्या जातां जरत्या मूर्खाया जातेति यावत्कृष्णमिति सिद्धे पुनः कृष्णाक्षीमित्यादि वचनमक्षिबालखुरेषु वर्णान्तरयागनिवृत्त्यर्थम् । ततश्च प्रदेशा· न्तरे वर्णान्तरविहितगौर्न दोषायेति । तस्माद्गोमात्रमिति सिद्ध भवति ॥ ३ ॥

**अपि वाऽक्षिवालखुरामेव कृष्णाᳪ स्यात् ॥ ४ ॥**

आक्षिणि(णी) वालाः खुराश्चाक्षिबालखुरम् । तदेव कृष्णां स्यादित्यनेन कृष्णमि- त्यस्य व्यपोहः । जरत्वादिकं तु समानम् ॥ ४ ॥

---

१ ख. °धाय प्र°।

तां ज्ञातयोऽन्वारभन्ते ॥ ५ ॥

ज्ञातयः सकुल्यास्तामनुस्तरणीमन्वारभन्ते ॥ ५ ॥

अथास्मिंस्तामन्वारम्भणे नियमविशेष वदन्नन्यत्रापि तस्यानुवृत्तिमाह—

अथात्यन्तप्रदेशो धून्वनेऽन्वारम्भणे संगाहने सं-सर्पणे उदकोपस्पर्शन आरोहण इति सर्वत्र कनि-ष्ठप्रथमा अनुपूर्वा इतरे स्त्रियोऽग्रे ॥ ६ ॥

अत्यन्तो य· प्रदेशो विधिरत्यन्तप्रदेशः । नास्ति धून्वनमात्रविषयमनन्तरोक्के विष-येऽन्यत्रापि भवतीत्यर्थ. । अन्वारम्भण विषये त्वनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्याय. प्रवर्तते । धून्वनादि राजगव्यनडुहसंगाहनकर्षणां संसर्पिणा शिखाद्वय-मध्ये नोदकोपस्पर्शनम् । घाता पुनात्विति वक्ष्यमाणत्वात्तेषु कर्मसु कनिष्ठप्रथमाः स्युः । कनिष्ठः सर्वेभ्योऽपरवयस. प्रथमो येषा ते तथोक्ता इतरे तस्मादन्येन कुर्यादनुपूर्वस्तदाऽऽनुपूर्व्यवन्तः स्युः । प्रथमापेक्षया वृद्धः वृद्धतरवृद्धतमा आनुपूर्व्येण स्युरित्यर्थः । त( त्र )था सगाहनमधिकृत्योक्तं बौधायनेन—वीयान्यवीयान्पूर्वः संघा(गा)हत इति स्त्रियोऽग्र इति मृतस्य च कुल्याना च भार्या दृश्यन्ते । तासामपि यथोक्त कनिष्ठप्राथम्यं वेदितव्यम् । बौधायनस्त्वाह—अतोऽस्य भार्या. कनिष्ठप्रथमा इति ॥ ६ ॥

ता घ्नन्त्युत्सृजन्ति वा ॥ ७ ॥

राजगवीं संज्ञपयन्ति सकुलया उत्सृजन्ति वा । अयं विकल्पः पशुबन्धयाजिविषयः । अन्यत्रोत्सर्गनियमस्य तु वक्ष्यमाणत्वात् ॥ ७ ॥

तत्रोत्सर्गे कर्तव्ये विशेषमाह—

यद्युत्सृजन्त्यपश्याम युवतिमाचरन्ती[ मि ]त्येता-भिस्तिसृभिस्त्रिः प्रसव्यं राजगवीमग्निं दारुचितिं च परिणीय ये जीवा इत्यभिमन्त्र्य माता रुद्रा-णामिति द्वाभ्यामुत्सृजन्ति ॥ ८ ॥ ( ख० ४ ) ।

अमात्या इति शेषः । दारुचितिं चेति विस्पष्टार्थम् । प्रमादपतितो वा । अ-त्राऽऽह बौधायन—उत्तरतः प्रतिष्ठमानामनुमन्त्रयते ये जीवा ये मृता इति । माता रुद्राणामित्यृचोत्तरेणोत्सृजन्ति चैतेन यजुषा चेति द्वाभ्यां मन्त्राभ्यामुत्सृजेयुः ॥ ८ ॥ ( ख० ४ ) ।

---

१ ख. धुन्वने । २ क °ण आरोहण उदकोपस्पर्शन इ° ।

यदि घ्नन्ति तत्संप्रेष्यत्यपिधाय मुखं दक्षिणापदीं प्रत्यक्शिरसीं घ्नन्तीति ॥ ९ ॥

संज्ञपनपक्षेऽग्निद एवामात्यात्सं[ न्स ]प्रेष्यति । ते तथा कुर्युः । तत्र प्रत्यक्शिरसीमिति च्छान्दस ईकारः । नान्यत्रैव शास्त्रात् ॥ ९ ॥

निहन्यमानायाः सव्यानि जानून्यनुनिघ्नन्तः पाꣳसूनवमृजन्ति पुरुषस्य सयावरीति ॥ १० ॥

तस्याः सज्ञप( मा )नाया अमात्याः स्वकीयानि सव्यानि जानूनि भूम्यामनुनिघ्नन्तः पांसूनवमृजन्ति । पूर्वयर्चा पाणिभिरपध्वंसयेरन्नित्यर्थः ॥ १० ॥

अथाऽऽह विस्रꣳसय( ते )ति ॥ ११ ॥

अथाग्निदो विस्रंसयते( ति ) अमात्यान्संप्रेष्यति । विस्रंसनमिह प्राणविश्लेषोऽ(योगो)भिप्रेतः । तदभिमन्त्रणे प्राणमसि स्रसमिति लिङ्गात् ॥ ११ ॥

विस्रꣳस्यमानामनुमन्त्रयते पुरुषस्य सयावरी वि ते प्राणमसि स्रसमिति ॥ १२ ॥

विस्रस्यमाना प्राणैर्वियुज्यमानामित्यर्थ. । अत्र वि ते प्राणमिति पादस्य पादो विस्र( स्प )ष्टार्थः । प्रामादिको वा । अत्रैके आयतनवच्चानुमन्त्रणं द्वाभ्यामित्यतिवचनाद्बौधायनीये तथा दर्शनाच्च । द्वाभ्यामृग्भ्यामित्यपरमुत्तरस्माद्द्विनेति न्याय्यात्ताल्लिङ्गत्वाच्चोभयोर्बौधायनीयप्रकारेणैवमित्यस्याश्चात्रोपयोगात् ॥ १२ ॥

[ततः] संप्रेष्यत्यङ्गादङ्गादनस्थिकानि पिशितान्युत्खिद्याप्रक्राथयन्तोऽप्रच्यावयन्त उल्मुकैः श्रपयतात्प्रज्ञातहृदयं निधत्तात्प्रज्ञातौ वृक्या( क्यौ ) प्रज्ञातमेव प्रज्ञातां वपा प्रज्ञातꣳ सपादवालशीर्षचर्मेति ॥ १३ ॥

अमात्यान्प्रति संप्रेषत्येव विशसनार्थम् । तत्र पादपुच्छशिरोव्यतिरिक्तानि सर्वाण्यङ्गाण्युद्भ्रियन्ते । पादादीना चर्मानुषङ्गनियम उद्धृतेषु चाङ्गेषु, अवस्थितमासाशमुत्खिद्य श्रपयितव्य· । अस्थ्यं तस्याज्यम् । हृदयादीनि पञ्च प्रज्ञातानि श्रप्यन्ते । इतराणि मासास्रक्प्रभृतीनि न प्रज्ञातानि स्युः । चर्म तु न श्रपणम् । तत्संयोगान्मासादीनामपि न श्रपणम् । वपाहृदययो. पशुबन्धवच्छ्रपणमिति केचित् ॥ १३ ॥

---

१ क °पदं प्र° । २ ख ग घ्नतेति । ३ ख ग °वसृजन्ते । ४ ख. ग °खिद्यन्तोऽप्र° । ५ ख. ग. °तौ मतस्नो प्रज्ञातं मेद प्र° ।

अत्र पत्नीमुपनिपातयतीयं नारीति ॥ १४ ॥

धेहीत्यन्त. । एतस्मिन्काळेऽग्निद् इय नारी पतिलोकमित्यृचा तस्य पत्नीं ( त्नीं ) तत्समीपे शाययेत् । तत्र तस्यै प्रजामिति जन्मान्तरे प्रजासपत्याशासनम् । अतो नास्मिञ्जन्मनि पुत्राय देवरादिभ्यो पुत्रोत्पादनार्थमिति कल्पनावकाशः । न च जाया-मुपनिपातननिवृत्तिः । न चायं पूर्वसिद्धप्रजान्वयवादः । अत्रायमपुत्रायामपि भवति । पत्न्यभावे तूपवेशनादि सहस्रवरदानान्तं प्रतिषिद्धः( द्धम् ) ॥ १४ ॥

तामविद्ध एकधनेनोत्थापयन्त्यन्यो वा ब्राह्मण उदीर्ष्व नारीति ॥ १५ ॥

तामुपसंविष्टा पत्नीमविद्धः पत्नीसहावसीत तद्भ्राता, एकधनेन हेतुनाऽपि कथितं गृहीत्वा—उदीर्ष्व नारीत्यृचोत्थापयेत् । सबभूवेति मन्त्रातः । ता प्रतिहितः सव्ये ( बौ० पि० १–८–२ ) इति बौधायन. । तद्लाभेऽन्यो वा ब्राह्मण एतेन कल्पेनो-त्थापयेत् ॥ १५ ॥

अत्र पत्नी सहस्रं वरं ददाति ॥ १६ ॥

अत्रोत्थापनानन्तरं सहस्रमूल्य पदं ददाति । सहस्राशक्तौ शक्यपरिमाणं वरं दद्यात् । गौर्वै वर इत्युक्तम् । न तु तल्लोपः । अध्वर्यवे दद्यादित्यनेन सूचितं भवति । पत्न्यनेकत्वे ज्येष्ठक्रमेण सर्वासामुपनिपातनादि क्रमेण क्रियते ॥ १६ ॥

* प्रेतस्य हस्तौ संमार्ष्टि ॥ १७ ॥

प्रेतस्य पाण्य( णी अ )ध्वर्युः संमृज्याद्वक्ष्यमाणकर्मार्थम् ॥ १७ ॥

सुवर्णेन ब्राह्मणस्य सुवर्णꣳ हस्तादिति ॥ १८ ॥

अभिमातीर्जयेमेत्यन्तः । सकृदेव मन्त्रः । अत्रैव त्वमिति मृताभिधानात् । हस्तादि-त्येकवचनान्तं जात्याख्यायाम् ॥ १८ ॥

धनुषा राजन्यस्य धनुर्हस्तादिति ॥ १९ ॥

अभिमातीर्जयेमेत्यन्तः । स्पष्टमेतत् ॥ १९ ॥

मणिना वैश्यस्य मणिꣳ हस्तादिति ॥ २० ॥

मौक्तिकादिसुषिरं सूक्ष्मभूषणं मणिरित्युच्यते ॥ २० ॥

अथैनं चितायुपर्यध्यूहति ॥ २१ ॥

एनं मृतममात्या आरुचितौ रज्ज्वादिरहितमधिनिदध्युः । तत्राऽऽह बौधायनः—

---

* ख पुस्तके ' प्रेतस्य ' इति न विद्यते ।

अथैनमेतयाऽऽसन्द्या सह चितायामवदधाति । अपकृष्य रज्जुमासन्दीमपविध्यान्त ( बौ० पि० १-८-८ ) इति । चितायामवदधातीति वचनादत्रापि दक्षिणाशिरस्त्वं प्रत्येतव्यम् ॥ २१ ॥

**अत्र वा पत्न्या संवेशनादि क्रियते ॥ २२ ॥**

अत्रास्मिन्काले वरदानान्त क्रियते तथा सति सम्प्रैषानन्तरं हस्तसंमार्जनादि क्रियते ॥ २२ ॥

**अथास्य प्राणायतनेषु हिरण्यशल्कान्प्रत्यस्यति ॥ २३ ॥**

अत्रापि पुरुषशीर्षमुपधानवद्य विधिः । शल्काः शकलास्तान् । अत्रापि तदेवाऽऽस्येऽक्ष(क्षि)कल्योः कर्णनाशि(सि)कयोरिति सत्यहिरण्यशकलाः ॥ २३ ॥

**आज्यबिन्दून्वा ॥ २४ ॥**

प्रत्यस्यतीत्यनुकर्षः । तदभाव आज्यबिन्दूनवनयेदिति वैखानसः ॥ २४ ॥

**पात्राणि चिनोति ॥ २५ ॥**

पात्राणि हविर्यज्ञेषूपयुक्तानि स्फ्यकपालादीनि यजमानस्योपरि चिनुयात् । तेषां प्रत्यवयवेषु सादननियमोऽस्ति । अतो नात्र नष्टदुष्टादेरुत्पादनमिष्यते ॥ २५ ॥

**सर्वाण्यनुलोमानि ध्रुवावर्जम् ॥ २६ ॥**

ध्रुवाव्यतिरिक्तानि सर्वाणि पात्राण्यनुलोमान्युदगग्राणि चिनुयात् । ध्रुवाया दाक्षिणाग्रमित्यर्थः । एतच्च मूलाग्रविभागरहितेष्वभवान्न प्रवर्तते ॥ २६ ॥

**तस्य दक्षिणहस्ते स्फ्यं जुहु(हू) च निदधाति ॥ २७ ॥**

जुहूसमाख्या(ख्यानाद्) वसाहोमहवण्यत्रैव विधेया ॥ २७ ॥

**सव्यमुपभृतम् ॥ २८ ॥**

निदधातीत्यनुवर्तते । सव्यहस्त उपभृत निदधाति । पृषदाज्यधान्यप्यत्र निधेया । उपभृतत्वात् ॥ २८ ॥

**उरसि ध्रुवामरणी च ॥ २९ ॥ ( ख० ५ ) ।**

तत्रारण्योरुदगग्रत्वं ध्रुवाया दक्षिणाग्रत्व च वेदितव्यम् ॥ २९ ॥ ( ख०५ ) ।

**मुखेऽग्निहोत्रहवणीम् ॥ ३० ॥**

तत्र पुनर्दहनं करिष्यन्त(न्त)दर्थामग्निहोत्रहवण्य(णीं) चिनुयादिति गम्यते ॥ ३० ॥

**नासिकयोः स्रुवौ ॥ ३१ ॥**

स्रुवावैष्टिकाग्निहोत्रिकौ । यदि (पत्नीसन्नहनार्थमानावपि) स्रुवौ क्लृप्तौ भवतस्तदा तयोरप्यत्रैव निदधातीत्यर्थः ॥ ३१ ॥

अक्ष्णोर्हिरण्यशकलावाज्यस्थालीं पृषदा-
ज्यस्थालीं स्रुचौ वा कर्णयोः प्राशित्रहरणे भित्त्वा ॥ ३२ ॥

प्राशित्रहरणस्यैकत्वाद्भित्त्वा निधानमुच्यते । बौधायनस्यैवमेव पाठः । तस्मादत्र प्राशित्रहरणे [ इति ]द्विवचनपाठः प्रामादिकः ॥ ३२ ॥

हन्वोरुलूखलमुसले ॥ ३३ ॥

हनो(नू) मुखस्योपान्तदेशौ । तयोर्दक्षिणस्यामुलूखलं निदधाति । सव्यायामुसलम् । तदनेकत्वेऽप्यत्रैव निधानम् ॥ ३३ ॥

दत्सु ग्राव्णः ॥ ३४ ॥

दत्सु दन्तेषु ग्राव्णः ॥ ३४ ॥

यदि ग्रावाणो भवन्ति ॥ ३५ ॥

अग्निहोत्रहोमार्थं सोमाभिषवार्थं तथा वल्कं निदधाति । तदभावे न ग्राववचनम् । उपयुक्तपदार्थत्वात् ॥ ३५ ॥

शिरसि कपालानि ॥ ३६ ॥

व्यक्तमेतत् ॥ ३६ ॥

ललाट एककपालम् ॥ ३७ ॥

एकं च तत्कपालं चैककपालम् । यदेकमेकश्रयणादौ द्यावापृथिव्यधिश्रयणार्थं तं नि(तन्नि)दधाति ॥ ३७ ॥

उदरे पिष्टसंयवनीं पात्रीम् ॥ ३८ ॥

उदरे नाभिदेशे निदधातीत्यर्थः ॥ ३८ ॥

नाभ्यामाज्यस्थालीं पृषदाज्यस्थालीं च ॥ ३९ ॥

व्यक्तमेतत् ॥ ३९ ॥

पार्श्वयोः शूर्पे छित्त्वा वैकम् ॥ ४० ॥

शूर्पे इति द्विवचनात्प्रकृतिस्थं चातुर्मास्यादिष्वैषीकस्थं च गृह्यते ॥ ४० ॥

अक्ष्ण(वङ्क्षण)योः सानाय्यकुम्भ्यौ ॥ ४१ ॥

व्यक्तार्थमेतत् ॥ ४१ ॥

अण्डयोर्दृषदुपले ॥ ४२ ॥

अण्डयोर्मुष्कयोर्दृषदुपले निदधातीत्यर्थः ॥ ४२ ॥

---

१ ख. ग. °ज्यस्रुचौ वा । २ ख० भित्त्वैकं ह । ३ ग. °त्त्वा वैकं ह । ४ ख. °यवनीं पा° । ग. वपनीं पा° । ५ ख. त्वैकम् ।

शिश्नेऽश्मानं^१ शम्या च ॥ ४३ ॥

. अश्मानः (श्मा स) समाहननार्थो गम्यते ॥ ४३ ॥

पष्ठ[प्रतिष्ठयोः] अग्निहोत्रस्थालीमन्वाहार्यस्थालीं च ॥ ४४ ॥

प्रतिष्ठे पादतले । अग्निहोत्रस्थालीं दक्षिणतः ॥ ४४ ॥

पत्त उपावहरणीयं कूर्चे वेदम् ॥ ४५ ॥

उपावहरणीयं ह्रियमाणस्याग्निहोत्रस्योपयमनार्थम् ॥ ४९ ॥

. शिखायाः शिरस्त उपसादनीयम् ॥ ४६ ॥

कूर्चे वेदं निदधातीति शेषः । यत्राग्निहोत्रस्योपसादनमुक्तम्—'अपरेणाऽऽहवनीयं दर्भेषु सादयति' इति सगृह्यते ॥ ४६ ॥

इडापात्रं च ॥ ४७ ॥

शिरसि निदधातीत्यन्वयः ॥ ४७ ॥

इममग्ने चमसमिति मध्ये चमसम् ॥ ४८ ॥

मादयन्तामित्यन्तः । चमसोऽत्र प्रणीताप्रणयनं मध्य एतयर्चा निदधातीत्यर्थः । शिरस्तः प्रणीताप्रणयनं चमस निदधाति ( बौ० पि० १–८–११ ) इति बौधायनः । कंसादिभिः प्रणयनेऽप्यत्रैव निधान तत्तूष्णीं निधानवचनात् । मन्त्रस्तु निवर्तते चमसलिङ्गाच ॥ ४८ ॥

अवशिष्टान्यन्तरा सक्थीनि ॥ ४९ ॥

अवशिष्टानि पात्राणि सक्थ्यो(क्थ्नो)र्मध्ये निदध्यात् ॥ ४९ ॥

एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेतेति विज्ञायते ॥ ५० ॥

यज्ञायुधानि यज्ञपात्राणि तद्वान् । एवं चितयज्ञपात्रनिचयोऽञ्जसा ऋजुना पथा च । सेयं पात्रचयनप्रशंसा तदादरार्था न तु फलोपबन्ध. । ततश्च निधानकाले न विस्मर्तव्यानीतिभावः ॥ ५० ॥

उल्मुकैर्व्युष्टान्य(कै वियूष्क)ण्य)वदानानि श्रपयित्वा हृदयेऽस्य हृदयं निदधाति ॥ ५१ ॥

उक्ताना मांसानामुल्मुल्के श्रपणम् । तस्येदानीं विशेषज्ञापनार्थोऽयं वा । पादमयपशुरसः । तद्रहितानि बियूष्काण्यल्प(व)दानान्यपमृ(घृ)तमांसानि । अवदानग्रहण पादादिसहि-

१ ख. ग. °श्ने वृषाखं° ।

तस्य चर्मश्रपणानिवृत्त्यर्थं वियूष्कश्रपणं पशुरसशोषणान्तमुच्यते । हृदयं प्रेतस्य हृदय देशे निदधातीति भावः ॥ ५१ ॥

**दक्षिणहस्ते दक्षिणं वृक्यं सव्ये सव्यं श्यामशबलाभ्यां त्विति ॥ ५२ ॥**

निदधातीत्यन्वयः । तत्र सकृदुक्तेन मन्त्रेणोभौ वृक्यौ हस्ताभ्यां युगपन्निदधाति । प्रेताभिधानात् । वृक्याभिधानादावृत्तिरित्यपरम् ॥ ५२ ॥

**हस्तयोरेव मैत्रावरुणीमामिक्षां मित्रावरुणाभ्यां त्वेति ॥ ५३ ॥**

अत्राभिधानात्पूर्वक्लृप्ति आवृत्तिर्वाऽऽमिक्षाभिधानात् ॥ ५३ ॥

**वपयाऽस्य मुखं प्रोर्णोति मेदसा शिरसं प्रोर्णोति (णुष्व) मेदस' पीवसा चेति (ख० ६) । अथैनं सपादवालशीर्षचर्मणोत्तरलोम्ना प्रोर्णोत्यग्नेर्वर्मेति ॥ ५४ ॥**

व्यक्तम् । मेदसा शिरः—संप्रोर्णुष्व मेदसा पीवसा चेति प्रोर्णोतीति शेषः । मन्त्रस्त्वेतावानेवात्र भवति । लिङ्गात् । ततः कृत्स्नयर्चा प्रोर्णोति । तथा बौधायनपाठात् । तत्र शिरसा शिरःप्रोर्णयन पूर्वपादाभ्यां हस्तयोरपरपादाभ्यां पादयोरिति द्रष्टव्यम् । दधद्विधक्ष्यन्पर्यङ्खयातैरिति मन्त्रान्तः॥ ५४ ॥ ( ख० ६ ) ।

**अथैनमुपोषति मैनमग्ने विदह इति पुरस्तादाहवनीयेन ॥ ५५ ॥**

प्रहिणुतात्पितृभ्य इति मन्त्रान्तः । उपोषणं दहनम् । दारुचितेरेवात्र साक्षादग्निसंयोगः कार्यः ॥ ५५ ॥

**शृतं यदेति पश्चाद्गार्हपत्येन ॥ ५६ ॥**

उपोषतीति शेषः । वशिनीभवातीति मन्त्रान्तः ॥ ५६ ॥

**तूष्णीं दक्षिणतोऽन्वाहार्यपचनेन ॥ ५७ ॥**

उपोषतीत्यनुकर्षः ॥ ५७ ॥

**पुरस्तात्सभ्यावसथ्याभ्यामौपासनेन च ॥ ५८ ॥**

यत्र पावमानीयः प्रक्षिप्तस्ततो दक्षिणतः क्रमेणैषां प्रक्षेपः ॥ ५८ ॥

---

१ ख ग पुस्तकयोः ।

अथैनमुपतिष्ठते सूर्यं ते चक्षुरिति ॥ ५९ ॥

शरीरैरित्यन्तः । क्रमप्राप्ताया ऋच एव ग्रहणम् ॥ ५९ ॥

विज्ञानमुपैति यद्यूर्ध्वं धूम उँदा(दि)याद्द्युलोको भवतीति विज्ञायते । यद्यन्तारिक्षमन्तरिक्षलोकः । यदि पृथिवीं पृथिवीलोकः ॥ ६० ॥

विज्ञान परीक्षण तदुपैति, अनुतिष्ठेत् । धूमगतिवशात्तत्र यद्यन्तारिक्षमिति तिर्यग्गतिर्धूमस्योद्भाव्यते ॥ ६० ॥

जघनेन चितिमजमबलेन शुल्बेन संबध्नाति ॥ ६१ ॥

यत्कर्षणमात्राच्छिद्यते तदिह बलमेकसरा रज्जुः ॥ ६१ ॥

अजोभागमित्युद्र( द्द्र )वन्तमनुमन्त्रयते ॥ ६२ ॥

यत्र लोका इति मन्त्रान्तः । उद्र( द्द्र )वन्त दाहमयाशु( च्छु )ल्बं विच्छिद्य पलायमानमजम्— अजो भाग इत्यनुवाकशेषेणानुमन्त्रयते ॥ ६२ ॥

अत्रैव तद्विश्वमसेन जुहोति—अग्नये रयिमते स्वाहेति ॥ ६३ ॥

तत्र शवाग्नौ तद्विराजगव्यवशिष्टमांसं च जातं चमसेन सकृदेवानेन मन्त्रेण जुहुयात् । चमसोऽत्रैवान्यमु( उ )त्पाद्यत इति भावः ॥ ६३ ॥

नव च स्रुवाहुतीर्य एतस्य पथो गोप्तार इति ॥ ६४ ॥

यमत्र नाधीमस्तस्मै स्वाहेत्यन्तः । पर्णमयेन स्रुवेण ( बौ० पि० १–११–६ ) इति बौधायनः । तेन स्वाहान्तैर्यजुर्भिर्जुहुयात् ॥ ६४ ॥

अत्रोभयं प्रहरति । येन जुहोति ॥ ६५ ॥

येन होमकृतश्चमसेन स्रुवेण ( जुहोति ) तदुभयं चात्राग्नौ प्रहरेत् ॥ ६५ ॥

अपरेणाग्निं प्राङ्मुख उपविश्याथैनं याम्येन सूक्तेन नवर्चेन पराचाऽनुशꣳसति प्रकेतुनेति ॥ ६६ ॥

पराचेति वचनात्प्रथमोत्तमयोर्नाभ्यासः । अनुशंसनवचनादर्धर्चसंतानेऽप्येकश्रुत्यमित्यादिधर्मसिद्धिः । महत्ताꣳश्चिदेवापि गच्छतादित्यन्तः ॥ ६६ ॥

---

१ ख. 'यूर्ध्वो धू' । २ ख. 'विरिक्तसूनुना पात्रिया च' ।

जघनेन दहनदेशमुदीचीस्तिस्रः कर्षूः खात्वाऽश्मभिः सिकताभिश्चावकीर्यायुग्भिरुदकुम्भैरपः परिप्लाव्य तासु ज्ञातयः संगाहन्तेऽश्मन्वतीरेवतीरिति ॥ ६७ ॥ ( ख० ७ ) ।

वाजानुत्तरेमेति मन्त्रान्तः । उदीचीरुदगायताः । कर्षु( र्षू )शब्दो दीर्घगर्तवाची । तासां पूर्वलेखिन्य( खा )न्ते ततो मध्यमा ततः पश्चिमादि( इ )ति क्रमः । सर्वास्ता दक्षिणापवर्गजघन्यन्ते पित्र्यत्वात् । तथा चाऽऽह बौधायन.—जघनेन दहनं तिस्रो दक्षिणाप्राचीः कर्षूः कुर्वन्ति ( बौ० पि० १–११–१३ ) इति । परिप्लावनमुदकनिनयनेन सूत(द)कीकरणम् । तासु ज्ञातयः कनिष्ठप्रथमा इत्यादिनियमात् ॥ ६७ ॥ (ख० ७ ) ।

जघनेन कर्षूः पलाशशाखे शमीशाखे वा निघ्नन्ति ॥ ६८ ॥

दक्षिणोत्तरयोः स्थापयन्ति । तोरणवत्तयोरुत्तरा प्रथमं स्थाप्यते ॥ ६८ ॥

अथैनं(ने) दर्भमयेन शुल्बेन संबध्यन्ते( ते )ऽन्तरेण प्रसर्पन्ति यद्वै देवस्य सवितुः पवित्रमिति ॥ ६९ ॥

सर्वतनुं पुनामीत्यन्तः । अत्रापि कनिष्ठप्रथमा इत्यादिनियमः प्रत्येतव्यः ॥ ६९ ॥

जघन्यः शाखे व्युदस्यति या राष्ट्रात्पन्नादिति ॥ ७० ॥

संसृजाथेत्यन्तः । जघन्यः सर्वे(र्वेषा) पश्चाद्गन्ता । वृद्धामा( त्या ) अनयर्चा शाखे उत्क्षिप्यापास्यन्ति ॥ ७० ॥

उद्वयं तमसस्परीत्यादित्यमुपस्थायानवेक्षमाणा आ( अ ) पोऽवगाहन्ते—धाता पुनातु सविता पुनात्विति ॥ ७१ ॥

आदित्योपस्थानं( नादिक ) सर्वे कुर्वन्ति । न केवलं जघन्यः । अनवेक्षमाणाः पृष्ठतोऽवीक्षमाणा अवगाहन्त इति । सशिरोवमज्जानात्मकं स्नानमुच्यते न जलप्रवेशमात्रम् । समानमास्नानादित्युत्तरत्वानुवादात् । धाता पुनातु सविता पुनात्वित्यनुवाकशेषः । सूर्यस्य वर्चसेत्यन्तः ॥ ७१ ॥

केशान्प्रकीर्य पांसूनोप्यैकवाससो दक्षिणामुखाः सकृदु[1]न्मज्ज्योत्तीर्य सव्यं जान्वाच्य वासः पीड-

---

१ ग, ख. 'दुपम' ।

यित्वोपविशन्त्येवं त्रिस्तत्मत्ययः( य )९ गो+त्रना-
मधेयं तिलमिश्रमुदकं त्रिरुत्सिच्याहरहरञ्जलिनै-
कोत्तरवृद्धिरैकादशाहात् । अप्रतीक्षा ग्राममेत्य
यत्स्त्रिय आहुस्तत्कुर्वन्ति ॥ ७२ ॥

अत्र शास्त्रान्तरोक्तविधि.—यस्मिन्दिने म्रियते तत्रैव दहनं कार्यम् । तत्राऽऽह बृहस्पतिः—प्राप्ते सद्यस्तु पञ्चत्वे हविर्देय हुताशन इति । यस्य तु रात्रौ मरणं तस्य श्वोभूते दहनं कार्यम् । रात्रौ न कुर्यात्तमो(न्धू)वृतोऽपीति निषेधात् । अत एव दाहाद्याहितवह्निरेषु मरणा[द]प्यन्येष्वित्यादिर्विधिविशेषाः प्रवर्तन्ते । यत्र तु दिवा दहनान्तं कर्म समापयितुमशक्यं स्यात्तत्र दिवा कर्मारम्भं कृत्वा रात्रौ समापयेत् । 'यदि स्याद्दिवाऽऽरम्भः शेषं संपादयेन्निशि' इति वचनात् । तद्विषयमेव कात्यायनवचनम्—

रात्रौ दग्ध्वा तु पिण्डान्तं कुर्याद्वपनवर्जितम् ।
श्वोभूते वपनं तत्र केशमात्रं विधीयते ॥ इति ।

दिवा दहने तु दहनस्नानान्ते तदङ्गभूतं केशश्मश्रुमात्रवपनमग्निदो भवति । तथाऽग्निदः कर्ता दाहाङ्गभूते वपने कालान्तराणि च स्मर्यते(न्ते)—

द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः ।
तृतीये पञ्चमे वाऽपि सप्तमे वाऽप्रमादतः । इति भरद्वाजोक्तेः ।

अत्र(त्रा)प्रमादतइत्यनेनाग्निदाननिमित्तत्वमुच्यते । एवमुक्तेषु पञ्चसु कालेषु पूर्वपूर्वस्य भद्रात्रिपादनक्षत्रादियोगदुष्टत्व उत्तरोत्तरकालः परिग्राह्यः । न त्वदुष्टे पूर्वस्मिन्नेव । अत्रापवादः—

स्त्रीपुत्रानुजशिष्याणा संस्कर्ता नैव वापयेत् ॥ इति ।

स्त्रीशब्देनात्र भार्यैव गृह्यते । ज्ञातीना त्वपरवयसामेव वपनमिष्यते । अनुभाविनां च परिवापनमिति वचनात् । तेषां तु शान्तिकर्मान्त एव वपनम् । इह सूत्रकारेणानुपदेशात् । एवमिह वपनं द्विविधम् । दहनाङ्गं शुद्ध्यर्थं चेति । तत्र दहनाङ्गमग्निदस्य वैशेषिकम् । तस्यैव बाह्यकाना शुद्ध्यर्थं तु सर्वसाधारणस्नानाच्छान्तिकर्मान्त एव शुद्ध्यर्थं वपनं कार्यमिति भाष्यकाराभिप्रायः । ततः उदकं पिण्डं च दत्त्वा नग्नप्रच्छादनं विधेयम् । तदाह नारदः—

---

+ 'गोत्रनामधेयम्' इति ग्रन्थ. ख ग पुस्तकयोर्नास्ति ।

---

१ ख ग. 'द्विराद' ।

स्नात्वा दग्ध्वा पुनः स्नात्वा तोय दद्याद्यथोचितम् ।
नग्नप्रच्छादनं दद्याद्भोजनेन सह द्विजः ॥ इति ।

तत्र तोयदानार्थं ग्रामाद्बहिरुदकान्ते कुण्डे पाषाणस्थापनं कार्यम् । उपकपात्रं द्विविधम् । यद्यन्ते वासोदक तिलोदक चेति । तद्दानप्रकारो वक्ष्यते—केशान्प्रकीर्येत्यादि । उपवेशनान्तं त्रिः कृत्वा तत्प्रत्ययमुदकमुत्सेचनीयं तत्प्रत्ययमिति । मृतस्य गोत्रनामनिर्देश जन्यं प्राकट्यमुच्यते । तथा गोत्रनाम गृहीत्वा इत्याश्वलायन. । तद्यथा—वात्स्यायनाय विष्णुरातय इति । अत्र परिधानीयस्यान्तं त्रिगुणं (संभुज्य) प्रसव्यमुपवेष्टचोदग्ये पित्र्थेन तदुदकं त्रिरुत्सिञ्चति । अमुष्यायणायामुष्मै प्रथमेऽहनि तद्वासोदकं ददामीति सकृत्तु गोत्रनामनिर्देशः । अथ(त्र) तिलमिश्रान् त्रीनुदकाञ्जलीन् ददाति । आमुष्यायणायामुष्मै प्रथमेऽहन्येतत्तिलोदकं ददाति । ज्ञातीना तु विधिवत्सामयाचारिकेषु च वक्ष्यते ॥ ७२ ॥

अशनानध्ययनाधःशय्योदकोपस्पर्शनान्यकालमनूचीनेषु द्व्यहं त्र्यहं षडहं द्वादशाहं वा गुरुष्वशनवर्जं संवत्सरं मातरि पितर्याचार्य इत्येके ॥ ७३ ॥ अनशनानध्ययनवर्जं यावज्जीवं प्रेतवत्कृतो(पत्न्यु)देकापस्पर्शनमेके ॥ ७४ ॥ भुक्तमधः शय्या ब्रह्मचर्यं क्षारलवणमधुमांसवर्जनं च ॥ ७५ ॥ ( ख० ८ ) ॥

इति सत्याषाढहिरण्यकेशिश्रौत्रसूत्रे (पितृमेधापरपर्याये)ऽष्टाविंशप्रश्ने द्वितीयः पटलः ॥ २ ॥

अथ(त्र) भार्याया परमगुरुषु च मृतेषु तत्प्रति(सं)बन्धिनामकालभे जनमित्यादिविधिर्भवति । तत्र परमगुरव आचार्याः । आचार्यः पिता । तदग्रजः पितामहः । तद्भ्राता प्रपितामहस्तद्भ्राता । तेषां भार्याश्च विज्ञेयाः । तन्मरणकालात्प्रभृति षष्टिघटिकाकालपर्यन्तमनशनमातुरव्यञ्जनानि गन्धपुष्पताम्बूलवर्जनानि । ततोऽन्वहं तु केशान्प्रकीर्येत्यादिविधिना वासोदकस्य तिलोदकस्य च । ततोऽप्रतीक्षा ग्राममेत्य यत्स्त्रिय आहुस्तत्कुर्वन्ति (म० पि० १–२–७२ ) इत्येतत्तेषामाग्निदस्य च समानम् । इतरे(षां)षु चैतदेवैक उपदेशास्तस्मिन्पक्षेऽन्येषामपि सपिण्डाना मरणेऽयं विधिर्भवति । पक्षान्तरेष्वन्वहं स्नानमेव । तथा समानोदकेष्वपि पक्षद्वयं यावता हि संबन्धो ज्ञायत इति तेषामप्युपादानात् । तेषां तु वाग्रहणसामर्थ्योदुदकोपस्पर्शनमपि पक्षे न भवतीत्यपरम् । असं-

स्कृतेषु बालेषु मृतेषु तन्मातापितृणा चैवोदकस्पर्शनं भवति । ज्ञातीनां चात्र मरण-निमित्त(क)मुदकोपस्पर्शनं न विद्यते। किंत्वाशौचनिवृत्त्यर्थमेव तद्भवति । अथाग्निदस्य( देन ) वासोदकं तिलोदकं चान्वहमेकोत्तरवृद्धिः कार्या । तावद्वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यत इति स्मरणात् । दहनदिवसं तु गृहप्रवेशसमये कर्तव्य-माह बौधायनः—अथाप्रतीक्षाः कनिष्ठप्रथमा ग्राममायान्ति । गृहद्वारे निम्बपत्रं प्राश्याप आचम्य गोशकृत्सुवर्णापोऽग्निगौरसर्षपान्संस्पृश्याश्मनि तिष्ठन्तीत्येके । यत्र च प्रेतस्य प्राणा उत्क्रान्ता भवन्ति तत्रोदकमिश्रांस्तिलतण्डुलान्संप्रकिरन्ति—स्वस्त्यस्तु वो गृहाणामशेषे शिव वास्त्वास्ताम् । इति ज्योतिष्कृत्वाऽगारं प्रविशन्ति । एकरात्रमु-पोष्य तेषामक्षारलवणभोजनमधःशयनं ब्रह्मचर्यं चाऽऽदशरात्रं( त्रात् ) सायंप्रात-स्तूष्णीमुपलेषु पिण्ड निपृणुयात् । सायंप्रातः सकृदुदकक्रिया । अथैषां पत्नी नाश्नी-यात्पक्कान्नस्य । दशमेऽहनि त्रिरुदकमुत्सिञ्चन्ति सर्वेऽमात्याः । अथैकादश्यामेकोद्दिष्टं कुर्वन्ति ( बौ० पि० ३–४—१९ । २४ ) इति ।

अथातो मृतबलिं व्याख्यास्यामः—प्राग्दक्षिणायतनं चतुरश्रं गोमयेनोपलिप्य प्राचीनावीती दक्षिणामुखः सव्यं जानु निपात्य सकृदुल्लिख्याद्भिरभ्युक्ष्य दक्षिणाग्रान्दर्भा-न्संस्तीर्याद्भिर्मार्जयित्वोपस्तरणाभिघारित सकृत्तिलमिश्रं चरुमवद्यति मुष्टिप्रमाणं कुक्कु-टाण्डप्रमाणं वा हस्तेन—' अमुकगोत्रायैतत्ते ओदनः स्वधा नमः इति । अथाङ्गुष्ठे-नाभिमृश्याथाञ्जनाभ्यञ्जने मधु वासो दशोर्णा वा गन्धपुष्पधूपदीपैर्हस्ताद्विपरीतात्सायं-प्रातर्दशरात्रं कृत्वा स्वस्ति ( कामं ) ग्रामं भोजयित्वा दशम्या विकृताहारं सायं बलिं दत्त्वाऽथैकादश्यामेकोद्दिष्टं कुर्वन्ति ।

न जातु श्येनकाकादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपास्तस्य पितरः समायान्तीति वैदिकाः ॥

इति विज्ञायते ( बौ० गृ० शे० सू० ४–३–१ । ३ ) इति ।

अथ नग्नप्रच्छादनम् । तत्र वैखानसः—

वासोऽन्नं च जलं कुम्भे प्रदीप कांस्यभाजनम् ।
नग्नप्रच्छादने श्राद्धे ब्राह्मणाय निवेदयेत् ॥ इति ।

भृगुः—तिलोदकं तथा पिण्डान्नग्नप्रच्छादनादिकम् ।
रात्रौ न कुर्यात्संध्यायां यदि कुर्यान्निरर्थकम् ॥ इति ।

नारदोऽपि—नग्नप्रच्छादनं कार्यं भोजनेन सह द्विजः ॥ इति ।

बृहस्पतिश्चाऽऽह—सुवर्णं च सकांसं च सहस्रं वेदपारगे।
तथैव देयं तद्विप्राय द्वितीयेऽह्नि वा कारयेत् ॥

अत्र दिवैव पिण्डदानान्तं कृत्वा नग्नप्रच्छादनमपि कर्तुं शक्यते। तत्र तथैव देयम्। यत्र तु रात्रौ दहनं पिण्डान्ते वा सूर्यास्तमयस्तत्र द्वितीयेऽहन्येतद्देयमिति [वि]वेकः। न च 'नक्तं श्राद्ध कुर्वीत' इत्यादिनिषेधात्। एवमेकोत्तरवृद्धिनवश्राद्धयोरपि द्रष्टव्यम्। तदुक्तं कात्यायनेन—

रात्रौ दग्ध्वा तु पिण्डान्तं कुर्याद्वपनवर्जितम् ॥ इति।

अथैकोत्तरवृद्धिश्राद्धमुच्यते। तत्र नारदः—

श्राद्धमेकोत्तरं वृद्ध्या कर्तव्यं तु दिने दिने।
अवसानाद्धलीना तु द्विगुणं प्रत्यहं परम् ॥ इति।

बृहस्पतिश्चाऽऽह—

एकोत्तरं यथाशक्ति भुक्ति दद्याद्द्विजन्मने।
दशकं वा शतं वाऽपि सहस्रं वा सहेमकम् ॥
देयं वित्तं च तस्मिंस्तैर्यथा तुष्टं यथा सुखम् ॥ इति।

अथ नवश्राद्धमुच्यते। तत्र बौधायनः—'मरणाद्विषमेषु दिनेष्वेकैकं नवश्राद्धं कुर्यादा नवमात्। यदि नवमं विच्छिद्येतैकादशे तत्कुर्यात्' इति। तथा च प्रथमे तृतीये पञ्चमे सप्तमे नवमे चेति पञ्चैतानि नवश्राद्धानि भवन्ति। ततश्च नवं च तच्छ्राद्धं च नवश्राद्धमिति प्रत्यग्रपरो नवशब्दः। प्रत्यग्रता तु शावाशौचे वर्तमान एव क्रियमाणत्वात्। यद्यपि नग्नप्रच्छादनादेरप्यस्ति प्रत्यग्रता तथाऽपि पङ्कजशब्दवद्योगरूढ्या नवश्राद्धशब्दोऽपि क्वचिदेव वर्तत इति द्रष्टव्यम्। यथा यद्येकादशेऽहनि कर्तव्यं प्रथममासिकश्राद्धं तस्यापि नवश्राद्धसमाख्या भवति। तदाह वृद्धवसिष्ठः—

सप्तमेऽह्नि तृतीये च प्रथमे नवमे तथा।
एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् तथा ॥ इति।

नन्वेकादशेऽहनि क्रियमाणस्य प्रथममासिकश्राद्धस्याऽऽशौचापगमोत्तरकालिकत्वात्कथं नवश्राद्धत्वम्। अत्रोच्यते। सत्यं दशाहपर्यन्तमाशौचं सामान्यतः। श्राद्धकर्ता(र्तुः) तु प्रथममासिकश्राद्धसमाप्तिपर्यन्तमाशौचमस्त्येव।

एकादशेऽह्नि संप्राप्य एकोद्दिष्टे कृते यदि।
पिण्डमेकं प्रदातव्यमाशौचं स्या प्रदानतः ॥ इति स्मृतेः।

तस्मात्तस्याप्यशुचिना क्रियमाणत्वाद्युक्त नवश्राद्धत्वम् ।

अथ यत्र दशाहमध्ये दर्शागम. स्यात्तत्र दर्शे पिण्डोदकदानं समापनीयम् । उत्तर-दिनदेयमप्युदकपिण्डदानमपकृष्य देयमिति यावत् । तदाह वसिष्ठः—

अमावास्यामतिक्रम्य मर्यादा तत्र चेद्भवेत् ।
द्विचन्द्रदर्शने दोषो महानित्यवधार्यताम् ॥ इति ।

भविष्यपुराणेऽप्युक्तम्—प्रवृत्ताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते ।
समाप्य चोदकं पिण्डान्स्नानमात्रं समाचरेत् ॥ इति ।

ऋष्यशृङ्गः—आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम् ।
समाप्तिं प्रेततन्त्रस्य कुर्यादित्याह गौतमः ॥ इति ।

पैठीनसिः—आद्येन्दावेव कर्तव्या प्रेतपिण्डोदकक्रिया ।
द्विरैन्दवे तु कुर्वाणः पुनः शाव समश्नुते ॥ इति ।

मातापित्रोस्तु श्लोकगौतमः—अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात्पिण्डाञ्जलाञ्जलीन् ॥ इति ।

इदमपि त्र्यहमध्ये दर्शपाते । तदूर्ध्वं दर्शे तु पित्रोरपि तन्त्र समाप्यमेव ।

पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् ।
तावदेवोत्तरं तन्त्रं पर्यवस्येत् त्र्यहात्परम् ॥ इति गालवोक्तेः ।

अन्येषा तु त्र्यहमध्येऽपि समाप्तिरिति ग्रन्थान्तरोक्तम् । बौधायनेऽपि—

दर्शो दशाहमध्ये स्यादूर्ध्वं तन्त्र समापयेत् ।
त्रिरात्रादुत्तर पित्रोर्मृताविति विनिश्चयः ॥ इति ।

मदनपारिजाते तु गालवीयमापदनौरसपुत्रादिविषयम् । त्र्यहोर्ध्वमपि पित्रोर्न तन्त्र-समाप्तिरित्युक्तम् ॥ ७३ ॥ ७४ ॥ ७५ ॥ ( ख० ८ ) ॥

इति सत्याषाढहिरण्यकेशिपितृमेधव्याख्यायां महादेवशास्त्रिकृतायां प्रयोगवैजयन्त्यां वृत्तावष्टाविंशप्रश्ने द्वितीय पटलः ॥ २ ॥

---

अथ तृतीयः पटल ।

---

संचयनकालो निरूप्यते—

**अपरेद्युस्तृतीयस्यां पञ्चम्या५ सप्तम्यां वाऽस्थी-नि संचिन्वन्ति ॥ १ ॥**

अपरेद्युर्दहनदिवसात्परस्मिन्दिवस इत्यर्थः । तृतीयस्यामित्यादि तु राज्यभिधानमुखे-नाहोरात्रलक्षणात्तृतीयत्वादिवाक्यान्तरोक्तद्वितीयदिवसापेक्षयाऽत्र वेदितव्यम् । न तु दहनदिवसापेक्षया । अत आह बौधायनः—अथातः सचयनम्—एकस्या व्युष्टाया तिसृषु वा पञ्चसु वा सप्तसु नवसु वैकादशसु वाऽयुग्मा रात्रीरर्धमासान्मासानृतून्संवत्सरं वा संप(पा)द्य संचिनुयुः ( बौ० पि० १–१४–१ ) इति । अन्ये तु तृतीयस्यामित्यादिषु व्युष्टायामित्यध्याहारेण तमर्थं साधयन्ति । संचिन्वन्तीति संनिवपन्ति वक्ष्यमाणा-अग्निचिदादय इत्यर्थः । अत्राऽऽश्वलायनेन च कृष्णपक्ष एकादशीत्रयोदशीदर्शेष्वाषाढीफाल्गुनीप्रोष्ठपदीमिन्नर्क्ष उक्तम् । तदाऽऽशौचमध्येऽसंभवे तदूर्ध्वं च प्रागब्दात्करणे ज्ञेयम् । आशौचमध्ये तु संवर्तः—

प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ।
अस्थिसचयन कार्यं दिने तद्गोत्रजैः सह ॥ इति ।

छन्दोगपरिशिष्टे तु—अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेत् । इति ।

द्वितीयेऽप्युक्तम् । वैखानसस्तु संचयनं चतुर्थ्यामिति । यमोऽपि—

भौमार्कमन्दवारेषु तिथियुग्मे विवर्जयेत् ।
वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसचयम् ॥
प्रदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः ॥ इति ।

शौनकः—पालाशेष्वस्थिदाहे च सद्यः संचयनं भवेत् । इति ।

काम्यमरणे तु तस्य त्रिरात्रमाशौचम् । द्वितीये त्वस्थिसंचय इत्युक्तम् ॥ १ ॥

**क्षीरोत्सिक्तेनोदकेनौदुम्बरशाखया प्रका-थयञ्छरीराण्यवोक्ष्य यं ते अग्निममन्था-मेति पञ्चभिः ॥ २ ॥**

अवशीयतामिति मन्त्रान्तः । क्षीरमुत्सि(मि)च्यते यस्मिन्तदिदं क्षीरोत्सिक्तम् । तेनोदकेनौदुम्बरशाखया प्रकाथयन्ननतिदहन् । केचिदप्रकाथयन्नविकलं कुर्वन् इति । शरीराण्यवोक्षति—यं ते अग्निममन्थामेति । पञ्चभिः प्रतिमन्त्रम् । अथवा सर्वान्तेऽवोक्षणं, वचनादेक कर्म बहुमन्त्रमिति न्यायात्तचेदानीं कृत्स्नशवाग्निरनुगमयितव्यः । होमाद्यर्थमस्य पुनर्दहनपर्यन्त वा धार्यत्वात् । पुनर्दहनाग्नेर्य(र)भावेऽपि वक्ष्यमाणाहुतिपर्यन्तं वा धार्यत्वाच्च ॥ २ ॥

---

१ क. °वोक्षयति यं ।

अत एवाङ्गारान्दक्षिणतो निर्वर्त्य तिस्रः
स्रुवाहुतीर्जुहोत्यवसृजेति प्रतिमन्त्रम् ॥ ३ ॥

ब्राह्मणमाविशेत्यन्तः । अत एव शवाग्नेरङ्गारान्दक्षिणतो निर्वर्त्य निष्कृष्य तस्मिन्नवसृजेति तिसृभि. प्रतिमन्त्र स्रुवाहुतीर्जुहोति चोदितत्वात्स्वाहाकारप्रदानमिति न्यायः । स्रुवस्त्वत्र यज्ञियदारुणा कार्यः । तत्र सोमयाजिनस्तु निवपनान्ते पक्षेऽत ऊर्ध्वं शवाग्निं निधाय मान्युपयोगात् ॥ ३ ॥

अयुग्भिरुदकुम्भैरवोक्षितमवोक्ष्यायुजः स्त्रियः संचिन्वन्ति ॥४॥

स्त्रियोऽत्र पत्न्यभिप्रेताः । तथोत्तरत्र वचनात् । तत्रायुज इति क'(काः) पुनस्ताः । यजमानस्य मार्ये(र्या इ)ति वैखानसः । ता यदि पत्न्य न विद्यन्ते तत्रान्या योजयितव्याः । स्ववोक्षितमर्थी(स्थी)न्यवोक्ष्य चिन्वन्त्यादायाऽऽदाय वक्ष्यमाणविधिना संनिवपेरन्निति ॥ ४ ॥

यस्याः पुनः प्रजननं न स्यात्सा सव्ये हस्ते
नीललोहिताभ्यां सूत्राभ्यां बृहतीफलमाबध्य सव्येन पदाऽश्मानमास्थाय सव्येन
पाणिना प्रथमान्यवीक्षमाणाऽस्थीन्यादत्त उत्तिष्ठत इति दद्भ्यः शिरसो वा ॥ ५ ॥

प्रजननं प्रसूतिः । तत ऊर्ध्वं यस्यां न संभाव्यते या न गर्भिणीति न्याव(या)त् । नन्वेवं सति या न गर्भिण्येव ब्रूयात् । यदि मृतस्यैव स्त्रियो(स्त्री) इष्यन्ते(ते) न त्वन्या [इति] नियमोऽस्ति समाव्यते चान्यासु । तत्रायुग इति बौधायनोक्तं 'याऽस्य स्त्रीणा मुख्या (बौ० पि० १–१४–६) इति च संख्यानिवृत्त्यर्थं न तु त्रित्वादिसंख्यानुज्ञानार्थम् । पतिपात्नि(त्नी)षु पश्चादपि गर्भाधानं तस्मात्तदर्थवादेन वा यत्नः । अन्वीक्षमाण उत्तिष्ठत० देवः सविता दधात्विति मन्त्रान्तः । इत्यत्राऽऽददीत दद्भ्यः शिरसो वेति विकल्पः ॥ ५ ॥

तद्वासासि कुम्भे वा निदधाति ॥ ६ ॥

तदस्थि सैव निदध्यात् ॥ ६ ॥

इदं त एकमिति द्वितय्या(तीयाऽ)ऽसाभ्यां बाहुभ्यां वा ॥ ७ ॥

द्वितीयेष्वपि यस्याः पुनरित्यादि समानम् । मन्त्रास्त्विदं त एकमित्येतावान् । द्विती-

---

१ ख, ग. °म्भै स्ववो° । २ ख ग °नर्विज° ।

याया अन्त्रांसाभ्यां बाहुभ्यां वेति प्रवेश(प्रदान)प्रदर्शनम् । तेन कान्तश्च द्वितीयायाः प्रवेशो वेदितव्यः ॥ ७ ॥

पर उ त एकमिति तृतीया पार्श्वाभ्यां श्रोणीभ्यां वा ॥ ८ ॥

पर उ त एकमित्येतावान्मन्त्र. । कटिकण्ठयोर्मध्यमस्य प्रदेश इति ॥ ८ ॥

तृतीयेन ज्योतिषेति चतुर्थ्यूरुभ्यां जङ्घाभ्यां वा ॥ ९ ॥

तृतीयेन ज्योतिषा सविशस्वेत्येतावान्मन्त्रः । कटिगुल्फयोर्मध्यदेशः ॥ ९ ॥

संवेशन इति पञ्चमी पद्भ्याम् ॥ १० ॥

संवेशन इत्यर्धर्चग्रहणम् । पद्भ्यां चरणाभ्याम् ॥ १० ॥

एवमेवायुजाकार१ सु[सं]चित२ संचिन्वन्ति ॥ ११ ॥

एवमेवैतेनैव कल्पेन स्वेन स्वेन मन्त्रेण स्वस्वप्रदेशान् । अयुजाकारं त्रिभिः पञ्चभिः सप्तभिरित्येवमयुग्मपराया [आ]वृत्त्या सुसंचितं निरवशेषं संचिन्वन्ति ॥ ११ ॥

भस्माभिसमूह्य स३हृत्य शरीराकृतिं कृत्वा शरीराण्यादायोत्तिष्ठप्रेहीति ॥ १२ ॥

नाकमधिरोहेममित्यन्तः । भस्माभिसमू( मु )ह्य संकलनं कृत्वा सकलमेकीकरणमिति यावत् । अथ तत्संहृत्य संश्लिष्टं कृत्वा ( ततो ) दक्षिणाशिरसं शरीराकृतिं कृत्वेति । तत्राऽऽह बौधायनः—अथैनं सुसंचितं संचित्य भस्मपिण्डं करोति । तं तथा करोति । यथाऽस्य कपोतश्छायाया नोपविशेदिति । अथैनमपरिमितैः क्षुद्रमिश्रै रश्मिभिः परिचिनोति न तेन परिचिनुयात् । यथाऽस्य कपोतश्छायायामुपविशेदिति । अथैतान्यस्थीन्यद्भिः प्रक्षाल्य कुम्भे वा सते वा कृत्वाऽऽदायोपोत्तिष्ठति ( बौ० पि० १–१४–९ ) इति । निधानदेशं गच्छेदित्यर्थः ॥ १२ ॥

शम्यां पलाशमूले वा कुम्भं निधाय जघनेन कुम्भं कर्षादि समानमा स्नानात् ॥ १३ ॥

शमीवृक्षमूले पलाशवृक्षमूले वा तूष्णीं कुम्भं निधायेत्यग्निदः । ततोऽमात्याः कुम्भस्य पश्चात्कर्षणखनादि तदवगाहनस्नानान्तं पूर्ववत् ॥ १३ ॥

---

१ क. °भ्या वैव° । २ °क °चिन्वन्तं सं° । ३ ख °ह्य भस्माचितिमलंकृत्य स९° ।

**मृदा स्नातीत्येके ॥ १४ ॥ ( ख० ९ ) ।**

मृदा गात्राण्यभिलिप्य स्नातव्यमित्येके शाखिनः समामनन्ति । अत्रापि विधिः समानः ॥ १४ ॥ ( ख० ९ ) ।

**अथातो हविर्याजिनो(यज्ञियं)निवपनम् । यं काम-येतानन्तलोकः स्यादिति ॥ १५ ॥**

यं मृतं मनसाऽपेक्षित(तो) लोक. स्यादित्यग्निदः कामयेत तस्येदानीं हविर्यज्ञियनि-वपनमुच्यत इति शेषः । यथा हविर्यज्ञेषु संस्कृतशूर्पादौ यो ह(यद्ध)विर्निरुप्यते, एवं संस्कृतदेशेऽस्थीनि न्युप्यन्त इति हविर्यज्ञियवादः ॥ १९ ॥

**समस्या उद्धतेऽवोक्षिते सिकतोपोप्ते परिश्रिते वाग्यतोऽनन्वीक्षमाणो दर्भेष्वस्थीनि निवपति— पृथिव्यास्त्वा अक्षित्या अपामोषधीना॑ रसेन स्वर्गे लोके निवपाम्यसाविति ॥ १६ ॥**

समस्या इति च्छान्दसः सुडागमः । समाया भूसंबन्धिनि प्रदेश उद्धतेऽवोक्षत इत्यादीनि तद्विशेषणं( णानि ) । तत्र दक्षिणाग्रान्दर्भान्सम्यक्परिस्तीर्य वाग्यतोऽन-न्वीक्षमाणोऽग्निदोऽनेन मन्त्रेणास्थि निवपेत् । मन्त्रान्ते संबुध्या मृतस्य नाम गृह्णाति । तत्क्रियमाणं कुम्भनिधान कर्षूखननयोर्मध्ये क्रियते । निवपनदेशमपरेण तु कर्षादि-कुम्भं निधाय । अथातो हविर्यज्ञियनिवपनम् ( आप० पि० १–३–१० ) इत्याप-स्तम्बीये तथैवानुक्रान्तत्वात् ॥ १६ ॥

**अनन्तलोको ह भवतीति विज्ञायते ॥ १७ ॥**

रात्रिसत्रन्यायेन( न्यायान्ना )र्थवादफलमिह प्रकृतमित्यभिप्रायः ॥ १७ ॥

**अथ यदि पुनर्धक्ष्यन्तः स्युः ( हृदयं निदधाति ) । अग्निहोत्रहवणीं कृष्णाजिन॑ शम्यां दृषदुपले च नानुप्रहरेयुः ॥ १८ ॥**

नन्वत्र यद्युपबन्धः किमर्थमथैकेषां कुम्भान्तं निधानमिति परमते पुनर्दहनस्य सोम-याजिमात्रविषयतया काचित्कत्वादयं कुतो विधीयत इति न तु कस्मैचित्प्रयोजनायेति केचित् । तदसारम् । परमतविषयत्वायोगात् । स्वमतमेव ह्यनुक्रम्यते । तत्र यद्यनुक्र-म्यमाणमपि परमत(मात्रविषयं) स्यात् । न तु स्वमतोपदेशमध्ये कस्यचित्परमतमात्र-विषयमुच्यते । अपि चात्र परमते निवपनलोष्टचित्योरपि काचित्कत्वा तत्रापि

यद्यनुबन्धः कर्तव्यः स्यात् । न च दृश्यते तस्मादनुक्रम्यते । तस्मादनुक्रम्यमाणे स्वमत एवास्य वक्तव्योपपत्तिः । अत्र ब्रूमः—इयं तावत्पुनर्दहनलोष्टचयने कामनिमित्तरहिते वक्ष्यते । अतो न तयोः कामनिमित्तताव(च) पृथक् संभवतीति न समुच्चयः प्राप्तः । तत्र लोष्टचिते तूर्ध्वं पुनर्दहननिमित्ते चैवं समुच्चयो न घटते । अशक्यत्वादिष्टकाभिरभ्युपहितानामस्थ्नामुद्धरणायोगाच्च । न तु पुनर्दहनादूर्ध्वं शक्यते लोष्टचितिः । अस्थिस्थाने कथंचिद्भस्मोपयोगाभावादस्थिनिवपनमात्रलोपाच्च । सत्यं शक्यते । प्रतिषिध्यते त्वयमर्थः । न चात ऊर्ध्वं श्मशानं कर्तुमाद्रियते (इति) । तस्मान्नोभयता(था)पि समुच्चयः । अतः प्रतिषेधन्यायप्राप्तः पुनर्दहनलोष्टचित्योः स्वमते मिथो विकल्पः । तस्य सूचनार्थोऽयं यद्युपबन्धः सति ह्यस्मिन् यद्युपबन्धे स्वमते न तथा मिथो विकल्पः स्पष्टो भवति । तस्मात्सर्वाहिताग्नीना सूत्रकारमते विधि. पुनर्दहनान्त एव स्यात् । लोष्टचित्यन्त एव वा । तेनायमर्थः । यदि पुनर्दहनं करिष्यन्तः स्युर्न तु लोष्टचितिं तदा पात्रचयनकालेऽग्निहोत्रहवण्यादीनि पञ्च पात्राणि न चिनुयुः । तत्र पात्रचयनेऽनुप्रहरणव्यपदेश उपयुक्तसंप्रत्ययार्थो भवति (इति) हि पात्रचयनं कर्मसूपयुक्ताना पात्राणामनुप्रहरणानुक्रान्तेरेव पुनर्दहनस्य कार्यत्वादिति भावः । अत एवाग्निहोत्रहवण्यादिभिरेव पुनर्दहनम् । अत एवानाहिताग्नेः पुनर्दहनाभावोऽप्यनुसंधेयः ॥ १८ ॥

अत एवाङ्गारान्दक्षिणतो[1] निर्वर्त्य तिस्रो रात्रीरिद्ध्वा दहनवदवकाशं जोषयित्वाऽग्निमुपसमाधाय संपरिस्तीर्यापरेणाग्निं दक्षिणाग्रान्दर्भान्सꣳस्तीर्य तेषु कृष्णाजिने शम्यायां दृषदुपलाभ्यां मवाञ्जनꣳ शरीराणि सुसंपिष्टानि पेपयित्वाऽऽज्यकुम्भे समुदायित्वाऽग्निहोत्रहवण्या जुहोत्यस्मात्त्वमधि जातोऽसीति ॥ १९ ॥

अत एव शवाग्नेरेव महान्तमङ्गारं दक्षिणतो निष्कृष्य तत्रैवैनं तिस्रो रात्रीस्त्रीनहोरात्रम(त्रान)जस्रं प्रज्वालयेत् । निर्वर्तिते त्वस्मिञ्छवाग्निरनुगमयितव्यः । एवमत्र त्रिरात्रमिन्धनपूर्वकत्वानियमाद्दशमेऽहनि शान्तिकर्मनियमाच्च । अष्टमेऽहनि संचयनमसंभवेऽप्युपस्तम्भयति । तस्मात्पुनर्दहनविषये द्वितीयचतुर्थषष्ठाष्टमानामेषामन्यतमस्मिन्नहनि संचयनं कृत्वा तत्रैव पुनर्दहनप्रयोगारम्भः कार्यः । पुनर्दहनाभावे त्वष्टमेऽहनि

---

१ ख. °क्षिणा नि° । २ °षु दर्शपूर्णमासवत्क° । ३ °युत्वाग्नि° ।

संचयनमवकल्प्यते । दहनवद्दहनस्यैव तल्लक्षणमतमवकाशं परिगृह्येत्यर्थः । अत्रापि यावदर्थमुद्धननावोक्षणे द्रष्टव्ये । तत्र निर्मथिताग्निं प्रतिष्ठाप्योपसमिद्ध्य परिस्तीर्य दर्भसंस्तरणादि कुर्यात् । दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु कृष्णाजिनं दक्षिणाग्रीवमधरलोमाऽऽस्तीर्य तस्मिन्प्राचीना कुम्बाꣳ शम्या निधाय तस्या ( दृषदुपलमत्याधाय ) दृषदमत्याधाय तस्यामुपलमत्यादधाति । अथोक्तान्यस्थीनि पिनष्टि । अवाञ्जनमवाच्यावाच्य पेषणानुगुणमाज्येन पुनः पुनः पेषयतीत्यर्थः । एवं सुसंपिष्टानि पिष्ट्वाऽऽज्यकुम्भेऽवधाय समुदायुत्य द्रवीकृत्य तस्मादाज्यादग्निहोत्रहवणीं पूरयित्वा मन्त्रक्रमप्राप्तयाऽस्मात्त्वमधि० सुवर्गाय लोकाय स्वाहा, इत्येतयर्चा जुहुयात् । एतमेवान्त न केवलमेतावदेव क्रियते; किंतु यावत्कुम्भ आज्यमिश्रमस्थि नास्तीति ज्ञायते तावत्पुनः पुनः पूरयित्वा, एतयर्चा पुनः पुनरभ्यस्यमानया जुहुयात् ॥ १९ ॥

**एतयैवान्तमग्निहोत्रहवणीं कृष्णाजिनꣳ शम्यां दृषदुपले चानुप्रहरेयुः ॥ २० ॥**

अत्रैव पुनर्दहनाग्नावेव ॥ २० ॥

**न चात ऊर्ध्वꣳ श्मशानकर्म कर्तुमाद्रियेत ॥ २१ ॥**

पुनर्दहनात्परं लोष्टचितिर्न कर्तव्या । यद्यपि सा कर्तव्या निमित्तरहिता । न चात ऊर्ध्वमित्येव क्रियमाणा लोष्टचिदग्निचितोऽपि प्रतिषिध्यते । सा च लोष्टचिते इति विषयाभावः । पुनर्दहनस्य पाक्षिकत्वम् । अथ यदि पुनर्धक्ष्यन्त यद्युपबध्यते( ध्यात् ) । न च पुनर्दहनात्परं लोष्टचितेरसंभव इति प्रतिषेधानर्थक्या(क्या) दस्मिन्स्थाने । तद्भस्मोपयोगेनास्थिनिवपनमात्रलोपेन वा तस्याः शक्यत्वादित्युक्तम् ॥ २१ ॥

एवं पुनर्दहनादूर्ध्वं लोष्टचितिं प्रतिषिध्यत एव तावत्तु कर्तव्यमित्यत आह—

**कृति(तीं)र्वाऽस्य दहने वपेच्छर्कराभिर्वा परिचिनुयात् ॥ २२ ॥**

अस्य पुनर्दहनस्य सम्बन्धिनो दहने कृते कृष्णमृत्तिका निवपेत् । शर्कराभिर्वा परिमण्डलमत्र चिनुयात् । उभयोरन्यतरतश्चेतव्यमित्यर्थः । यावदग्न्यायतनं प्रच्छाद्यते तावत्कार्यम् । तत्र शर्कराचयनपक्षे मध्यत आरभ्य प्रसव्यं परिचयनं वेदितव्यमिति । इहोत्तरतः कर्मानुपदेशात् ॥ २२ ॥

अथ पटलशेषेण पुनर्दहनप्रशंसोच्यते—

**तमभ्येवाऽऽदित्यस्तपति तमभि वातो वाति तमापः स्पृशन्ते ॥**

---

१ ख. °न्तमत्रैवाग्नि° । २ ख. २ °शान कर्तुं° ।

एवं श्रुतिरनुक्रान्ता ॥ २३ ॥

॥ २३ ॥

अथैतां श्रुतिं व्याचष्टे—

स नैवाऽऽदित्यस्य सकाशाद्विद्यते न वायोर्नापाꣳ- सꣳसर्जनात् ॥ २४ ॥

स इति पुनर्दहनसंस्कृतः सशरीरो यजमान आदित्यस्य वायोश्च सकाशान्न च्छिद्यते । वातेन च वृतात्मिकानामपां संसर्जनाद्दूरे भवतीति यावत् ॥ २४ ॥

अथास्मिन्विषये ब्राह्मणोक्तं पुराकल्पमनुवर्तते—

एवꣳ हि कौषीतकिर्विदांचकार तꣳ हैवं चक्रिरे[1] । एवमु हाहैवमाश्मरथ्यं चक्रुः ॥ २५ ॥

एवं कौषीतिकिर्विदित्वा स्वशिष्येभ्य. पुनर्दहनं प्रोवाच । तमेतेन कल्पेन चक्रुः । पुनराहुः—आश्मरथ्यं चैव चक्रुः । इति । संस्कारश्च पूर्वर्षिभिरनुष्ठितत्वात्प्रशस्तमेतत्पुनर्दहनम् ॥ २५ ॥

तस्यो हैवै[ते][2] ( अ ) हीना(हायना व्युच्छन्ती) व्युच्छन्त्यस्मै वस्यसी वस्यसी व्युच्छाति प्रजा हास्य श्रेयसी भवति यमेवं निदधातीति विज्ञायते ॥ २६ ॥ ( ख० १० ) ।

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (पितृमेधापरपर्याये)ऽष्टाविंशप्रश्ने तृतीयः पटलः ॥ ३ ॥

व्युच्छन्तीति पुनः पुनः प्रभाता भवन्तीति । रात्रिरित्यहोरात्रलक्षणा । सर्वेऽहोरात्रा इत्यर्थः । वस्यसी श्रेयसीत्यत्रापि अहोरात्रश्रेयस्करा लक्षणा भवन्ति । प्रजा हास्य श्रेयसी भवतीति प्रशंसा ॥ २६ ॥ ( ख० १० ) ।

इति सत्याषाढहिरण्यकेशिपितृमेधव्याख्याया महादेवशास्त्रिकृतायां प्रयोगवैजयन्त्या वृत्तावष्टाविंशप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

अथ चतुर्थः पटलः ।

---

अथेदानीं प्रेतस्यामात्यानां तत्संस्कारादिकर्मान्वयानिमित्ताशौचादिनिवृत्त्यर्थं शान्तिकर्मोच्यते—

---

१ ख. चक्रुरे° । २ ख. ग. हैव हैवैते ।

तया चतुर्गृहीताभ्यामेना आहुतीर्जुहुयात् । स्रुवग्रहणं स्रुवश्च वारुणः प्रतिलोमकृत इष्यते । न हि ते अग्ने० गौरिव स्वाहा अप नः शोशुचदघं० मृत्यवे स्वाहा इति द्वे आहुती जुहोतीत्यर्थः ॥ ३ ॥

दश च स्रुवाहुतीरप नः शोशुचदघमिति ॥ ४ ॥

अत्र प्रतिलोमकृतयेत्युभय लेङ्ग[ वि ]परिणामेन योजयितव्यम् । तेन स्रुवलक्षण- मुक्त भवति । अपन. शोशुचद मि (तै० आ० ४–१०) त्यनुवाकोऽपि ग्रहणम्(ग्राह्यः) । द्वादश स्रुवाहुती. ( बौ० पि० १–२१–६ ) इति बौधायनः ॥ ४ ॥

हुत्वा हुत्वा पात्र्या संपातमवनयति ॥ ५ ॥

सपातशब्देन हुतद्रव्यशेष उच्यते । स त्विह सर्वास्वाहुतिषु ग्राह्यः ॥ ५ ॥

तत्रोभयं प्रहरति येन जुहोति ॥ ६ ॥

उभयं स्रुव चेत्यर्थः । तदुभयमत्राग्नौ प्रहरेत् ॥ ६ ॥

उत्तरेणाग्निं लोहितोऽनड्वान्प्राङ्मुखोऽवस्थितो भवति ॥ ७ ॥

नवः स्थापनीय इत्यर्थः ॥ ७ ॥

तं ज्ञातयोऽन्वारभन्तेऽनड्वाहमन्वारभामह इति ॥ ८ ॥

संपारणो भवेत्यन्तः । नात्र क्रमनियमोऽपि न च धून्वनेऽन्वारम्भण इति नियमोऽत्र प्रवर्तते । तस्य राजगव्यन्वारम्भणमात्रविषयत्वाच्च धून्वनादिसमभिव्याहारसामर्थ्यात्॥ ८ ॥

प्राञ्चो गच्छन्तीमे जीवा इति ॥ ९ ॥

प्रतरा दधाना इति मन्त्रान्तः । ज्ञातय इति विशेषः । अत्रापि न क्रमनियमः ।

जघन्यो वेतसशाखया[1] चावकाभिश्च पदानि सं- लोभयन्नेति मृत्योः पदमिति ॥ १० ॥

यज्ञियास इति मन्त्रान्तः । जघन्यः सर्वे(र्वेषा)पश्चाद्गतोऽमात्यः । मृत्योः पदयो- पयन्त(?)इत्यनया स्वस्य परेषा च जघ[ना]नि संलोभयन्समूहनवरासना(ना)रो- हयन्गच्छेत् ॥ १० ॥

अथैभ्योऽध्वर्युर्दक्षिणतोऽश्मानं परिधिं दधातीमं जीवेभ्यः परिधिं दधामीति ॥ ११ ॥

---

१ ख. 'याव' ।

पर्वतेनेति मन्त्रान्तः । एभ्योऽमात्येभ्य. एषा जीवनार्थं दक्षिणतोऽग्निं प्रतिष्ठित मुह्यमानं परिधितया निदध्यात् । व्यवधानतया स्थापयेत् । स तु मृत्युमात्रनिरोधार्थत्वात्परिधिर्भवति ॥ ११ ॥

**स्त्रीणामञ्जलिषु संपातानवनयतीमा नारीरिति ॥ १२ ॥**

योनिमग्र इति मन्त्रान्तः । स्त्रीणामित्यत्रामात्याना भार्या गृह्यन्ते । प्रतिपत्न्यः, न तु विधवा । मन्त्रलिङ्गात् ॥ १२ ॥

**तैर्मुखानि बिमृज्यन्ते ॥ १३ ॥**

ता नार्य इति शेषः ॥ १३ ॥

**यदाञ्जनं त्रैककुदमिति त्रैककुदेनाञ्जनेनाञ्जते ॥ १४ ॥**

त्रिककुत्त्रिकूटपर्वतस्तत्र भवमाञ्जन त्रैककुदं तेन सर्वेऽमात्याः स्वे स्वे चक्षुषी अञ्जीरन् ॥ १४ ॥

**यदि त्रैककुदं नाधिगच्छेद्येनैव केन चाञ्जनेनाञ्जीरन् ( ख० ११ ) ॥ १५ ॥**

नाधिगच्छेन्न लभेरान्नि(ते)त्यर्थः ( ख० ११ ) ॥ १५ ॥

**पृथिव्यामोषधीस्तम्बं प्रतिष्ठापयति यथा त्वमिति ॥ १६ ॥**

द्वेषाश्वसीत्यन्तः । स ओषधिस्तम्ब उत्सृजति प्र तेलोमो य वर्धते, अवधार्यते तमेतयर्चा वर्धनानुगुण प्रतिरोपयेदित्यर्थ. । अध्वर्युकृत्यं चैतदेकवचननिर्देशादेवमिम उद्भिन्दन्तु ( तै० आ० ४-९ ) इति मन्त्रलिङ्गाच्च ॥ १६ ॥

*** प्रत्येत्य ग्रहानुत्तरपूर्वदेशेऽगारस्याग्निमुपसमाधाय संपरिस्तीर्यानुलोमकृतया वारु (र) ण्या स्रुचा द्वे चतुर्गृहीते जुहोत्यानन्दाय प्रमोदायेति ॥ १७ ॥**

द्वादशाऽऽहुतीरिति वैखानसः । अत्रापि लौकिक एवाग्निः पूर्ववत् । स्रुवश्चानुलोमकृतो वारुण इष्यते । ग्रहणार्थमत्रोभयं प्रहरणमाह--

---

* यथात्वमित्यस्याग्रे च प्रत्येत्येत्यस्य प्राक् ' उद्भिनत्त्योषधे ' इति ग्रन्थ कखसंज्ञकयो पुस्तकयोर्वर्तते ।

---

१ ख. °मृजन्ते । २ ख. °नाद्न्चो ।

अत्रोभयं प्रहरति येन जुहोति ॥ १८ ॥

अत्रोभयं प्रहरतीति । येन जुहोति स्रुवस्यापि परम्परया होमसाधनत्वाद्येन जुहोतीति करणतोपपत्तिः ॥ १८ ॥

अजमेतदहः पचति यवौदनं च ॥ १९ ॥

एतदहः शान्तिकर्मदिवसे मांसभोजनार्थं ततश्चामात्यानां प्रातराशार्थमेव । कलौ मांसाशनप्रतिषेधाद्यवौदनमेव श्रेय इत्यर्थः ॥ १९ ॥

अजोऽसीतित्यजस्य प्राश्नन्ति ॥ २० ॥

द्वेषाऽसीत्यन्तः ॥ २० ॥

यवोऽसीति यवौदनं च ॥ २१ ॥

प्राश्नन्तीति शेषः । द्वेषाऽसीत्यन्तः । यवौदनस्य दानेन प्रातराशनियम उच्यते । किं तु प्रातराशार्थमेव प्रपञ्चितः सूत्रकारेण ॥ २१ ॥

अत्राऽऽसन्दीस्तल्पानित्यधिरोहयन्ति ॥ २२ ॥

अत्रैतदस्मिन्काले दशाहकर्मसमाप्तमित्यर्थः । आसन्दी, आसनार्था खट्वा । तल्पाः शयनार्था एतेनातुरव्यञ्जनानां सर्वेषां निवृत्तिः प्रदर्शिता ॥ २२ ॥

नापितकर्माणि च कारयन्ते ॥ २३ ॥

नापितकर्माणीति बहुवचनं केशश्मश्रुलोमनखात्मकविषयात्मकबहुत्वकर्मत्वाद्बोध्यम् । यथाऽऽह बौधायनः—

दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् ।

तत्र त्यज्यानि वासांसि केशश्मश्रुनखानि च इति ॥ २२ ॥

एष प्रथमोऽलंकारः ॥ २३ ॥

एषोऽनन्तरोक्तोऽञ्जनादिवपनान्तोऽलंकारः प्रेतकार्यविनिर्मुक्त्युत्तरकालिकानां मण्डनानां प्रथमो वेदितव्यः । ततश्चास्मिन्नहनि कर्तव्यं केशान्प्रकीर्य पांसूनोप्येत्यादि कर्म प्रागेव शान्तिकर्मणः कार्यम् । न तूर्ध्वमिति रूयापितो भवति ॥ २३ ॥

सोऽयमेवं विहितमे(ए) वानाहिताग्नेः पात्रचयेष्टकावर्ज्यम् ॥ २४ ॥

सोऽयं पितृमेध एव विहित एव भवति । अनाहिताग्नेर्नान्यथा । किंतु पात्रचय इष्टकाश्चानाहिताग्नेर्न भवति । न तु जुह्वादिपात्राभावादेव पात्रत्रयोऽस्य भवति । न च पात्राणामेतदर्थमुत्पत्तिः । प्रसक्तित्वात्प्रतिषेधो निवार्यत इत्यर्थवान्भवति । प्रतिषेधो-

पयुक्तसंस्कारत्वात् । पात्रचयनस्य न चानाहिताग्निविषयेऽनुपयुक्तानां जुह्वादीनामस्तीति प्रतिपत्तिः, तस्माज्जुह्वादिस्थानीयद्रव्यान्तरस्थापने सति चयनप्रसक्तं निवर्तयितुमयं पात्रचयनप्रतिषेध उच्यत(इति) द्रष्टव्यम् । तथाऽग्निहोत्रहवण्याद्यभावात्पुनर्दहनाभाव इत्युक्तम् ॥ २४ ॥

औपासनेनानाहिताग्निं दहन्ति ॥ २५ ॥

इह

लुप्ताना कर्मणा कुर्यात्प्रायश्चित्तमृते पुरा ।
भाविप्रवृत्तशेषं च पूर्वपक्षनयं तथा ॥
कर्ममध्ये मृते तस्मिन्दर्विहोमादि लुप्यते ।
ग्रामान्तरमृतौ तत्र समारोप्य मृतो यदि ॥
विच्छिन्नाग्नेश्च विधुराग्नेश्चोत्पाद्य स्वयोनितः ।
अप्रजाते दहेत्कक्षं पुरुषाकृतिमेव वा ॥ इति ।

प्रेतोमात्येत्यादि समानम् । गार्हपत्यादीना सर्वेषामग्नीन(ना)सद्भावः प्रवक्ष्यते विधिः विधुराग्निनिष्पन्नाग्येति तमङ्गाराद्बहिर्निधाय तस्य पश्चात्प्रेतमन्त्रेण सवेश्य पुनस्तत्रैव तूष्णीं संवेश्य सकृदेव परेयुवांसमिति स्रुवाहुतिं जुहोति अन्यनेकाभावात् । यस्य त्वनेकभार्यतयौपासनानेकत्व तस्य प्रत्याग्नि भवत्येव होमः । तत्र मुख्याग्नौ मन्त्रवतो स्रुवाहुतीरन्यत्र तूष्णीमिति विवेकः । दक्षिणतोऽग्नेः परिश्रिते केशश्मश्रुवपनादिसमानताऽत्रौपासनवताम् ॥ २५ ॥

निर्मन्थे(न्थ्ये)न पत्नीम् ॥ २६ ॥

निर्मथिते[ना]ग्नि[ना] दहन्तीति विशेष ।.स तु लौकिकारणीभ्या निर्मथ्यते । पत्नी पाणिग्रहणसस्कृता स्त्री कथ्यते । पत्युर्नो यज्ञसयोग इति श्रुतेः । पाणिग्रहणसंस्कारानन्तरं पत्न्यावहन्तीति व्यपदेशाच्च । तेनायं विधिराहिताग्नेरनाहिताग्नेरपि भार्याया समान । तत्र जीवत्यौ(न्त्यो) विशेषो वक्ष्यते । यथा पत्युरशक्ये(?)विवाह आहवनीयादिभिर्दहनमनाहिताग्निपत्न्यास्त्वौपासनेन विवाहासंभवे निर्मन्थ्येनेति । ग्रामान्तरे मृतायाः पत्न्याः प्रायशो न हि समवेत् । यत्राग्नयस्ततोऽन्यस्मिन्ग्रामे तस्याः, इति निर्मन्थ्येन दाहः प्रत्येतव्यः ॥ २६ ॥

उत्तपनेनेतरान् ॥ २७ ॥

दहतीति शेषः । उत्तपनो नामाधस्तात्समिध्यमानाग्नेरर्चिषा नितप्यमाने पात्रे तुषादिप्रक्षेपाद्योऽग्निः । इतरशब्देनात्र कन्या[म]नुपनीताना प्रेतवद्दहनं स्मर्यते—उत्तपनीयमेके समामनन्ति ( २–४–११ ) इति ॥ २७ ॥

यथा शाखान्तरोक्ता कर्मतारतम्यानुरूपा पैतृमेधिककर्मतारतम्यव्यवस्थामाह—

अथैकेषां कुम्भान्तं निधानमनाहिताग्नेस्त्रियाश्च निवपनान्तं हविर्याजिनः पुनर्दहनान्तं सोमयाजिनश्चयनान्तमग्निचित इति ॥ २८ ॥

अथैकेषामिति वाजसनेयिब्राह्मणमतानुवादप्रदर्शनार्थं । अनाहिताग्नेर्गृहमेधिनस्तावत्कुम्भान्तनिधानमेव पैतृमेधिकं भवति । अस्थिकुम्भनिधानान्तमिति यावत् । एवमनाहिताग्नेराहिताग्नेश्च पत्नीभूतायाश्च स्त्रियाश्च । न तु तस्या विकारमेव निवपनं कार्यमिति, निवपनकार्यादित्यर्थः । निवपनान्तं हविर्यज्ञयाजिन इति । सोमयाज्याहिताग्नेर्गृह्यते तस्य निवपनान्तं कार्यमिति कर्माभावेऽपि निवपनान्तं नियम्यते पुनर्दहनलोष्टचयने च निवर्तेते । न तु सर्वेषामाहिताग्नीनामविशेषेण । पुनर्दहनान्तं लोष्टचित्यन्तं वा पैतृमेधिकं भवति । तत्र निवपनान्तं सति कामे समुच्चीयते, असति च न भवतीति दर्शितः । सोमयाजिन इति चानग्निचिद्गृह्यते । अविशेषात्तस्य लोष्टचित्यन्तमिति पक्षान्तरव्यावृत्त्यर्थः । वचनं तत्र निवपनस्य कामभावाभावानुविधायानुभवौ अग्निचिच्छब्देन महाग्निचयनं काठकचयनं वा गृह्यतेऽविशेषात् । तस्य लोष्टचित्यन्तमेव भवति । न तु पुनर्दहनान्तमिति पक्षान्तरव्यावृत्त्यर्थमेवेदं गृह्यते । अत्र वचनमपि निवपनान्तमनियतं कामानुसारात् ॥ २८ ॥

अथान्यान्विशेषानाह—

नासंनयतामामिक्षाम् ॥ २९ ॥

यागार्थं सानाय्यमुत्पादयन्यजमानो यदि सोमयाजी संनयत इति । तव्द्यतिरिक्तोऽसनयतः । बहुवचनमनाहिताग्न्यादीनामुपसंग्रहार्थम् । इतरथाऽऽहिताग्निमात्रावाच्यतामावात्तत्रश्च सनय्य( य )द्यजमानव्यतिरिक्ताना पितृमेधभाजा यथोक्ता मैत्रावरुण्यामिक्षोत्पाद्यत एवासनयत्यामिक्षा न विद्यते तस्य संनयद्व्यपदेशायोग्यत्वाद्यजमानस्यैव हि संनयव्द्यपदेशो दृश्यते । न तु पत्न्या अपि ॥ २९ ॥

उत्सर्गो राजगव्या अपशुबन्धयाजिनः ॥ ३० ॥

पशुबन्धेन येन केनचिदिष्टवान्स पशुबन्धयाजी तव्द्यतिरिक्तोऽपशुबन्धयाजि(जी) [ तस्य ] । अत्रापि पशुबन्धेज्याराहिततया नाहिताग्नीनामप्युपसंग्रहः । तेषां राजगव्या उत्सर्गपक्ष एव कार्यः । न तु संज्ञपनपक्ष इति पक्षान्तरव्यावृत्त्यर्थं वचनमत्र ॥ ३० ॥

---

१ ख. °न्तं विधा° । २ क °ति विज्ञायते ना° ।

स्त्रियाश्च ॥ ३१ ॥

केचित्स्त्रियाश्चापीति पठन्ति । तत्तु विस्पष्टार्थमिति द्रष्टव्यम् ॥ ३१ ॥

दहनकल्पेन कल्पेरन्ननुपेतान्कन्याश्च ॥ ३२ ॥

दहनकल्पः प्रेतोऽस्मात्त्वाद्युक्त. पैतृमेधिक॰ कल्पेरन्नित्यन्तर्भावितण्यर्थः । अनुकृतो पनयनसस्कारा. पुमास. । कन्यास्त्वकृतपाणिग्रहणा., तानुभयान् पितृमेधेन विधि नाऽनुकल्पयेयुः । न अघेनेन गार्हपत्यमित्यादि हविर्यज्ञनिवपनान्त पैतृमेधिकं कर्म न भवति । न तु तच्छरीरमपि जातकर्मादिषूपयुक्तमतस्तत्रापि निवपनान्त कार्यम् । नैतदेवम् । न॰ हि जातकर्मादिषु शरीरस्योपयोग. । शरीरस्य कर्माङ्गत्वाभावात् । कथं तर्हि शरीरे जातकर्मादीनामुपयोगः । शरीरसंस्कारत्वात्तेषा शरीराङ्गत्वमेव ।

नन्वेवं विवाहोपनयनयोरपि शरीरसंस्कारत्वात्कथं तत ऊर्ध्वं पैतृमेधिकप्रवृत्तिरिति चेत्— सत्यम् । प्रवेशहोमसाविच्यनुवचनादेस्तु न शरीरसंस्कारता । अतस्तत्र शरी॰ रस्य कर्माङ्गताऽस्त्येव । अत एव विवाहोपनयनादिकर्मणा स्वाधिकारता । जातकर्मा॰ दीना तु पराधिकारतेति वक्ष्यामः । तस्मादुक्तमनुपेताना कन्याना च न पितृमेध इति ॥ ३२ ॥

अन्वयमनुपेताना कन्याना च न भवतीति कः पुनरनुपेताना कन्याना च कर्तव्य॰ विधिरित्यत आह—

पुनर्दहनमन्त्रेणैव दहेयुः ॥ ३३ ॥

तत्रास्मात्त्वमधिजातोऽस्ययं॰ सुवर्गाय लोकाय स्वाहा ( तै॰ आ॰ ४–४ ) इत्यनेन पुनर्दहनमन्त्रेण दहनमात्र कार्यमित्यर्थ. । तत्र चाऽऽह बौधायनः—यथो एतन्न प्राक्चौलात्प्रमीताना दहनं विद्यते नानुपनीताना कन्याना वा पितृमेध इत्युक्तम् । कथमु खल्वेषामुक्तः संस्कारो विद्यत इति । असमाप्तशरीराणा गर्भाणा स्रवणमित्येके । गर्भस्रवणे—इय वा अग्निर्वैश्वानरोऽस्यामेवैनं जुहोति, इति ब्राह्मणम् । भूमौ निहत्य सचैलोऽवगाहेत सद्यः शौचम् । अदन्तजाताना निखननं प्रणवेन वा दन्तजाताना व्याहृतिविधानेन वा । तस्य कः कर्मण उपक्रमो भवति । निर्मन्थ्य कुर्यान्निर्मन्थ्येन स्त्रीकुमाराणा दहेयुरित्युक्तत्वात् । अथ ग्राम्येणालंकारेणालङ्कृत्य स्मशानं निर्हृत्य प्रेतं तत्रैव निधायाख्यानं चितायामुपकल्पनम् । अपरेण चितामग्निमुपसमाधाय संपरिस्तीर्याऽऽज्यं विलाप्योत्पूय स्रुक्स्रुव निष्टप्य संमृज्य पर्णमयेन स्रुवेण मध्येन पलाशपर्णेन वा ' तत्सवितुर्वरेण्यम् ' इत्यनुद्रुत्यैकादशकृत्वो गृह्णाति—' प्रजापतये स्वाहा ' इति

प्रथमामाहुतिं जुहोति 'प्रेतायाऽमुष्मै यमाय वैवस्वताय स्वाहा ' इति द्वितीयाम् । 'दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तत्सर्वं जुहोति ' इति ब्राह्मणम् । पर्णमयं स्रुवं प्रेतस्योपरिष्टान्निधाय भूरिति मनसा ध्यायन्नुपोषेत् । भुव इत्युपस्थानं सुवरित्यवगाह्याप्सु निमज्ज्योन्मज्ज्योत्तीर्याऽऽचम्यैकमुदकाञ्जलिं ददाति । न चास्यात ऊर्ध्वं श्मशानं कर्तुमाद्रियेत नोदकक्रिया वा अयुग्मदिवसे त्रीन् पञ्च सप्त ब्राह्मणान्भोजयेदेकमपि वा । भवत्यामैर्वा मूलफलैः प्रदानमात्र हिरण्येन वा प्रदानमात्रं सर्वेषु होतृपरेषु स्वभास्थानेषु कुर्यात्—अमुष्मा उपतिष्ठा त्विति ( बौ० पि० ३-१-९) इति ॥ ३३ ॥

स्त्रियाश्चैवम् ॥ ३४ ॥

स्त्रिया इति पितृमेधयोग्या गृहमेधिनी(धी)या गृह्यते । एवमिति संनिहितोऽग्निकल्प इहातिदिश्यते । तस्यास्तु केशवपन नेष्यते । अग्न्याधेयादावपि प्रतिषेधात् । आह चात्र बौधायनः—'न स्त्रीणा केशवपन विद्यते' इति । तथा पत्युपनिपतनादिवरासनान्तमसंभवव्युदस्तम् । समानमन्यत् । जीवपत्न्या अपि मरणे स्रुवाहुत्यर्थं स्रुवश्चोत्पाद्य । आहवनीयादाग्निभिर्दाह्ययासंवेशनादिस्रुचाऽऽ(वा) हुत्यादिभिश्च स्युरुलपराजीश्च भवन्त्येव चरुश्रपणं दक्षिणाग्नौ । आहिताग्निवत्तथा दारुचिति कल्पनमुपोषण चाहिताग्निवदन्यत्सर्वमनाहिताग्निवदिति द्रष्टव्यम् ।

यस्त्वौपासनेन दह्यते निर्मन्थ्येन वा न तत्र केशवपनपत्युपतापनिपतनादिवर्जितं सर्वमनाहिताग्निवत् ॥ ३४ ॥

पुंलिङ्गवपनवर्जमित्येक इत्येके ॥ १२ ॥ ३५ ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे(पितृमेधापरपर्याये) ऽष्टाविंशप्रश्ने चतुर्थः पटलः ।

मन्यन्ते । तत्र पुलिङ्गमन्त्राः—सुवर्णं हस्तादित्यादयः पञ्च । अजो भाग इति षष्ठाद्येऽनुवाके । तृतीये तु, इदं त एक यौ तेऽश्वानौ इति मन्त्रौ । चतुर्थे यत्ते कृष्णः शकुन इति संवेशनस्तनुव उत्तिष्ठ प्रेहीति त्रयो मन्त्राः । षष्ठ अपेत वीतेति श्मशानमार्जनमन्त्रः । इत्येते द्वादशमन्त्रा वर्जनीयाः । अनुक्रान्तास्त्वेते बौधायनेन तन्मन्त्रसंयुक्तास्तु क्रियास्तूष्णीं क्रियन्ते । अस्मिन्सूत्रे शवाभिधानात्पुंलिङ्गोपपत्तिरिति भावः ।

वपनवर्जनवचनाल्लोमनखवापनमप्यस्मिन्पक्षे न भवति । अत्रैक इत्यभ्यासः प्रश्नसमाप्त्यर्थः ॥ १२ ॥ ३५ ॥

---

१ क इन्ग पुनर्दहनवं ।

इति सत्याषाढहिरण्यकेशिधर्मसूत्रव्याख्यायां महादेवशास्त्रिकृतायां प्रयोगवैजयन्त्यामष्टाविंशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

समाप्तोऽष्टाविंशः प्रश्नः ॥

अथैकोनत्रिंशः प्रश्नः ।

तत्र प्रथम पटल ।

अथ लोष्टचितिरुच्यते । सा तु स्वमते पुनर्दहनेन विकल्प्यते सर्वेष्वाहिताग्निषु । परमते त्वग्निचित्सु व्यवतिष्ठतेत्युक्तम् । तत्र विधिमाह—

**दिष्टगमनादयुक्ष्वहःस्वहोरात्रार्धमास[मास]र्तुषु संवत्सरे वा निदधाति ॥ १ ॥**

दिष्टशब्देन परलोक उच्यते । तं गच्छत्यस्मिन्निति दिष्टगमनं मरणदिवसः । एतच्च दहनदिवसाभिप्रायम् । प्रायशो मरणदिवस एव दहनस्य निवृ(र्वृ)त्तेरेवं निर्देशः । यस्य तु मरणदिवसादन्यस्मिन्दिवसे दहनं तस्य दहनदिवसादारभ्य दिवससंख्यानमित्यर्थः । अन्ये तु दशममहो दिष्टगमनमित्याचक्षते । तन्मन्दम् । वृद्धव्यवहारे तद्वाचित्वप्रसिद्ध्यभावात् । यथोक्तार्थे प्रसिद्धत्वाच्च । न चाऽऽशौचानुवृत्तावन्नादि वा न विरोधः(?) । दातुर्दोषाभावात् । प्रतिग्रहीतुस्तु सर्वत्र(दा) दोषात् । नग्नप्रच्छादनवश्राद्धादिवदुपपत्तेश्च । तस्माद्दहनदिवस एवात्रापूर्वो विधिः । तस्मादयुक्ष्वहःस्विति तृतीयादिनवमान्तानां चतुर्णामयुग्मदिवसानामन्यतमेऽहनीत्यर्थः । अर्धमासादिकल्पेषु तु न दशमेऽहनि शान्तिकर्म किंतु लोष्टचित्यन्त एवेत्युक्तम् । निदधातीत्यस्थिसंचयनस्थले निधानमुच्यते । तत्र निवपनाभावपक्षे यस्मिन्नहन्युपक्रमस्ततोऽपरेद्युरस्थिनिधानपूर्विका लोष्टचितिसमाप्तिः । दहनसद्भावे तु यस्मिन्नहनि दहनसमाप्तिस्ततस्तृतीयेऽहनि चयनसमाप्तिरिति विवेकः । एवं चयनात्तद्द्वितीयेऽहनि संचयनं धवनाभावश्च । तत्र पञ्चमेऽस्थ्नां निधानम् । सप्तमदिवसादिषु तु कालेषु धवनसद्भावेऽपि संभवत्यस्थ्नां निधानमित्यनुसंधेयम् ॥ १ ॥

**अप्रज्ञाते याथाकामी या माघ्याः पौर्णमास्याः फाल्गुन्याश्चैत्र्या वैशाख्या नैदाघ्या वोपरिष्टादमावास्या तस्याम् ॥ २ ॥**

तस्यां निदधातीत्यन्वयः । अप्रज्ञाते दिष्टगमने माघादीनां षण्मासानामन्यतमस्यान्तर्दशाहं संचयनोक्तकालिकं स्यात्तत्रास्थ्नां निधानं, न तु दहनदिवसादयुक्ष्वहःस्वित्यादिकालेषु । तत्र नैदाघ्या इति ग्रीष्मर्तुभवयोर्ज्यैष्ठाषाढ्योः पौर्णमास्योः सामान्यनिर्देशः । तेन

तयोरुभयोरत्र परिग्रहः । याऽमावा या तस्या निदधातीत्यनेन तदमावास्यासंबन्धि यजनीयमहर्विवक्षितम् । यथोपोषिताभ्या पर्वसु कार्य इति तथा चयनदिवसात्पूर्वेद्यु. कर्तव्यं संभारनिधान प्रति परि( हरि )ष्यत्त्वचार्यः—तदहरमावास्याया निदधाति [ इति ] बौधायनः । चयनदिवसात्पूर्वेद्युः कर्तव्या श्मशानयात्रा प्रत्याह—ते तया प्रययुर्यदहः पुरस्तान्न पश्चाच्चन्द्रमसं पश्येयुरिति । तस्मादप्रज्ञातमरणदिवसस्य यथोक्तानां षण्णाममावास्यानामन्यतमस्या यजनीयेऽहन्यस्थ्ना निधान चयनं चेति सिद्धम् । तत ऊर्ध्वं शान्तिकर्मेति च ॥ २ ॥

अयुजो युजो वाऽभ्रीरादायोत्तरतो लोष्टानवरुज्य दक्षिणा निर्हरन्ति थलार्थानिष्टकार्थान्वा ॥३॥

अभ्रिशब्दो दारुमयखनित्रवाची उत्तरतो दहनदेशस्याभ्रिभिर्लोष्टानुत्खायामात्या जननदेशात् । दक्षिणा निर्हरन्ति । किं प्रयोजनमेषा लोष्टानामित्यत्राऽऽह—स्थला. र्थानिति । स्थलार्थं दहनस्थलस्य चयनानुगुणमात्रा[ प्र ]क्षिप्त्यर्थम् । यथा वक्ष्यति—श्मशानस्य मात्रा त्र्यङ्गुलं त्र्यङ्गुलमित्यादि । ते तदेतल्लोष्टखननादि कर्म चयनमेव स्थलं पक्ष उपयोगः । तत्रेष्टकार्थे लोष्टान्तरं परिग्राह्यम् । इष्टकार्थपक्षे तु स्थलार्थं लोष्टान्तर. परिग्रहः । पक्षद्वयेऽपि खननदेशस्य च मध्येऽपि लोष्टा स्थाप्यैव सा पूर्वेद्युरेव क्रियते । तत्र धवनपक्षे तत्समाप्तिस्तत्परस्मिन्नहनि, इति वेदितव्यम् । अपि[ चे ]दितोऽनुक्रमणं तु धवनाभावपक्षाभिप्रायम् । एतदुत्तरत्र प्रदर्शयिष्यामः ॥ ३ ॥

पुरस्तादेव श्मशानायतनादोषधीरुद्धारयन्ति पाठ
पृश्निपर्णीकर्णिकारराजवृक्षकण्टकतिल्वकविभीत-
कार्कशरश्वदंष्ट्राध्यण्डा अन्याश्च क्षीरिणीरनुत्ख.
याः ॥ ४ ॥

पुरस्तादेव लोष्टखननात्पूर्वमेव दहनदेशात् पाठाद्योषधीरुद्धारयेदमात्याः । ओष. धिशब्दस्य च्छत्रिन्यायेन लक्षणावृत्तिर्द्रष्टव्या । आदितश्च बहुकालव्यवधानाद्दहनदेशे पाठादिप्ररोहणे सति तदुद्धरणं वेदितव्यम् । आसन्नकालिके तु चयने पाठादिप्ररोहणा. भावेऽर्थलोपान्न क्रियते ॥ ४ ॥

अपराह्णे श्मशानायतनं [ वि ]मिमीते पञ्च पञ्च प्रक्रमान्सर्वतः ॥ ५ ॥

परितो विमिमीते । तथा च पञ्चप्रक्रमसंमितं समचतुरश्रं लोष्टचितेरायतनं भवति ।

प्रक्रमो द्विपदस्त्रिपदो वेत्युक्तं शुल्बेषु । तत्र इष्टकासंख्यासु च तारतम्यं वक्ष्यते । तत्र यथार्हं संबन्धः प्रत्येतव्यः ॥ ५ ॥

**षट् पुरस्तादित्येके ॥ ६ ॥**

पुरस्ताद्विस्तार इत्यन्ये समामनन्ति । अस्मिन्पक्षे पञ्च प्रक्रमाः पश्चाद्विस्तरः । पार्श्वमार्जे चाऽऽर्जवेन तावदेवाक्षयार्थोत्तिलोदकं संपद्यते ॥ ६ ॥

**माने परीतान इष्टकोपधान इति दिक्संयोगः ॥ ७ ॥**

मानं मानं यदोक्तम् । परीतानो रज्ज्वा परिवेष्टनम् । इतिशब्दः प्रदर्शनार्थः । परिश्रयणादिरप्येतदेव परिवृणोति ॥ ७ ॥

**सर्वत्र पुरस्तादुपक्रमः ॥ ८ ॥**

प्रसव्यं दक्षिणतोऽपवर्गः (भ० पि० परि० २—१) इति । सर्वत्र मानादिषु दिक्संयोग एतेषु कर्मसु पुरस्तादुपक्रमः ॥ ८ ॥

**प्रसव्यं दक्षिणतोऽपवर्गः । त्रिवृता मौञ्ज्या । बाल्बज्या वा रज्ज्वा प्रसव्यावृतया त्रिः प्रसव्यं परितत्यायुग्भिरुदकुम्भैः स्ववोक्षितमवोक्षेद्यथा प्राणादुत्सर्पेत् ॥ ९ ॥**

मौञ्जीवचनमुत्तरविकल्पार्थानुवादः । तत्र प्रदक्षिणमावेष्ट्य प्रसव्य समस्येत्तदा त्रिवृता ज्या वाऽल्पज्या वा भवति । तया दक्षिणपूर्वस्या दिश्यारभ्य त्रिः प्रसव्यं परिचिनोति । ततो यथा तत्र त्याज तत. सर्वेऽपसर्पेयुः । एवमयुग्भिरुदकुम्भैः स्ववोक्षितमवोक्षेत दहनदेशम ॥ ९ ॥

अथ जन्तूत्सारणं हरन्निषेधात्तद्विधिमाह—

**न प्राणान(द)धि निवपेद्यदि प्राणान(द)धि निवपेज्जीवता ह तत्प्राणानधि निवपेत् ॥ १० ॥**

न कस्यचित्प्राणिन उपर्युपनिवपनादि कुर्याज्जीवन्तोऽपि मृतस्य पुत्रादयो म्रियेरन् । तस्मात्सर्वेषामेव जन्तूनामुत्सारणं कार्यम् ॥ १० ॥

**खार्यां तल्पे वा संभारानोप्य ॥ ११ ॥ (ख० १)।**

खाति(री) धान्यमानार्था । आवा परिशेषः । तल्प वेत्रादिमयम् । संभाराश्चरुप्रभृति(ती)न्युपयोक्ष्यमाणद्रव्याणि यानि श्मशानपर्यन्त कर्तव्यानि स्वरूपेणोपयोज्यानि च ॥ ११ ॥ (ख० १)।

**श्वोभूते पशुना तदर्थमन्नं संस्कृत्य तदभावास्यायां निदधाति ॥ १२ ॥**

तथा श्वोभूते करिष्यमाणब्राह्मणभोजनार्थैतस्मिन्नहनि पशुना सहान्नं संस्कर्तव्यम् । पशोर्विशसनादिकं व्रीहीणामवघातादिकं वाऽऽद्यं कर्तव्यम् । पाकस्तूत्तरेद्युरेव । इतरथाऽप्युषितत्वप्रसङ्गात्तदहरिति वचनम् । श्वोभूत इति । श्वश्चयनदिवसप्रतिपादकत्वप्रकटनार्थम् । अमावास्यायामित्यप्रज्ञातविषयविहितकालानुवाद इति पूर्वोक्तसर्वकालानपेक्षयाऽनन्तरपूर्वदिनप्रदर्शनार्थम् । एवममावास्याया संभारनिधानाद्यजनीयेऽहनि चयनं निवेदितव्यम् । न च विपर्ययः शक्यकल्पनः । संभारनिधानपूर्वकत्वनियमाच्चयनस्य । एतदग्निदेनापराह्णे क्रियते । अमात्यास्त्वेतस्मिन्काले वक्ष्यमाणमन्त्रानुसारेण चयनस्थल इष्टकाश्च कल्पयेयुः ॥ १२ ॥

एव धवनाभावपक्षे प्रयोग उक्तः । अथ धवनपक्षे प्रयोगमाह---

अथ यदि पुनर्धविष्यन्तः स्युस्तदङ्गारं तल्पं वा मिन्वन्ति ॥ १३ ॥

यद्युपबन्धाद्वैकल्पिकं धवनं तत्रैतस्मिन्पक्षेऽगारात्तल्प वा ग्रामाद्बहिः कल्पयन्त्यमात्याः । तल्पशब्देनात्र[न] शयनादिक्रिया किंतु धिष्णिय उच्यते । अथान्तरेण ग्रामं च श्मशानं चागारं वा विनिर्मितं कारितं भवति ( बौ० पि० १–१७–३ ) इति बौधायन· । ततश्च धवनपक्षे·प्रारम्भदिवस एतदादीनि कर्माणि कृत्वा समाप्ते धवमेऽपरेद्युः पूर्वोक्तानि कर्माणि कार्याणि । प्रारम्भदिवसश्च धवनदिनसंख्यानुसारेण, चयनदिवसादर्वाक्कल्प:(ल्प्यः) । यथैकाहधवनपक्षे चयनदिवसादर्वाक्चितेः पञ्चमेऽहन्युपक्रमस्तस्मात्परतस्तृतीयेऽहनि धवनसमाप्तिः । ततः परे लोष्टखननादि । ततः परे चयनमिति व्यक्तानुक्रान्त एव कर्मक्रमो बौधायनेनेत्यनुसधेयम् ॥ १३ ॥

तस्य पूर्वार्धे मध्ये पश्चार्धे वा पालाशीं मेथीं निध्नन्ति त्रिविषूकाम् ॥ १४ ॥

मेथी गवादिबन्धनार्था स्थूणा । त्रिविषूका त्रिशृङ्गा । ता निखातमूलां स्थापयन्त्यमात्याः ॥ १४ ॥

पुरस्तादेव शूद्रोत्पन्नो ब्रह्मबन्धुर्वा संवादितोपविशति ॥ १५ ॥

शूद्रोत्पन्न इत्युत्पन्नग्रहणं जात्यन्तरोपसंग्रहणार्थम् । ततश्चाशूद्रोत्पन्नस्य ग्रहणं भवति । ब्रह्मबन्धुर्य[दि] विद्वांस्त्रैवर्णिक उच्यते । तयोरन्यतरो धवनारम्भात्पूर्वमेव संवादितस्तमिहोपविशेत् । वक्ष्यमाणकर्मसंवादात्मकमवचोदित इत्यर्थः ॥ १५ ॥

---

। ख 'द्रो त्र' ।

या स्त्री मुख्यतमा तामाह वसतिं मया[1] सह पृच्छाति ॥ १६ ॥

या मृतस्त्रीणा मुख्या महिषी सुरूपा वा तामनन्तरोक्ता पुरुष एवं ब्रूयात् । वसतिं मया सह पृच्छति । [पृच्छतिः] तत्राऽऽदरार्थः । यथा नर्तुं पृच्छेन्न नक्षत्रमित्यादौ ॥ १६ ॥

न ददामीतीतरा प्रत्याह ॥ १७ ॥

इतरा सा स्त्री । न ददामीति त ब्रूयात् ॥ १७ ॥

एवं द्वितीये करोति ॥ १८ ॥

द्वितीय इत्युपक्रमदिवसापेक्षया । द्वितीयत्वमित्यभिप्रेतम् । तत्राप्येते प्रयुज्येति वचने कार्ये इत्यर्थः ॥ १८ ॥

एकरात्राय ददामीति तृतीये ॥ १९ ॥

तृतीयेऽहनि तथैव तेन पृष्टैकरात्राय ददामीति प्रतिब्रूयात् । एतच्च वचनमात्रम् । न तु तेन सह वास. कार्य एवमेतेनाऽऽह ॥ १९ ॥

चयनपक्षे प्रतिवचनमुक्तम् । अनेकाचयनपक्षेऽप्याह—

यावद्रात्रं वा चविष्यन्तः स्युः ॥ २० ॥

यावदन्त्याहनि वा चयन चिकीर्षयन्ति तां वा सख्यामिह ब्रूयात् । त्रिरात्राय पञ्चरात्रायेति । ताश्च सख्या वक्ष्यन्ते । अपि वा त्रिस्रो रात्रीरित्यादिना ॥ २० ॥

एतस्यां वाचि मेध्यामूले शरीराणि निदधाति ॥ २१ ॥

एतस्या प्रतिवचनात्मिकाया वाचि प्रयुज्यमानायामध्वर्युर्मेध्यामूलदेशे तस्यास्थीनि तूष्णीं निदधाति ॥ २१ ॥

शतातृण्णं च कुम्भं त्रिविषूके ॥ २२ ॥

शतातृण्णमघोभागे शतच्छिद्र कुम्भ त्रिविषूके शृङ्गत्रयान्तु( न्तरा )ले निदधाति॥२२॥

तस्य बिलं चर्मणा कुशैः परिणद्धं भवति ॥ २३ ॥

तस्य [ बिलं ] कुम्भस्य चर्मणा कुशैश्च परिवेष्टितं भवति । न तु संनिहितं भवति ॥ २३ ॥

तस्मिन्दधि वाजिनमिश्रमानयति वैश्वानरे हवि-रिदं जुहोमीति ॥ २४ ॥

तस्मिन्कुम्भे वाजिनं नाम दधिसंसृष्टस्योष्णस्य पयसो द्रवांशः । तस्मिन् दधि तद-स्थ्नामुपरि सेच्यते । बिभरत्पिन्वमान इति मन्त्रान्तः ॥ २४ ॥

---

1 ख ग. 'या साविच्छती' ।

विक्षरन्तमभिमन्त्रयते—द्रप्सश्च[स्क]न्देम१ समुद्रमिति द्वाभ्याम् ॥ २५ ॥

व्योमन्निति द्वितीयमन्त्रान्तः । छिद्रैरस्थिषु वाजिनमिश्रं दधि विक्षरन्तकुम्भमित्यर्थः ॥ २९ ॥

चत्वारो ब्रह्मचारिणोऽन्ये वा ब्राह्मणाः१ प्रयता दक्षिणान्केशपक्षानुद्ग्रथ्य२ सव्यान्प्रस्रस्य दक्षिणा नूरूनाघ्नानाश्चर्माऽऽघ्नन्तः सिग्भिरभिधून्वन्तस्त्रिः प्रसव्यं परियन्त्यजिनमेध्यजिनमे[ध्यजिनमे]धीति३ ॥ २६ ॥

ब्रह्मचारिणोऽसमावृत्ता व्रतिनः । अन्ये वा ब्राह्मणाः । ब्राह्मणपुत्रा अन्ये वा । नित्यब्रह्मचारिण इत्यर्थः । पितृमन्तोऽनुत्पादितपुत्रा विवक्षिताः । चर्माऽऽघ्नन्त इति कुम्भोपरिवेष्टत चर्म गृह्यते । मेधिं परियन्ति । अजिनमेधीत्यस्य त्रिः पाठस्त्रिप्रयोगार्थः । तत्र प्रथमे परिगमनपर्यायमन्त्रः ॥ २६ ॥

एवममात्याः स्त्रियश्च ॥ २७ ॥

त्रिः प्रसव्यं परियन्तीत्यन्वय. । अत्रापि कनिष्ठप्रथमा ज्येष्ठजघन्या इत्यादिनियमः प्रत्येतव्यः ॥ २७ ॥

उत्तराभिः सिग्भिर्मन्त्रवर्जं पूर्ववत्परिक्रमणम् ॥ २८ ॥

सव्यानुद्ग्रथ्येत्यादिपूर्ववत्सिक्चर्मवर्जमिति धून्वतश्चर्माहनन वर्जयित्वेत्यर्थः ॥२८॥

संप्रवदन्ति वीणाः शङ्खा४न्नालीकान्तू(कांस्तु)णापणवान्नृत्यगीतवादित्राणीति ॥ २९ ॥

वीणादयस्तद्विद्भिर्वाद्यमानाः संप्रवदेयुः । धनवकाले युगपच्छब्दायेरन् । नृत्यन्ति च नर्तक्य इति शेषः । तदनु नर्तक्यश्चानुनृत्येयुः ( बौ० पि० १-१७-७ ) इति बौधायनः ॥ २९ ॥

प्रातर्मध्यंदिनेऽपराह्णे [इत्येवं रात्रेस्त्रिरपरपक्षस्य] तिस्रो रात्रीः [ धुवन्ति ] ॥ ३० ॥

चत्वारो ब्रह्मचारिण इत्याद्युक्तोऽयं विधिर्नवधा विभक्तः स्याद(क्तस्या)ह्नः प्रथममध्यमोत्तमेषु भागेषु क्रियत इत्यर्थः । एवं तिस्रो रात्री(त्रय)स्त्रिरात्राव-

---

१ ख. ग. °णा द्° । २ क. °णामुखान्के° । ३ ख. ग. °नमोध्यजिनमोध्यजिनमोधीति । ४ ख. ग. शङ्खा नालीतूणवा ।

(श्रम)प्येवं प्रथममध्यमोत्तमेषु नवमाशेषु क्रियते । तथा चैकस्मिन्नहनि षट्कृत्वः क्रियते । अपि वा तिस्रो रात्रीः संप्रवदन्ति (धुवन्ति) ॥ ३० ॥

पञ्च सप्त नवैकादश वाऽर्धमासं मास वत्सरमु हैके धुवन्त्यन्नं च यथाशक्ति देयं तथा द्रव्याणि ॥ ३१ ॥

तिस्रो रात्रीरित्यहोरात्रलक्षणा । एव पञ्चसप्तनवैकादशाः । अर्धमासमिति पञ्चदशाहोरात्राः । मासमिति त्रिंशतीः(त्)। तिस्रो रात्रीरित्ययं विकल्पो दिष्टगमनादयुक्ष्वहः स्वित्यस्यैव द्रष्टव्यः । पञ्चसप्तेत्यादयस्त्वर्धमासादिविकल्पविषयाः प्रत्येतव्याः । अयं कल्पः सामर्थ्यात् संवत्सरनिधानपक्षे द्रष्टव्य । अप्रज्ञातविषयत्वं संवत्सरधवनकल्पो न भवति । असंभवव्युदस्तत्वात् । अन्न च यथाशक्ति देयम् । चकाराद्धवनपक्ष एवायं विधिः । धवनदिवसेषु यथाशक्त्यन्नं देयं ब्राह्मणेभ्यः । तथा द्रव्याणि । तथा दृष्टद्रव्याणीत्यापस्तम्बः । तथा दृष्टं हिरण्यादीनि च द्रव्याणि धवनदिवसेषु देयानि शक्त्यनुसारेण ॥ ३१ ॥

उत्तमेऽहनि द्रव्यत्याग इत्येके ॥ ३२ ॥

उत्तमे धवनदिवस एव द्रव्यत्यागो धवनदिवसेष्वित्यन्ये समामनन्ति । धवनाभावपक्षे तूत्तम एवाहन्यन्नमेव देयमिति प्रदर्शितम् । एवं धवनपक्षे प्रयोगारम्भ उक्तः ॥ ३२ ॥

अत ऊर्ध्वं पक्षद्वयसाधारणप्रयोग उच्यते—

एतस्मिन्नेवाग्नौ तूष्णीमुपचरितान्पञ्च चरूँ श्रपयन्ति ॥ ३३ ॥

एतस्मिन्छवाग्नावेव ॥ ३३ ॥

तेषामभिघारणानि घृतँ श्रितं क्षीरं दधि मध्वित्यपूपाभिधाना भवन्ति ॥ ३४ ॥

पञ्चचरूणा यथाक्रममेतानि द्रव्याण्यभिघारितानि भवन्तीत्यापस्तम्बः । श्रितं पक्वं पयः शृत क्षीरमेतेषामेकैकेन यथाक्रमं ततश्चरुमभिघारयेदित्यर्थः । अपूपाभिधाना भवन्ति सर्वेऽप्येते चरव एकैकेनापूपेन विहिताश्च भवन्ति ॥ ३४ ॥

---

१ ख. ग. 'सप्त एकाद' । २ ख 'पाधा'। ग. 'पानिधा' ।

अपररात्रे गच्छन्त्याग्निः प्रथमोऽर्थो(थो)दकुम्भोऽनड्वाञ्छरीराणि संभारा इति येन चान्येनार्थी भवति ॥ ३५ ॥

अपरेद्युरध्वर्युरमात्यादयश्च दहनदेशं गच्छन्ति । तत्र शवाग्निः श्मशानात् । ग्राम_मर्यादा प्रत्याह—तारततः परमध्वानमग्रतो नीयते । तदनूदकुम्भो यद्गतेनोदकेनोदकार्थाः करिष्यन्ते । अनड्वाहः कर्षणार्थाः । शरीराण्यस्थीनि । तान्यस्थीनि कुम्भेऽवधायाभिधीयन्ते । संभाराश्चर्वादयः खर्या( पेरा )दौ निक्षिप्य नीयन्ते येन चान्येनेति तिललाङ्गलानि गृह्यन्ते ॥ ३५ ॥

न हीनमन्वाहरेयुरन्तरा ग्रामं श्मशानं चैतमग्निमिन्धान आस्ते ॥ ३६ ॥ ( ख० २ ) ।

ते सर्वे ग्रामश्मशानयोर्मध्यदेश गत्वा तत्रैव न हीनमन्वाहरेयुर्निवसेयुः । तत्राध्वर्युरेतमग्निं प्रज्वालयन्नासीत ॥ ३६ ॥ ( ख० २ ) ।

व्युष्टायाᳪ हरिण्या पलाशशाखया शमीशाखया वा श्मशानायतनᳪ संमाष्टर्यपेत वीतेति ॥ ३७ ॥

दद्वात्ववसानमस्मा इत्यन्तः । व्युष्टाया प्रभाताया रात्रौ सर्वेऽग्निवर्जं श्मशानं ततोऽध्वर्युरेवं संमाष्टर्यपेत वीतेति । क्रमप्राप्तोऽयं मन्त्रः ॥ ३७ ॥

दक्षिणतः शाखामुदसित्वाऽप उपस्पृश्योद्धत्यावोक्ष्य सचितैतानि शरीराणीति सीरं युनक्ति षड्गवं द्वादशगवं चतुर्विᳪशतिगवं वा ॥ ३८ ॥

तेभिर्युज्यन्तामघ्निया इति मन्त्रान्तः । सीरं लाङ्गलादिकर्षणद्रव्यसमुदायः । तत्र द्विपदप्रक्रमपक्षे षड्गवं द्वादशगवं सीरं भवति । त्रिपदप्रक्रमपक्षे तु चतुर्विंशतिगवमिति यथार्हं विनिवेशो द्रष्टव्यः ॥ ३८ ॥

यावद्गवं सीरं तावन्ति शतानीष्टकानां माना[नि] भवन्तीति विज्ञायते ॥ ३९ ॥

यावद्गवं सीरं तावन्ति शतानीष्टकाना मोसंख्यावच्छिन्नशतसंख्या भवन्ति । तद्यथा—षड्गवे षट्शतानीष्टकानाम् । द्वादशगवे द्विशताधिकं सहस्रम् । चतुर्विंशतिगवे तु चतुःशताधिकं सहस्रद्वयम् । आमा भवन्तीति श्रवणात्ता अप्यग्निपाको न कार्यः । अत एव लोष्टाचितिरित्याख्या ॥ ३९ ॥

---

१ ख. नामधेष्टकानां पादेष्टकाना मानानि भ° ।

तस्याश्चतुर्विंशेन भागेनेष्टकाः करोति पादेष्ट-
काश्च ॥ ४० ॥

तस्याः श्मशानभूमेः पञ्चप्रमा[णा]याश्चतुर्विंशांशेन न पादषडङ्गुलेन मुख्या इष्टकाः करोति । तदर्धप्रमाणेन तु साष्टाशत्र्यङ्गुलेन तासा पादेष्टकाश्च । तत्र पादेष्टकाः संख्यापूरणार्थास्तस्याश्चतुर्विंशेनेति । षड्गवद्वादशगवकल्पयोरेवायं विधिः । चतुर्विंशति-गवपक्षे त्वयमसंभवो व्युदस्तः । ततश्च षट्त्रिंशेन भागेन मुख्या इष्टकाः कार्याः । तदर्धप्रमाणेन च पादेष्टका इति द्रष्टव्यम् । एवं समचतुरश्रपक्ष इष्टकाक्लृप्तिः । षट् पुरस्तादित्येके इति पक्षे वक्रा अपि कतिचिदिष्टका इति त्रिविधा इष्टका वेदितव्याः । तत्र संग्रहः—

मुख्याना करणं कार्यं पादाधिकषडङ्गुलम् ।
तदर्धमानं पाद्याना चतुरश्र ऋजा तु(नुरतु) सः ॥ इति ।

एवं समचतुरश्रक्षेत्रकरणद्वयमेव भवति । इष्टकासंख्या तु षड्गवः स्यात् ।

पञ्चविंशतिसंख्यानामष्टषाष्टियुक् तथा ।
तासा तु द्वादशगवे साष्टषष्टि शतत्रयम् ॥
स्याच्चतुर्विंशतिगवेऽष्टाविंशनवशत्यपि ।
पक्षद्वयेऽपि पाद्याभिः तत्तत्संख्या तु पूर्यते ॥ इति ।

तत्र षड्गवे द्वात्रिंशत्पादेष्टकाः । द्वादशगवे द्वात्रिंशदुत्तराण्य(ण्य)ष्टौ शतानि । चतुर्विंशतिगवे तु द्विसप्तत्युत्तरचतुःशताभिराधिकं सहस्रमिति । तत्तत्संख्याविशेषसंमिताः पादेष्टका वेदितव्याः ।

अथ षट् पुरस्तादित्येक इति वक्रक्षेत्रविषये ब्रूमः ।

वक्रक्षेत्रे त्रिकोणं तु तृतीयं करणं भवेत् ।
तद्भावाः पार्श्वयोः पश्चात्प्रक्रमाधिकयोर्मताः ॥

वक्रक्षेत्रपक्षे दीर्घत्रिकोणात्मकं तृतीयं करणम् । पूर्ववन्मुख्याना पादेष्टकाना तृतीय-करणजन्या वक्रा इष्टकाः पार्श्वयोरेवोपधेयाः । तत्र मध्यतः पञ्चप्रक्रमसंमिते समचतुरश्रे विच्छिन्ने सति पार्श्वतो यस्मिन्क्षेत्रेऽवशिष्यते, तयोर्वक्राभिः प्रच्छादनमित्यर्थः ।

---

१ ख. °विंशतिभा°।

अथ वक्रेष्टकाप्रमाणमुच्यते। व्यासः पञ्चाङ्गुलो व्यायामः पञ्चदशाङ्गुलदीर्घस्या क्षणया भेदात्तृतीयं करण भवेत्।

तदिष्टकाना नवनवं(मं) वक्रक्षेत्रस्य पार्श्वयोः।
षड्गवे द्वादशगवेऽप्येव स्यात्पार्श्वतश्च यः॥

यस्य दीर्घचतुरश्रस्य विस्तारः पञ्चाङ्गुलो भवत्यायामस्तु पञ्चदशाङ्गुलस्तस्या॰ क्षणया भेदसिद्धघर्ममात्रवक्रस्य तृतीयकरणस्य प्रमाणम्। तदुपान्ता नवनवेष्टका एकैक॰ स्मिन्पार्श्व उपधेयाः। तत्र पार्श्वादारभ्यैका तिस्रः पञ्चेति क्रमेण न्यासः। एषा क्लृप्तिः षड्गवे द्वादशगवे च द्रष्टव्या। व्यासः पाद॰। तयोर्मुख्याना पाद्याना च संख्याविवेक उच्यते—

मुख्याना स्यात्पञ्चशती चतुःसप्ततिसंयुता।
अष्टपादेष्टकाश्चेति षड्गवे त्वेष निर्णयः॥
त्रिशती द्वादशगवे चतुःसप्ततिसंयुता।
मुख्यानामथ पाद्यानामष्टशत्यष्टभिर्युता॥

अथ वक्रक्षेत्रविषये चतुर्विंशतिनवपक्षे विधिरुच्यते।

([1] चतुर्विंशो ग्रस्य तस्याक्षणया भेदात्तृतीयं भवेत्।
तदिष्टकास्तु षट्त्रिंशषट्शत्पार्श्वयोर्मता॥
पञ्चाशन्नवतीमुख्यानामिह स्पष्टदर्शिता।
पाद्या सहस्र षट्सप्तत्युत्तरत्रिशताधिकम्॥
स्याच्चतुर्विंशति हि नवपक्षेऽप्येष निर्णयः॥ इति)।

अथ वक्रेष्टका॰ पश्चादारभ्यैका तिस्रः पञ्च सप्तनवैकादशे(षु) तु प्रतिपार्श्वं क्रमे॰ णोपधेयाः। सुगममन्यत्। सर्वा अश्वेतगुणा इष्टकाः पूर्वैर्युरेव कार्या इत्युक्तम्। केचित्तस्याश्चतुर्विंशेनेत्यादिसूत्रं न पठन्ति॥ ४०॥

वारणं काष्ठमयम्॥ ४१॥

लोष्टचितौ यत्काष्ठमयं लाङ्गलादि तद्वारणं भवति॥ ४१॥

मौञ्जं रज्जुमयम्॥ ४२॥

भवतीति शेषः॥ ४२॥

वचनादन्यत्॥ ४३॥

वचनात्त्वेतदुभयं मपोद्यते। उदुम्बरशाखयाऽवोक्षति शाखजया वेत्यादिभिः॥४३॥

---

1 तृतीयं करणं ( ) एष चिन्हान्तर्गतग्रन्थोऽसंदर्भः।

**शुनं वाहा इति द्वाभ्यां प्रसव्यावृत्ताः षट् पराचीः सीताः कृषति ॥ ४४ ॥**

तेनेमामुपसिञ्चतमिति मन्त्रान्त. । अत्र दक्षिणापवर्गार्थं सर्वा. सीताः प्रसव्यावृत्ताः षट् पराची इत्यारभ्य कर्षणीयाः । तत्र शुनं वाहा इति द्वे ऋचौ सकृदुक्त्वा षडावृत्ताः कृषति । एकैकस्या कृष्टाया प्रसव्यं बलीवर्दानावर्तयति । न च प्रत्यावृत्तिसमये कर्षणम् । पराचीरित्यनावृत्तिवचनात् ॥ ४४ ॥

**उद्यम्य लाङ्गलं सीते वन्दामह इति सीताः प्रत्यवेक्षते ॥ ४५ ॥**

सुफला ससीत्यन्तः । षष्ठा(सुस्फा)लिताया कृष्टाया न पुनरावर्तयेत् । माविकर्षणाभावात् । तेन वदन्ते(न्ति) लाङ्गलमुद्यम्य सीते वन्दामह इत्यनयाऽऽवर्त्यमानया सीताः क्रमेण प्रत्यवेक्षते । सीत इत्येकवचनान्न तु युगपत्प्रत्यवेक्षणम् ॥ ४५ ॥

**सवितैतानि शरीराणीति मध्ये कृष्टस्यास्थिकुम्भं निदधाति ॥ ४६ ॥**

शं भवेत्यन्तः । सवितैतानीति क्रमप्राप्तया कृष्टस्य क्षेत्र(स्य) मध्येऽस्थिकुम्भ निदध्यात् । तत्र हविर्यदि निवपनं कृतं तदा पुनरस्थीनि कुम्भेऽवस्थाप्यातिवर्तव्यानि ॥ ४६ ॥

**विमुच्यध्वमघ्निया देवयाना इति दक्षिणेऽंसे बलीवर्दान्विमुच्य तान्दक्षिणेनोत्सृज्याध्वर्यवे ददाति ॥ ४७ ॥**

सुवरगन्मेत्यन्तः । विमोचनेऽध्वर्युणा कृते तस्य तत्र पुत्रादिस्तान्दक्षिणेनोत्सृज्य ततः प्रचाल्याध्वर्यवे दद्यात् । यत्र तु पुत्रादिरेव कर्ता भवति तत्र दानम् ॥ ४७ ॥

**उदपात्रेणोदुम्बरशाखयाऽवोक्षति प्र वाता वान्तीति ॥ ४८ ॥**

रेतसाऽवतीति मन्त्रान्तः । उदपात्रस्थमुदकमुदुम्बरमुखेण स्रावयति । सर्वक्षेत्रं प्र वाता वान्तीति मन्त्रेणावोक्षति ॥ ४८ ॥

**पात्र्यां सर्वौषधीः संयुत्य वपति यथा यमायेति ॥ ४९ ॥**

सर्वौषध्यो ग्राम्याश्चाऽऽरण्याश्च तिलमाषाद्याः संसृज्य वपेत् । न तु पृथक् । भूरव इति मन्त्रान्तः ॥ ४९ ॥

चितः स्थ परिचित इत्यपरिमिताभिः शर्कराभिः परिश्रित्याऽऽप्यायस्व समेतु त इति सिकता व्यूहति ॥ ५० ॥

चितः स्थ परिचित इति सिकता व्यूहति। चितः स्थ परिचित० तया देवतया (तै० आ० ४–६) इति क्रमप्राप्तोऽयं मन्त्रः। तत्र तया देवतयेत्यग्निकाण्डस्याऽऽम्नातस्य तया देवतया सह साकाङ्क्षत्वात् 'अङ्गिरस्वद्ध्रुवा सीद' इति सर्वत्रानुषजतीति पूर्वमुक्तत्वात्तापेक्षते बहुवचनेन चोह॰। ध्रुवा सीदतेति बौधायनीये (१–१८–११) तथैव पाठाल्लोकं पृणास्वग्निकाण्डाम्नाततया देवतान्वयाभ्युपगमाच्च। अत्रापि तिस्रस्तिस्रः संहिता मन्त्रावृत्त्या स्थाप्याः। प्रसव्यं त्विह परिश्रयणम्। ततस्तूष्णीं सिकता न्युप्य, आप्यायस्व समेतु त इति ब्राह्मणस्य मृतस्य सिकता व्यूहति ॥ ५० ॥

उत्तरया त्रिष्टुभा राजन्यस्य ॥ ५१ ॥

सं ते पयाꣳसीत्येतया ॥ ५१ ॥

जगत्या वैश्यस्य[१] ॥ ५२ ॥

असावि सोम इत्येतया ॥ ५२ ॥

विधृतिलोष्टान्प्रतिदिशमन्वीक्षमाण[२] उपदधात्युत्ते तभ्नोमीत्येतैः प्रतिमन्त्रं तिलमिश्राभिर्धानाभिस्त्रिः प्रदक्षिणं परिकिरत्येणीर्धाना इति ॥ ५३ ॥

सन्त्वनपस्फुरन्तीरित्यन्तः। अत्रापि पूर्वस्या दिश्यारम्भः। स्पष्टमन्यत् ॥ ५३ ॥

अभिवान्यायै दुग्धस्यार्धशरावे[३] सक्तूंस्त्रिः प्रसव्य[४]मनारभ्योपमथितमामपात्रस्थं दक्षिणत उपदधात्येषा ते यमसादन इति ॥ ५४॥

असावित्यन्तः। अभिवान्या धेनुविशेषः। या मृतवत्साऽन्यस्या वत्सेन दुग्धं पिबति सा। तस्या दुग्धस्य क्षीरस्य संबन्धिनि शरावार्धपरिमिते दुग्ध इत्यर्थः। तस्मिंस्त्रिः प्रसव्यं मन्थः कार्यः। तस्मिन्नसशलाकया रज्जुवेष्टितया त्रिः प्रसव्यमस्पृशन्नुपमन्थेदित्यर्थः। तदा पात्रस्थं कृत्वैषा ते इत्यनया दक्षिणे क्षेत्रपार्श्वे उपदधाति। तत्र नामासाविति संबुद्ध्या मृतस्य नाम गृह्णीयात् ॥ ५४ ॥

---

१ क. °स्य च। २ ख. °मनन्वी°। ३ ख ग. °वे सक्तूंस्त्रिः। ४ ख. °सव्यं मथित्वा पा°।

समूलं बर्हिर्दक्षिणाग्रं स्तृणातीदं पितृभ्यः प्रभरे-
मेति ॥ ५५ ॥

संविदान इत्यन्तः । दक्षिणाग्रं स्तृणाति । तस्त्वमारोहासो, इत्यत्र संबुद्ध्या मृतस्य नाम गृह्णीयात् । मध्ये क्षेत्रस्य स्तरणः ॥ ५५ ॥

पालाशान्परिधीन्परिदधाति मा त्वा वृक्षाविति
पूर्वापरावुत्तरया दक्षिणोत्तरौ ॥ ५६ ॥

ते तु गुनमानमात्रा अपि तच्छरीरपरिधानार्थत्वात् । ततश्च दर्भानमितः परिधेयाः । मा त्वा वृक्षाविति पूर्वापरौ परिधी युगपद्दक्षिणाग्रौ निदध्यात् । उत्तरया दक्षिणोत्तरौ मा त्वा वृक्षावित्युत्तरयर्चा युगपद्दक्षिणोत्तरौ प्रागग्रौ निदध्यात् ॥ ५६ ॥

मध्ये नलेषि( षी )कां निदधाति नलं प्लव-
मिति ॥ ५७ ॥

प्रतरोत्तरेत्यन्तः । सा च दक्षिणा दर्भेषु निदध्यात् ॥ ५७ ॥

पुराणेन सर्पिषा शरीराणि सुसंतृप्तानि संतृप्यो-
त्तरत आसीनोऽनन्वीक्षमाणो दर्भेष्वस्थीनि निव-
पति सवितैतानि शरीराणीति ॥ ५८ ॥

शं भवेत्यन्तः । अनन्वीक्षमाणोऽनभिवीक्षमाणः । सवितैतानीति क्रमप्राप्तोऽयं मन्त्रः ॥ ५८ ॥

यथाऽङ्गमङ्गानि संनिधायायैनमुपतिष्ठते षड्ढोता
सूर्यं ते चक्षुरिति ॥ ५९ ॥

शरीरैरित्यन्तः । यथाऽङ्गं यथाशरीरम् । अङ्गान्यस्थीनि संनिधानानि । यथा दक्षिणाशरीर उत्तानः स्यात् । षड्ढोतेति 'सूर्यं ते चक्षुः । वातं प्राणः' ( तै० आ० ३-४ ) इत्यस्य निर्देशः । इयानेव भेदः । ते तव स्वभूतं चक्षुरिन्द्रियं सूर्यं साकाङ्क्षत्वात्समानार्थायामृचि दर्शनाच्च गच्छत्विति गम्यते । एवं वातं प्राण इत्यादावपि द्रष्टव्यम् ॥ ५९ ॥

भुक्तभोगेन वाससाऽस्थिकुम्भं निमृज्योपर्युपरि
शिरो दक्षिणा व्युदस्यति परं मृत्यो अनु परेहि
पन्थामिति ॥ ६० ॥

---

१ ख. ग. 'था लिङ्गम' ।

भुक्तभोगं परिहितजीर्णम् । तेन कुम्भस्याभ्यन्तरं संमृज्य तस्य शिरस उपरि दक्षिणाऽपास्यति । मोत वीरानिति मन्त्रान्तः ॥ ६० ॥

**अथास्य कपालानि सुसंभिन्नानि संभिनत्ति यथे-षूदकं न तिष्ठेत् ॥ ६१ ॥**

व्यक्तमेतत् ॥ ६१ ॥

**भुक्तभोगेन वाससा शरीराणि प्रच्छाद्योदपात्रे-णोदुम्बरशाखयाऽवोक्षति शं वात इति ॥६२॥(ख०३)।**

दिशः शम्मा इति मन्त्रान्तः । येन कुम्भो निमृष्टस्तेनैव प्रच्छादनम् । शं वात इति । क्रमप्राप्तोऽयं मन्त्रः ॥ ६२ ॥ ( ख० ३ )।

**इष्टकाः प्रतिदिशम( न )न्वीक्षमाणा उपदधाति पृथिव्यास्त्वा लोके सादयामीत्येतैः प्रतिमन्त्रं मध्ये पञ्चमीं तां दक्षिणेन षष्ठीम् ॥ ६३ ॥**

इष्टकाः षडिह विवक्षिताः । एतैः प्रतिमन्त्रमिति षण्मन्त्रसंयोगात् । अमुष्येत्यत्र षष्ठ्या विभक्त्या मृतस्य नाम ग्राह्यम् । अङ्गिरस्वद्ध्रुवा सीदेति मन्त्रान्तः । पृथिव्यास्त्वा इत्यादिषु लोके सादयामीत्यादि पूर्ववत् । नाकस्य त्वा पृष्ठ इत्यत्र तु सादयामीति । न तु लोकशब्दोऽ( ब्द आ )धारान्विततया तदपेक्षाविरहात् । एतेन मध्ये पञ्चमीमुपधाय तां दक्षिणेन बध्नस्य त्वा विष्टप इति षष्ठीमुपदध्याद्दक्षिणे । चतुर्थे पञ्चमे च सादयामीत्याद्येवानुषज्यते ॥ ६३ ॥

**एवं चरूनपूपवान्घृतवानिति प्रतिमन्त्रम् ॥६४॥**

अपूपवान्घृतवानित्यत्र तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति प्रथमेन मन्त्रेण पुरस्तात्प्रथमं चरुमुपदधाति । अपूपवान्घृतवानिति द्वितीयेनोत्तरतः । तत्र द्वितीये शृतवाञ्शृतभागा. शताक्षरा इति विकारः । तृतीयेन पश्चात्क्षीरवान् क्षीरभागाः सहस्राक्षराश्चतुर्थेन दक्षिणतः । दधिवान्दधिभागा अयुताक्षरा इति । अथ मध्ये पञ्चमे मधुवान्मधुभागा च्युताक्षरा इति । सर्वत्रासाविति संबुद्ध्या मृतस्य नाम गृह्यते ॥ ६४ ॥

**अतिलाभिर्धानाभिस्त्रिः प्रसव्यं परिकिरत्येतास्ते स्वधा अमृताः करोमीति ॥ ६५ ॥**

करोत्वित्यन्तः । अतिलाभिरिति वचनं पूर्वेद्युरेव सतिलानामतिलाना धाना(ना) पृथगुपकल्पनार्थम् ॥ ६५ ॥ ॥

---

१ ख. °माण इ° । २ ख, ग °वानि° ।

ओषधीस्तम्बान्प्रतिदिशमनन्वीक्षमाणा(ण) उप-
दधाति त्वामर्जुनेति प्रतिमन्त्रम् ॥ ६६ ॥

ओषधि*स्तम्बं च मान्त्रवर्णिकाः । ते चरूणा दिक्षूपाहितानामुपर्युपर्युपधीयन्ते । चरुभ्योऽपिधातवे ( तै० आ० ४-९ ) इति मन्त्रलिङ्गात् ॥ ६६ ॥

तेषां मन्त्रलिङ्गैर्द्रव्यनियमः ॥ ६७ ॥

तेषामोषधीनामपि मन्त्रलिङ्गैर्नियमोऽवगन्तव्यः । यथा—त्वामर्जुनेति श्वेतदूर्वा-स्तम्बम् । दूर्वाणामिति दूर्वास्तम्बः । काशानामित्यश्ववालस्तम्बः । दर्भाणामिति कुशस्तम्बः ॥ ६७ ॥

लोकं पृणेति लोकंपृणा उपदधाति ॥ ६८ ॥

असीषदन् इत्यन्तो मन्त्रः । लोकं पृणेत्येकयैवर्चा तया देवतयान्तः । तयाऽऽवर्त्यमानयाऽवशिष्टा इष्टकाः । सर्वा इष्टका एकैकश उपदध्यात् । तासामपि पुरस्तादुपक्रमः । प्रसव्यं दक्षिणतोऽपवर्ग इति सूत्रात् ॥ ६८ ॥

उत्तरया पुरीषेणानु[वि]किरति ॥ ६९ ॥

उत्तरया ता अस्य सूददोऽहसः० दिव इत्यन्तः । सर्वां चितिं विकिरेत् ॥६९॥

श्मशानस्य मात्रा द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं
प्रादेशो वितस्तिर्जानुदघ्नमूरुदघ्नं [स्फिग्दघ्नं] वैषो-
त्तमा मात्रा श्मशानस्य ॥ ७० ॥

दघ्नशब्दः प्रमाणवाची । वेति विकल्पप्रदर्शनार्थम् । श्मशानशब्देनात्र लोष्टचितेः स्थानमुच्यते । तस्याऽऽमायामविस्तरौ प्रागेवोक्तौ । इदानीमूर्ध्वप्रमाणमुच्यते । तत्र द्व्यङ्गुलादीनामष्टानामन्यतममूर्ध्वप्रमाणं स्थलस्य तस्योपरीष्टकाश्चेतव्याः । प्रादेशो द्वादशाङ्गुलः । वितस्तिस्तूर्ध्वबाहो. पुरुषस्योर्ध्वप्रमाणदशमांशो वचनान्तरात् । क्वचि-द्वैषम्यसंभवात्पृथग्वचनम् । स्फिक्शब्दो जघनवाची ॥ ७० ॥

उत्तमां मात्रां मा(नाध्या)प्नुयात् ॥ ७१ ॥

स्फिग्दघ्नादध्युत्सेधः स्थलस्य न कार्यः ॥ ७१ ॥

यावत्पु( र्वा पु )रस्तात्ततोऽनन्तरां पश्चात् ॥ ७२ ॥

---

* ओषधिशब्दस्तु ह्रस्वेकारान्तो ङीषन्तश्चेति कोश उभयथाऽपि संदृश्यते ।

---

१ ख ग °पृण उ° । २ ख. ग °न्तरं प° ।

ततोऽनन्तरा मात्रा पूर्वान्ते श्मशानस्येच्छति । ततोऽनन्तरामुत्तरां मात्रा परान्ते कुर्यात् । यथा स्फिग्दघ्नं पुरस्ताच्चेदूरुदघ्नं पश्चाद्यदि प्रादेशो वितस्तिः पुरस्तात्तदा चतुरङ्गुलं पश्चादिति ॥ ७२ ॥

अपि वा द्व्यङ्गुलं पुरस्तात्समं पश्चादित्येके ॥ ७३ ॥

अत एवावगम्यते । चित्याधारस्थलं द्व्यङ्गुलं पुरस्तात्समं भूमेः पश्चादिति । न तु चितिसहितस्य स्थलस्येति । विकल्पोऽयं विधिः शाखान्तरोक्तः ॥ ७३ ॥

उदपात्रेणोदुम्बरशाखया वाऽवोक्षति शं वात इति ॥ ७४ ॥

दिशः सर्वा इति मन्त्रान्तः । क्रमप्राप्तेन मन्त्रेण चितिमवोक्षति ॥ ७४ ॥

आरोहणं जपति ॥ ७५ ॥

प्रत्यवरोहणं जपत्येषा ॥ ७५ ॥

उपस्थानेनोपतिष्ठत इदमेवेति ॥ ७६ ॥

वरुणेन चेत्यन्तः । चितिमग्निमुपतिष्ठते ॥ ७६ ॥

वारणशाखां पुरस्तान्निदधाति वरणं इति ॥ ७७ ॥

वनस्पतिरित्यन्तः । वरणो वृक्षविशेषः ॥ ७७ ॥

विधृतिलोष्टमुत्तरतो विधृतिरसीति ॥ ७८ ॥

द्वेषाऽस्सीत्यन्तः । लोष्टमुत्तरतो निदधातीत्यापस्तम्बवैखानसौ ॥ ७८ ॥

शमीशाखां पश्चाच्छमि शमयेति यवं दक्षिणतो यवेति ॥ ७९ ॥

गतमेतत् ॥ ७९ ॥

अथैनमुपतिष्ठते पृथिवीं गच्छान्तरिक्षं गच्छेति ॥ ८० ॥

शरीरैरित्यन्तः । अथैनं चितमग्निमुपतिष्ठत इत्यापस्तम्बवैखानसौ ॥ ८० ॥

जघनेनं चितं कर्ष्वादि समानमाम्नानान्मृदा स्नातीत्येके ॥ ८१ ॥ ( ख० ४ ) ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे ( पितृमेधापरपर्याये ) एकोनत्रिंश-प्रश्ने प्रथमः पटलः ॥ १ ॥

जघनेन चितिं कर्ष्वादि समानमाम्नानात् । अश्मन्वतीरित्यादयः पञ्च मन्त्रा गताः । ततः पूर्वोपक्लृप्तेन पायसादिना सद्यःपक्वेन शतं दश वा ब्राह्मणान् भोजयेत् । समाप्ता लोष्टचितिः ॥ ८१ ॥ ( ख० ४ ) ॥

---

१ ख. ग. °याऽवो° । २ ख. ग. °ति मेतोपरामाति मारामकामनेति वा° । ३ ख. ग. °णो वारयादिति वि° । ४ ख. ग. यव यवयेत्यथै° ५ ख. ग. °म चितिं क° ।

इति सत्याषाढहिरण्यकेशिपितृमेधव्याख्यायां महादेवशास्त्रिकृतायां
प्रयोगवैजयन्त्यामेकोनत्रिंशप्रश्ने प्रथमः पटलः ॥ १ ॥

---

अथ द्वितीयः पटलः ।

---

अत्र मन्त्रकाण्डे क्रमप्राप्तोऽयं यमयज्ञो वक्ष्यते—

यमयज्ञं स्वयं प्रोक्तं प्रवक्ष्ये विधिमुत्तमम् ।
मासि मासि तु कर्तव्यो ह्यन्तकाय बलिस्तथा ॥
मेधाकामोऽर्थकामो वा पुत्रकामस्तु वै द्विजः ।
याम्येऽहनि सनक्षत्रे सर्वान्कामान्समश्नुते ॥
संवत्सरस्य कार्तिक्यां बलिं कुर्वीत यत्नतः ।
अकुर्वन्यस्तु कार्तिक्यां नरके तु निमज्जति ॥
तस्मात्कुर्वीत कार्तिक्यां सर्वकामस्तु वै द्विजः ।
तिलप्रस्थस्य कर्तव्यं गुडमिश्रं तथा हविः ।
एकेन न तु कर्तव्यः कर्तव्यो बहुभिः सह ॥ १ ॥

अस्ति यमयज्ञो नाम बलिः । स च मासि मासि कर्तव्यः । कार्तिक्या यमद्वितीयाया नित्यनैमित्तिककाम्येषु च दर्शनाद्यथाकामी यमयज्ञः कार्यः (ज्ञं कुर्यात्) ॥ १ ॥

हविरुद्धृत्याभिमन्त्र्य हविरादाय नमो ब्रह्मणे प्रजापतये देवेभ्यः( ऋषिभ्यः ) पितृभ्यो यमायेत्युक्त्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्यानिरिणदेशे नदीतीरे समे वाऽन्यस्मिञ्छुचौ देशे तस्य (तस्मिन्) दिक्स्रक्ति वेदिं करोति ॥२॥

निरिणो बिलस्तदभावोऽनिरिणः । स्रक्तिः कोणः । स्पष्टमन्यत् ॥ २ ॥

तस्यां [ उत्तर ]वेद्यां पश्चोत्तरवेद्यां( द्यो ) दिक्स्रक्तयो भवन्ति ॥ ३ ॥

मृन्मयीं सिकताभिर्वा ( बौ० गृ० शे० १-१९-९ ) इति बौधायनः ॥ ३ ॥

---

१ ख. ग. °न्योऽन्त° । २ क. °वेत्रहि का° । ३ ख. ग. °रुद्धृत्याभि° ।

दक्षिणेन करकूपं खात्वोत्तरेणाग्निं प्रतिष्ठाप्य दर्भैः सोत्तरवेदिं संप्रच्छादयति ॥ ४ ॥

करेण कूपः करकूपस्तम् । दर्भैरुत्तरवेदिप्रच्छादनं वेदिसंस्कारार्थमिति ॥ ४ ॥

प्रागग्रैर्दर्भैर्बर्हि[1]स्तीर्य निधाय प्रस्तरं चाऽऽयातु देवः सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता । आसीदतां सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्योमिति यममावाह्य यमे इव यतमाने यदैतं प्र वां भरन्निति च ॥ ५ ॥

प्रवतमिन्द्वे न इति मन्त्रान्तः । आवाहयतीत्यनुवर्तते । स्पष्टमन्यत् ॥ ५ ॥

इमं यम प्रस्तर[3]मिति तिसृभिः प्रस्तरमभिमन्त्र्य सपवित्रपाण्यर्घ्य( स्नान )पाद्याचमनीयोदकानि दत्त्वा सार्वसुरभि गन्धपुष्पधूपदीपनैवेद्यं च यथोपलब्धं ददाति ॥ ६ ॥

इमं यम प्रस्तरम् (तै० सं० २-६-१२) इति तिसृभिर्यममावाहितप्रस्तरम्॥६॥

कृष्णाः प्रतिसराः कृष्णसूत्रं च मध्यमेनान्त( न्ति* )मेन वा पलाशपर्णेन जुहोति यमाय स्वाहा । अन्तकाय स्वाहा । धर्माय स्वाहा । अधर्माय स्वाहा । अन्ताय स्वाहा । अनन्ताय स्वाहा । वैवस्वताय स्वाहा । मृत्यवे स्वाहा । विष्णवे स्वा[6]हा । भूः स्वाहा । भुवः स्वाहा । सुवः स्वाहा । भूर्भुवः सुवः स्वाहेति व्याहृतिपर्यन्तं हविर्जुहोति ॥ ७ ॥ ( ख० १ ) ।

कृष्णप्रतिसरः वासः सूत्रं वा । जुहूहोमो मा भूत्पर्णग्रहणं होमस्य ॥ ७ ॥(ख० १)

* सायंचिर( ४ । ३ । २३ )मिति पाणिनिसूत्रस्थेन 'अन्ताच्च' इति वार्तिकेन डिमचि विहिते सिध्यति, अन्तिममिति । अन्तमेनेति, अपपाठ इवेति भाभाति ।

१ क °रं च प्रस्तरे च आया । २ ख ग °दैतमिति° । ३ ख. ग. °रमा हि सीदेति । ५ ख. ग. °ति त्रिभि । ५ ख. ग °पमाल्यं च । ६ ख. °हा बृहस्पतये स्वाहा भू. ।

अथार्कपर्णान्यौदुम्बरपर्णानि वा निधाय मध्य-
मायामुत्तरवेद्यां यमाय हविर्निवेदयन्ते यमाय
सोमꣳ सुनुत यमाय जुहुता हविः । यमꣳ ह
यज्ञो गच्छत्यग्निदूतो अरंकृतोमिति ॥ ८ ॥

मध्यमायामुत्तरवेद्या बलिनिवेदनस्थानमित्यर्थ. ॥ ८ ॥

प्रतीच्यामुत्तरवेद्यां यमाय घृतवद्धविर्जुहोत प्र च
तिष्ठत । स नो देवेष्वा यमद्दीर्घमायुः प्रजीवसो-
मिति । प्राच्यामुत्तरवेद्यां यमाय मधुमत्तमꣳ राज्ञे
हव्यं जुहोतन इदं नम ऋषिभ्यः पूर्वजेभ्यः
( पूर्वेभ्यः ) पथिकृद्भ्योमिति । दक्षिणस्यामुत्तर-
वेद्याꣳ श्वभ्याꣳ हविर्निवेदयन्ते यौ ते श्वानौ
यमरक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा
ताभ्यामेनं परिदेहि राजन् स्वस्ति चास्मा अ-
नमीवं च धेह्योमिति । उत्तरस्यामुत्तरवेद्या
यमदूताभ्यां हविर्निवेदयन्त उरुणसावसु-
तृपावुलुम्बलौ यमस्य दूतौ चरतो जनाꣳ
अनु । तावस्मभ्यं दृशये सूर्याय पुनर्दत्ता-
मसुमद्येह भद्रोमिति ॥ ९ ॥

सर्वत्र हविर्निवेदयन्त इत्यन्वयः । इमे मन्त्रा एकस्वरेण पठनीयाः । सामिधेन्यादि-
वदन्त ओंकारः । यथा शास्त्रवदित्यर्थः ॥ ९ ॥

योऽस्य कौष्ठ्येति तिसृभिर्यमगाथाभिस्त्रिः
प्रदक्षिणं परिगायन्ति ॥ १० ॥

राजाऽभि तिष्ठतीति मन्त्रान्तः ॥ १० ॥

दक्षिणेन करकूपं गत्वा प्राचीनावीतं कृत्वा सव्यं
जान्वाच्य हविरादाय इषमिषं स्वधा पितृभ्य इति
त्रीनुदकाञ्जलीनुपनिनीय यस्य प्राणान्त्सप्तभिर्व्या-
हृतिभिः सप्त पदानि प्राञ्चो गच्छन्ति ॥ ११ ॥

---

१ ख. ग. ताभ्यां राजन्प°। २ ख. घ °देह्येनꣳ स्व°। ३ ख. ग. °तो वशाꣳ अ°। ४ ख ग. °य मिषन्मिषद्भ्यः स्वधा नम इति पिण्डान्ददाति त्री° । ५ ख. °नीयाऽऽतम्य प्रा° ।

दक्षिणेन करकूपं खात्वा (भ० पि० २–२–४) इति सूत्रे खननविधानात्तं करकूपं गत्वा यमाय पिण्डोदकदानाय। प्राञ्चो गच्छन्ति विष्णुक्रमन्यायवदित्यर्थः। सप्तभिर्व्याहृतिभिः सप्त पदानि ॥ ११ ॥

त्रीन्हि[1] स्वर्गलोकानारूढा भवन्तीति विज्ञायते ॥ १२ ॥

पैङ्ग्यब्राह्मणे समाम्नानादित्यर्थः ॥ १२ ॥

दधिक्राव्णो अकारिषमिति पुनः प्राणानाप्याय्य ॥ १३ ॥

आप्यायनमुदकसेचनम् ॥ १३ ॥

अथैनं (यथेतं) प्रत्येत्यं नमस्कारः कूपेभ्यो नमस्कारः [कूपेभ्यो नमस्कारः] कूपेभ्य इति करकूपमुपस्थाय यस्मै कामाय यम[म]भिवादयन्ते यमो दाधारेत्यनुवाकशेषेण हविरुद्धरन्ति ॥ १४ ॥

अनुवेनतीति मन्त्रान्तः। त एते सप्तापि मन्त्रा यममाहात्म्यप्रतिपादकाः ॥ १४ ॥

नाके सुपर्णमिति प्रवाहयन्ति ॥ १५ ॥

प्रवाहयन्ति उत्थापयन्ति। प्रवाहणं स्नानार्थमवतरणमित्येके व्याचक्षते ॥ १५ ॥

उरुं हि राजा वरुणश्चकार इत्यपोऽवगाहन्ते ॥ १६ ॥

अमात्यसहिताः सर्वे। उरुं हि राजा इत्यनुवाकेन (बौ० सू० १–२१–१७) इति बौधायनः ॥ १६ ॥

आपो हि ष्ठा[4] इति तिसृभिर्मार्जयन्ते ॥ १७ ॥

न न इत्यन्तः। शुद्ध्यर्थं मार्जनम् ॥ १७ ॥

*प्रवक्ताऽवभृथे कलिकलुषमुक्त्वाऽरोगशरीरा भवन्तीति विज्ञायते ॥ १८ ॥

पापनिर्मुक्तो भवतीति श्रुतौ विज्ञायत इत्यर्थः ॥ १८ ॥

यमेन दत्तं त्रित एनंमिति चतसृभिरादित्यमुपतिष्ठते ॥ १९ ॥

---

* प्रवक्तेत्यारभ्य विज्ञायत इत्यन्तो ग्रन्थः ख. ग. पुस्तकयोर्नास्ति।

---

१ क त्रयोभिः स्वर्गे लोका इति सप्त लोका अवरुद्धा भ°। २ क. °त्य नमो म। ३ ख. ग. °कारेत्यनुवाकेनापोऽवगाहयन्ति। ४ ख. हि ष्ठ्याभिर्मा°। ५ ख. ग. °न मायुनगिति। ६ ख. पस्थाय।

यजमानस्येदमुपस्थानमेकवचनान्नामात्यानाम् ॥ १९ ॥

+ उद्वयं तमसस्परीति प्रतिसरमाबध्नीत ॥ २० ॥

रक्षार्थम् ॥ २० ॥

हविषा सर्वप्रायश्चित्तानि हुत्वाऽत्र हविःशेषान्भक्षयन्ति भक्षोऽस्यमृतभक्ष इति ॥ २१ ॥

भक्षयामीति मन्त्रवर्णाद्यजमानस्यैव ॥ २१ ॥

भक्षस्य शेषं निनयन्ति पुत्राय प्रियाय प्रियवादिने पुत्रभार्यायै पुत्रवान्भवति पुत्रवती भवतीति वैवस्वतोऽब्रवीत् ॥ २२ ॥

भुक्तशेषमन्यत्र निनयति । पुत्रार्थिन्यै भार्यायै दद्यादिति वैखानसः ॥ २२ ॥

यमो यष्टारमितः प्रयातमङ्के समाधाय पितेव पुत्रम् । सुहृद्गतिं गमयति तत्र लोकान्निवर्तते [न] चास्य च्छिनत्ति पन्थानं निवर्तते [न] चास्य च्छिनत्ति पन्थानमिति ॥ २३ ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्र (पितृमेधापरपर्याये) एकोनत्रिंशप्रश्ने द्वितीयः पटलः ॥ २ ॥

यमगाथां परिगायति । यमो वैवस्वतः । यष्टारं यमयज्ञकर्तारमितो मृत्युलोकात्प्रयातं यजमानमित्यर्थः । यथा पितेव जनक इव पुत्रमात्मजमङ्के समाधाय विराजत इत्यर्थः । न चास्य भिन्नं पन्थानं गच्छेत् । स्पष्टमन्यत् ॥ २३ ॥ ( ख० २ )

इति सत्याषाढहिरण्यकेशिपितृमेधव्याख्यायां महादेवशास्त्रिकृतायां प्रयोगवैजयन्त्यामेकोनत्रिंशप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

अथ तृतीयः पटलः ।

---

एवं तावदेकः पैतृमेधिको व्याख्यातः प्रयोगः । अथेदानीं तन्त्रानुक्रान्तयोर्दहनपुनर्दहनयोः स्थाने प्रकारान्तरमुत्तरेण ग्रन्थेनोच्यते अथात इत्यादिना—

अथात उत्तरपैतृमेधिकं व्याख्यास्यामः ॥ १ ॥

---

+ उद्वयं तमसस्परीति मन्त्रो न खलु क. ख. पुस्तकयोः ।

तत्राऽऽदौ ब्रह्ममेधाख्यो दहनसंस्कार उच्यत इत्यर्थः ॥ १ ॥

**यं ब्रह्ममेध इत्याचक्षते ॥ २ ॥**

अत्र सहेतुकोऽधिकारः। यस्माद्ब्रह्मसंयुक्तो मेध इति विग्रहः। यज्ञवाचिना मेधशब्देन व्यपदेशसंस्तुतिः। चतुर्होतृसंयुक्तो दहनकल्प इत्यर्थः ॥ २ ॥

अथ पूर्वोक्तेन दहनकल्पेन ब्रह्ममेधस्तुल्यो नेत्याह—

**अथाप्युदाहरन्ति—**

**द्विजातीनामपवर्गोद्ध(अर्थ)तस्तत्त्वदर्शिभिः ।**
**ऋषिभिस्तपसो योगाद्देष्टितं पुरुषोत्तमैः(मम्) ॥**
**होतॄंश्च पितृमेधं च संसृज्य विधिरुत्तरः**
**विहितस्तु समासेन क्रतूनामुत्तमः क्रतुरिति ॥**
***प्रकृतिविकृति(ती) यथा पुरस्तात् ॥ ३ ॥**

पूर्वाचार्या इमौ श्लोकावुदाहरन्ति। उत्तरो विधिर्ब्रह्ममेधाख्यः। होतॄन् दशहोत्रादीन्। चित्तिः स्रुक् (तै० आ० ३–१) इत्यारभ्य चित्तꣳ संतानेन (तै० आ० ३–२१) इत्यन्तानुवाकान् पितृमेधं च संसृज्य समासेन विहितः समुच्चयेन चोदितः। तत्रापूर्वमन्त्रः स्यादिति न्यायेन होतृपितृमेधसमासे होतृकाण्डोऽन्ततो भवतीति वेदितव्यम्। स एष विधिः क्रतूना मध्य उत्तमः श्रेष्ठः क्रतुरिति गौणनिर्देशः। अश्वमेधादिवद्दृष्टिष्टपावनलौकिकफलसाधन इत्यर्थः। स तु मृतस्य फलसाधनो न। कर्तुः संस्कारातिशयजनकत्वात्। संस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति न्यायान्नायं फलोपबन्ध इति वाच्यम्। तत्र कर्तृगामिन एव फलस्यार्थवादत्ववर्णनात्। संसार्यगामिनश्चातिशयस्येष्टत्वात्। तश्चानेन कर्मणाऽपि तत्र विशिष्टपारलौकिकफलप्राप्तियोग्यता भवतीति वेदितव्यम् ॥ ३ ॥

**तस्य सग्रहैर्होतृभिर्होमः ॥ ४ ॥**

तस्य ब्रह्ममेधस्य। सग्रहैरिति विस्पष्टार्थम्। आहवनीये सग्रहं जुहोतीति। तदयमर्थः आहवनीये परे युवाꣳसमिति हुत्वा दशहोत्रादिभिः (पञ्चहोरात्रादिभिः) पञ्चभिर्होतृभिः पञ्च स्रुवाहुतयो होतव्या इति। तदा गार्हपत्ये वाग्घोता (तै० आ० ३–६) इति तत्र नेष्यते। अथैष ऋतुमुखीय इति तस्यर्तुमुखमात्रविषयत्ववचनात्। अत एव चातुर्होते(त्रे)ऽप्यस्यानुपयोगः न च दक्षिणाग्न्यादिषु होम इष्यते। तत्पितृमेधमन्त्र-

---

* 'प्रकृतिविकृती यथा पुरस्तात्' इयं पङ्क्तिः ख ग पुस्तकयोर्न दृश्यते।

संयुक्तहोमाभावात् । हृदयादीना तु वचनसामर्थ्यात्पितृमेधमन्त्ररहितकर्मान्वय इत्यनुसंधेयम् ॥ ४ ॥

## भर्तृसूक्तेन भरणम् ॥ ५ ॥

भर्तृसूक्तम्—भर्ता सन्भ्रियमाणः ( तै० आ० ३–१४ ) इत्यनुवाकः । तेन प्रेतो(तम)मात्या बिभृयुः । यद्यप्ययमनुवाको होतृकाण्डे न तथाऽपीह तत्सनियोगेन विधिनोपयुज्येत । एव नारायणादिष्वपि द्रष्टव्यम् । अत्र द्वितीययोरपि भरणपर्याया भर्तृसूक्तस्याऽऽवृत्तिः । भूननव्यवायात् । चतुर्थे भरणे न भवति । तूष्णीं चतुर्थमादायेति तस्य तूष्णींकस्य प्रसिद्धत्वात् ॥ ५ ॥

## पत्नीभिरुपसंवेशनम् ॥ ६ ॥

पत्नीति सेनेन्द्रस्य ( तै० आ० ३–९ ) इत्यनुवाकस्थाने यजूꣳषि कथ्यन्ते । पत्नीर्व्याचष्ट इत्यादौ(तत्र) व्यपदेशात् । उपनिवेशनं पत्न्या उपनिपातनम् । इयं नारी पतिलोकमित्यनयर्चा सेनेन्द्रस्येत्यादेरनुवाकस्य समुच्चयः । अपत्नीकस्य तु नायमप्यनुवाको युक्त उपयुज्यते ॥ ६ ॥

## दक्षिणाप्रतिग्रहैर्निर्मार्गः ॥ ७ ॥

निर्मार्गेदक्षिणाशब्देन हिरण्यदानादयो यज्ञे दक्षिणा इह गृह्यन्ते तैर्मन्त्रैः । प्रतिगृह्यन्त इति प्रतिग्रहाः । ते च देवस्य त्वा० ( तै० आ० ३–१० ) इत्यनुवाके समाम्नाताः । समाप्रभृति समानोदर्काः सप्तदश मन्त्राः । अग्नये हिरण्यमित्यस्य स्थाने सोमाय वास इत्यादयो द्रष्टव्यदेवतानिर्देशाः प्रयुज्यन्ते । कल्पान्तरे विशेष उक्तः । वाससी ग्रास्त्वाकृन्तन्नित्यादि युक्तं दैवतं यस्य पुरस्तादनुषज्यते । देनि दक्षिणा(णे)ग्नास्त्वेति रथे राजा त्वेत्यस्य पुरस्ताद्वैश्वानरः प्रत्नथेति । एतेषा सुवर्णꣳ हस्ता० धनुर्हस्ता० मणिꣳ हस्ता० इत्यादीना तिसृणामन्यतमयर्चा समुच्चयः । निर्मार्गो हस्तसंमार्गः ॥ ७ ॥

## हृदयैर्हिरण्यशकलान् ॥ ८ ॥

सुवर्णं घर्मम् ( तै० आ० ३–११ ) इत्यादिमन्त्रपञ्चकम् । सुवर्णं घर्ममिति दशहोतुर्हृदयम् । ब्रह्मेन्द्र चतुर्होतु. । शतं नियुत इति पञ्चहोतुः । सुवर्णं कोशमिति षड्ढोतुः । इन्द्रो राजा जगत इत्यनुवाकशेषः सप्तहोतुः । तत्र पञ्चानामेषा सप्तसूपयोज्यत्वात् । अल्पीयासो मन्त्रा इति न्यायेन त्रयोत्तमयोरावृत्तिः । यथाऽप्तोर्यामषोडशीस्तोमभागयोः । तदयं विभागः । आद्यमास्ये द्वितीयं च तृतीयं च द्वे नेत्रयोः कर्णयोर्मध्यमोपान्ते पञ्चमं द्वे नासिकयोः—यद्वा—हृदयं यजूꣳषि ( तै० ब्रा० २–१–२ ) इत्यादौ यदुक्त

हृदयमिति तदिदानीमुच्यते—सुवर्णं घर्ममिति । अयमनुवाको होतृहृदयाख्यः । होतृणा पारमार्थ्यकथनात् । सर्वत्र दशहोत्रादिविभूतिभिन्नपरमात्मरूपेणेष्टकाः स्तूयन्ते । अध्यात्मपक्षे तु परमात्मैव ॥ ८ ॥

संभारयजुर्भिः पात्रचयनम् ॥ ९ ॥

अग्निर्यजुर्भिः ( तै० आ० ३–८ ) इत्यादीन्येकविंशतिसंभारयजूंषि । तेषा प्रतिपात्रं विभज्योपयोगः। एकमन्त्राणि कर्माणीति न्यायात्तस्यात्र प्रकृतिसंभवात् । अत एवास्य विधेः पितृमेधमन्त्रसंयुक्तचमसमात्रविषयत्वं नेष्यते । विभज्य विनियोगाभावे हि स ( तं ) न्यायमपि नियोज्यस्य तु सर्वान्वयात् । तद्विरोधे सति पय(यो)विषयत्वं न युज्यते । अत्रेडाप्राशित्रहरणादेः संभेद्यभागयोर्यजुर्भेदो विधानभेदात् । समाप्ते त्वनुवाके पुनरभ्यासः । यथा गोचित्या—अग्ने गोभिरित्यादेशः । चमसे त्विममग्नेश्चमसमित्यनेन क्रमप्राप्तस्य यजुषः समुच्चयः ॥ ९ ॥

ज्योतिष्मतीभिरुपोषणम् ॥ १० ॥

ज्योतिष्मत्याख्यानामिष्टकानामुपधानमन्त्रा ज्योतिष्मत्यः । ज्योतिष्मतीं त्वा सादयामि ( तै० आ० ३–१९ ) इत्याद्यग्निकाण्डानुवाकः । तस्य मैनमग्ने विदह शृतं यदेत्याभ्यां समुच्चयः ॥ १० ॥

नारायणाभ्यामुपस्थानम् ॥ ११ ॥

नारायणौ पुरुषमेधप्रश्नस्योत्तरावनुवाकौ । सहस्रशीर्षा पुरुषः । अद्भ्यः संभूतः ( तै० आ० ३–१२ । १३ ) इत्येतावनुवाकौ । तयोः सूर्यं ते चक्षुरित्यनया समुच्चयः ॥ ११ ॥

ब्राह्मण एकहोतेति चानुमन्त्रणम् ॥ १२ ॥

अजो भागस्तपसेत्येतयर्चोऽस्यानुवाकस्य समुच्चयः ॥ १२ ॥

चित्तᳪ संतानेनेति हविराहुतिः ॥ १३ ॥

हविराहुत्य ( इत्य )र्थः । राजगवीमासानि दशधा विभज्याग्नये रयिमत इत्येकभागं हुत्वा चित्तᳪ संतानेनेत्यनुवाकस्य नवभि. शरीरहोमो यजुर्भिः प्रतिमन्त्रमितरान्भागाञ्जुहुयात् ॥ १३ ॥

प्रयासाय स्वाहेति स्रुवाहुतीः ॥ १४ ॥

सपैतृमेधिकीनेव स्रुवाहुतीर्हुत्वा प्रयासाय स्वाहेत्यादिभिर्दिवाकीर्त्याख्यैर्द्वादशभिः शरीरहोमयजुर्भिः प्रतिमन्त्रं स्रुवाहुतयो होतव्या इत्यर्थः ॥ १४ ॥

**मृत्युसूक्तेनानुशꣳसनम् ॥ १५ ॥**

मृत्युसूक्तं हरिꣳ हरन्तं ( तै० आ० ३–१५ ) इत्यादि सूक्तं षडृचं प्रकेतुनेत्यस्यान्ते सह्यानुशंसेत् ॥ १५ ॥

**सौम्यं(म्या) संगाहनम् ॥ १६ ॥**

सौमी सोमदेवत्या ऋगत्रानुवाकसाहचर्यादनुवाकसौमी प्रत्येतव्या । सा त्वाप्यायस्व मदिन्तम ( तै० आ० ३–१७ ) इत्याग्निकाण्डे समाम्नाता । तस्या अश्मन्वती रेवतीत्येतयर्चा समुच्चयः ॥ १६ ॥

**सौर्येणाऽऽदित्योपस्थानम् ॥ १७ ॥**

सूर्यदेवत्यः । अत्राप्यनुवाकग्रहण पूर्ववत् । ततश्चोद्वयं तमसस्परीत्येतया तरणिर्विश्वदर्शतः ( तै० आ० १–३–१६ ) इत्यस्य ग्रहकाण्डानुवाकस्य समुच्चयः ॥ १७ ॥

**ईयुष्ट इत्यवगाहनम् ॥ १८ ॥**

अत्राप्यनुवाकग्रहणं पूर्ववत् । ईयुष्टे य ( तै० आ० ३–१८ ) इत्यनुवाकात्मिको य ईयुष्टिस्तस्य धाता पुनात्वित्यनया समुच्चयः । अत्र दहनकल्पस्यैव विधेर्मानत्वात्तदङ्गभूत एव संगाहनादौ सौम्यादीना समुच्चय इति द्रष्टव्यम् ॥ १८ ॥

**अत ऊर्ध्वं पैतृमेधिकमा यवोदनप्राशनान्तान् ॥ १९ ॥**

समानमत ऊर्ध्वं पैतृमेधिकं कर्म । अतः प्रथमादवगाहनान्ताद्यवोदनप्राशनान्तान्विधीनिति मन्त्रः । समानमत ऊर्ध्वं पैतृमेधिकं कर्मेत्यापस्तम्बः ॥ १९ ॥

**तान्परं ब्रह्मेत्याचक्षते ॥ २० ॥**

तांश्चतुर्होतॄन् । परब्रह्मशब्दः सारभूतमन्त्रवाची । ब्रह्म वै चतुर्होतारः ( तै० ब्रा० ३–१२–५ ) इति । श्रुतिसारभूतमन्त्रा इत्याचक्षते त्रैविद्यवृद्धाः । एतद्वै देवाना परमं गुह्यं ब्रह्म यच्चतुर्होतार इति च श्रुतेः ॥ २० ॥

**तानसाधारणे श्मशाने प्रयुञ्जीत ॥ २१ ॥**

परमं गुह्यमित्यादिना श्रुतश्चतुर्होतृब्रह्मशब्दो नैककुलसाधारणे श्मशाने प्रयुञ्जीत । किंतु प्रेतकालस्यासाधारण एवेत्यर्थः ॥ २१ ॥

**नानाव्यार्ये नाश्रोत्रियाय ॥ २२ ॥**

---

१ ख एतान् । २ ख. °य द्वि° ।

आचार्यादन्यस्मै प्रेताय न प्रयुञ्जीत । अथवा श्रोत्रियेभ्यः सर्वेभ्यो वेदार्थविद्भ्यः प्रयुञ्जीत न तु कदाचिदश्रोत्रियाय ॥ २२ ॥

द्विजातीनामेवं संतिष्ठते ब्रह्ममेधः ॥ २३ ॥ ( ख० १ ) ॥

इति सत्याषाढहिरण्यकेशिश्रौतसूत्र( पितृमेधापरपर्याये ) एकोनत्रिंश-प्रश्ने तृतीयः पटलः ॥ ३ ॥

परिसमाप्यते ब्रह्ममेधः ॥ २३ ॥ ( ख० १ ) ॥

इति सत्याषाढहिरण्यकेशिपितृमेधव्याख्याया महादेवशास्त्रिकृताया प्रयोगवैजयन्त्या मेकोनत्रिंशप्रश्ने तृतीयः पटल. ॥ ३ ॥

अथ चतुर्थ. पटल ।

अथ मरणसंशये विधिमाह—

अथाजस्राणा द्व्यहं त्र्यहं षडहं द्वादशाहं वा धारयेद्यावद्वा[1] मरणसंशयं मन्येत ॥ १ ॥

यावन्मरणसंशयं मन्यते यजमानोऽध्वर्युर्वा । प्रातरुद्धरेदिति प्रतिकर्मोद्धरणविधाना-द्धार्यो गतश्रिय आहवनीय इत्यनेन गतश्रीकत्रितयस्यैवाजस्रमाहवनीयधारणविधाना-त्तदितरस्य नाऽऽहवनीयधारणमुक्तम् । अथेदानीमाद्वादशाहमजस्राणामग्नीनां धारये-त्कर्मार्थम् ॥ १ ॥

असंशयेऽजस्रं[3] विरम्याग्नय आयुष्मते पुरोडाश-मष्टाकपालं निर्वपेच्छतकृष्णला पञ्चहविषां(षं) वा यो ज्योगामयावीत्युक्तम् ॥ २ ॥

येन मरणाद्विमुक्तः स्वजस्रं विरम्याग्नय आयुष्मतेऽष्टाकपालं निर्वपेच्छतं कृष्णलं (लानि) तुलितानि यस्याः समष्टेः सा कृष्णलसमष्टिः शतकृष्णला । ता प्रजापतिदेव-ताका निरवपत ( तै० स० २--३-२ ) इत्यादिगता ॥ २ ॥

पुरस्तादायुष्मत्या पाथिकृत्या वा यजेत ॥ ३ ॥

पुरस्ताद्द्वयोरप्येका ॥ ३ ॥

*(ग्रामेऽप्येके पाथिकृतीं समामनन्ति बहिष्ठो वान-मस्थो वाऽरण्यमधितिष्ठेत ग्रामं वा प्रविशेद्राज्ञाऽ-

* कुण्डलान्तर्गतो ग्रन्थः ख. ग पुस्तकस्थः ।

१ ख. ग. रयति व° । २ ख °द्वा स° । ३ ख. ग °जस्रेविं° ।

नुमतो ब्राह्मणैश्च सह वनधान्येनापि वा नाज-
स्रान्कुर्वीत प्रागिष्टगमनाद्विहारꣳ साधयेत् ) ।
प्रेतेऽपि विहरणमेके समामनन्ति ॥ ४ ॥

अयं कल्पान्तरोक्तविधिः ॥ ४ ॥

+( तदनर्धुकं प्रयाजा इति विज्ञायते । उदगयने
प्रमीताः सौर्येण पथा देवलोकं यान्ति दक्षिणा-
यने सौम्येन पितृलोकमिति विज्ञायते ) । उदग-
यनापूर्यमाणपक्षे दिवा कृत्वन्ते श्रेयो मरणमि-
त्युपदिशन्ति ॥ ५ ॥

अथाप्युदाहरन्ति—शरीरदायादा ह वा अग्नयो भवन्तीति । मरणे श्रेयोवाप्तिः । य एवं विद्वानुदगयने प्रमीयते सौर्येण पथा स्वर्गं लोकमेति । अथ यो दक्षिणे प्रमीयते चान्द्रमसेन पथा पितृलोकमेतीति विज्ञायते ( बौ० पि० २-७-१९ ) इति बौधायनः । मरणे श्रेयोवाप्तिः । यस्मिन्क्षणे मकरं गच्छति सूर्यस्ततःप्रभृति षण्मासा उदगयनं, तस्मिन् । आपूर्यमाणस्य चन्द्रस्य यः पक्षः स तथोक्तः । स हि मासस्य च पक्षस्य च कर्ता । अथवाऽऽपूर्यमाणश्चासौ पक्षश्चाऽऽपूर्यमाणपक्षः । स हि चन्द्र-रश्मिभिरापूर्यते शुक्लपक्ष इति ॥ ५ ॥

यदि पूर्वपक्षरात्रौ मरणꣳ शङ्केत सायमाहुतिꣳ
हुत्वा तदैव प्रातराहुतिं जुहुयात् ॥ ६ ॥

तस्यामेव रात्रावित्यर्थः ॥ ६ ॥

यद्यपरपक्षे सायंप्रातराहुतिभिरेनं पूर्वपक्षं नयेत् ॥ ७ ॥

अपरपक्षः कृष्णपक्षः । मरणं शङ्केतेति शेषः । एनं कालम् ॥ ७ ॥

दर्शेष्टिं च कुर्यात् ॥ ८ ॥

यदि संनयतश्चेत्सद्य एव हविरुत्पादनं न यवाग्वाऽग्निहोत्रम् । तस्य कालाभावात् । यदा मरणं शङ्केत तदा दर्शेष्टिं यजेतेत्यापस्तम्बवैखानसौ ॥ ८ ॥

यदीष्ट्यभावे प्रधानदेवताभ्यश्चतुर्गृहीतेनाऽऽज्येनै-
कैकस्यै देवतायै पुरोनुवाक्यामनूच्य याज्यया
जुहुयात् । ( एवं सर्वास्वापत्सु ) ॥ ९ ॥

---

+ वर्तुलकंसस्थो ग्रन्थ ख. ग. पुस्तकस्थ ।

---

१ ग, °वा कृत्व° । २ ख दर्शं च ।

